॥ श्रीः ॥

चौखम्भा सुरभारती ग्रन्थमाला
२३६

श्रीमद्गङ्गेशोपाध्यायविरचितः

# प्रामाण्यवादः

( प्रथमविप्रतिपत्त्यन्तः )

श्रीरघुनाथशिरोमणिविरचितया दीधित्या
श्रीगदाधरभट्टाचार्यकृतया दीधितिप्रकाशिकया च समलङ्कृतः

तथैव

'कृष्णाख्य'-संस्कृतव्याख्यया विभूषितः

व्याख्याकारः
पं० श्रीज्वालाप्रसाद गौड



चौखम्भा सुरभारती प्रकाशन
वाराणसी

प्रकाशक
चौखम्बा सुरभारती प्रकाशन
( भारतीय संस्कृति एवं साहित्य के प्रकाशक तथा वितरक )
के० ३७/११७, गोपालमन्दिर लेन
पो० बा० नं० ११२९, वाराणसी २२१००१
दूरभाष : ३३३४३१


प्रथम संस्करण १९९२ ई०
मूल्य ६०–००

अन्य प्राप्तिस्थान
चौखम्बा संस्कृत प्रतिष्ठान
३८ यू. ए., बंगलो रोड, जवाहरनगर
पो० बा० नं० २११३
दिल्ली ११०००७
दूरभाष : २३६३९१

*

प्रमुख वितरक
चौखम्बा विद्याभवन
चौक ( बनारस स्टेट बैंक भवन के पीछे )
पो० बा० नं० १०६९, वाराणसी २२१००१
दूरभाष : ३२०४०४

मुद्रक
श्रीजी मुद्रणालय
वाराणसी

THE
CHAUKHAMBA SURBHARATI GRANTHAMALA
236



# PRĀMĀṆYAVĀDA

OF

## ŚRĪMAD GAṄGEŚOPĀDHĀYA

*( Upto Prathamvipratipatti )*

*Along with*
Didhiti of Raghunath Shiromani & Didhitiprakashika of
Shri Gadadhara Bhattacharya

Edited with
'Krishna' Sanskrit Commentary

By

Pt. Jwala Prasad Gaud
Ex. Principal : Sanyasi Sanskrit Mahavidyalaya, Varanasi



CHAUKHAMBA SURBHARATI PRAKASHAN
VARANASI

# भूमिका

## श्रीगुरुः शरणम्

इदानीं प्रामाण्यवादग्रन्थस्य प्रयोजनसम्पादनप्रतिपादनपरा युक्तिस्वरूपा भूमिका लिख्यते मया टीकाकर्त्रा इति ।

स्वार्थमनपेक्ष्य परदुःखप्रहाणेच्छावान् मुनिः दुःखपङ्कनिमग्नं संसारार्तिमजातं समुद्दिधीर्षा विषयीकृत्य निम्नोद्धृताऽष्टादशविद्यास्थानेष्वभ्यर्हिततमामान्वीक्षिकीं प्रणिनाय ।

तत्र च प्रवेष्टुकामान् लक्ष्यीकृत्य एकविंशतिदुःखध्वंसरूपां मुक्तिम् आहोस्वित् संसारोपरमरूपाम्, अथवा गतसमस्तक्लेशतद्वासनस्याऽनावरणज्ञानस्य सुखैकतानस्याऽऽत्मन उपरिदेशावस्थानरूपां मुक्तिं समीहमानानां कृते 'प्रमाणादीनां तत्त्वज्ञानान्निःश्रेयसाधिगमः' इत्यादावसूत्रयत् ।

आन्वीक्षिकी = न्यायविद्या = न्यायशास्त्रमित्यर्थः । सेयमान्वीक्षिकी प्रमाणादिपदार्थैर्विभज्यमाना सती—

'प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम् ।
आश्रयः सर्वधर्माणां विद्योद्देश्ये प्रकीर्तिता' ॥

न्यायशास्त्रानुसारं सन्ति चतस्रो विद्याः । ताश्च यथा—( १ ) आन्वीक्षिकी, ( २ ) त्रयी, ( ३ ) वार्ता, ( ४ ) दण्डनीतिस्वरूपा इति । इमाश्चतस्रो विद्या एव न्यायशास्त्रे विद्यास्थाने कथिताः सन्ति ।

तदर्थश्च—( १ ) आन्वीक्षिकी=न्यायविद्या=न्यायशास्त्रम् । ( २ ) त्रयी= यजुर्वेद-ऋग्वेद-सामवेदेति वेदविद्या । ( ३ ) वार्ता = नीतिशास्त्रम् । ( ४ ) दण्डनीतिः = अर्थशास्त्रम् इति । अत्र विषये मनुनाऽपि प्रकारान्तरेणाऽयमेव विषयो दर्शितः । यथा—

'त्रैविद्येभ्य त्रयीं विद्यां दण्डनीतिं च शाश्वतीम् ।
आन्वीक्षिकीं चात्मविद्यां वार्तारम्भांश्च लोकतः ॥'

भरद्वाजेनापि नैयायिकेन विदुषा प्रोक्तं यत्—

चतस्र इमा विद्याः सन्ति । ताश्च—( १ ) पृथक् प्रस्थानाः अग्निहोत्रहवनादिप्रस्थाना त्रयी । ( २ ) हलशकटादिप्रस्थाना वार्ता । ( ३ ) स्वामी-अमात्यभेदानुविधायिनी दण्डनीतिः । ( ४ ) संशयादिभेदानुविधायिनी आन्वीक्षिकी=न्यायविद्या इति ।

पुराणेष्वपि विद्यानां विचारः—

पुराणशास्त्रवेत्तारो विद्वांसस्तु चतुर्दश विद्याः सन्ति अष्टादश चापि सन्ति विद्या इति वदन्ति । ताश्च यथा—

वेदाङ्गभूतानि षट् शास्त्राणि। यजुर्वेदः, सामवेदः, ऋग्वेदः, अथर्ववेदश्चेति चत्वारो वेदाः। मीमांसा, न्यायविस्तरः, धर्मशास्त्रम्, पुराणञ्चेति सन्ति चतुर्दश विद्या इति।

तथा—(१) आयुर्वेदः, (२) धनुर्वेदः, (३) गान्धर्ववेदः, (४) अर्थशास्त्रञ्चेत्येतत् साहचर्यावच्छिन्नत्वेन अष्टादश विद्याः सुसम्पन्ना भवन्ति।

तथा चोक्तम्—

'अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः।
धर्मशास्त्रं पुराणञ्च विद्या ह्येताश्चतुर्दश॥
आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रयः।
अर्थशास्त्रं च विज्ञेयं विद्या ह्यष्टादशैव तु॥'

तत्रापि प्रेक्षावतां प्रवृत्तये 'लक्षणप्रमाणाभ्यां वस्तुविनिर्णयः' इति प्राचीनाचार्यचरणोक्तिं हृदि निधानेनैव प्रमाणाधीना सर्वेषां व्यवस्थितिरिति निश्चीयते इत्यतः प्रमाणतत्त्वमत्र विविच्यते इति।

ननु प्रमाणादीनां तत्त्वं प्रतिपादयदान्वीक्षिकीशास्त्रमिदं मोक्षसाधनीभूततत्त्वज्ञानप्रतिपादनद्वारा निःश्रेयसेन सम्बध्यते। तन्न समीचीनम्। प्रमाणतत्त्वावधारणस्याऽशक्यत्वात्।

यतस्तत् प्रमाणतत्त्वावधारणं प्रमातत्त्व=प्रमात्व=प्रामाण्यावधारणाधीनम्। तत् प्रमातत्त्वावधारणञ्च प्रमात्वाश्रयग्राहकसामग्रीतोऽपि नहि भवितुं शक्नोति, नापि च संवादिप्रवृत्तिजनकत्वलिङ्गकानुमितिसामग्रीतोऽपि भवितुं शक्नोति। यतः संशयानुपपत्तिरूपदोषदर्शनात् अनवस्थारूपदूषणदर्शनाच्चेति बोध्यम्।

अर्थात् 'प्रामाण्यं प्रामाण्याश्रयग्राहकसामग्रीग्राह्यत्वाभाववत् अनभ्यासदशायां सांशयिकत्वात् अप्रामाण्यवत्'। तादृशसामग्रीग्राह्यत्वे=स्वतोग्राह्यत्वे, प्रामाण्यसंशयो न स्यात् यतस्तत्र ज्ञाननिश्चयकारणीभूतादेव तन्निश्चयादिति बाधकतर्कोऽनुसन्धेय इति गदाधरः प्राचीनाचार्यचरणोक्तिमनुसृत्य ब्रूते। अर्थात् प्रामाण्यस्य ज्ञानग्राहकसामग्रीग्राह्यत्वे 'अयं घटः' व्यवसायज्ञानान्तरम् इदं ज्ञानं प्रमा न वेति सर्वानुभूतसंशयस्यानुपपत्तिः स्यात्, निश्चिते संशयायोगात्।

एवं प्रामाण्यस्य परतोग्राह्यत्वे अर्थात् संवादिप्रवृत्तिजनकत्वलिङ्गकानुमितिग्राह्यत्वे अनवस्था स्यात्। तथाहि—अप्रामाण्यज्ञानास्कन्दितज्ञानात् प्रवृत्त्याद्यनुत्पत्त्या गृहीतप्रामाण्यकज्ञानत्वेनैव ज्ञानस्य प्रवृत्तिहेतुता वाच्या।

प्रकृते प्रामाण्यग्रहस्यापि अप्रामाण्यज्ञानास्कन्दितस्याऽकिञ्चित्करत्वात् तत्रापि गृहीतप्रामाण्यकत्वमवश्यं निवेश्यम्। तथा चेत्थं वदतः प्रामाण्यग्रहपक्षे प्रवृत्त्यादिजनकीभूते ज्ञाने अनुमानाद्यधीन एव प्रामाण्यग्रहोऽपेक्षणीयः। एवं तत्रापि पुनः तथाविधप्रामाण्यग्रहान्तरमपेक्षणीयमिति रीत्याऽवस्था सुस्पष्टैवेति भावः।

एवं प्रवृत्तिजनकीभूतज्ञानादौ आनुमानिक एव प्रामाण्यग्रहो वाच्यः। तत्र च गृहीतप्रामाण्यकपरामर्शादिज्ञानादिज्ञानापेक्षा भवति। तत्र च पौनःपुन्येन जायमानः प्रामाण्यग्रहोऽपि गृहीतप्रामाण्यकलिङ्गान्तरादित्येवं क्रमेणाऽनवस्थाऽत्रापि पक्षे सुस्पष्टैवेति विज्ञेयम्।

इत्थञ्च प्रमात्वावधारणस्याऽशक्यतया सूत्राधीनप्रयोजनवत्ताज्ञाने, इष्टसाधनताज्ञाने प्रमाणतत्त्वज्ञानं मदिष्टसाधनम् इत्याकारके निश्चीयमानप्रामाण्यकत्वं न सम्भवति।

तथा सति प्रथमसूत्रान्निश्चितप्रामाण्यकप्रमादिपदार्थानां 'तत्त्वज्ञानान्निःश्रेयसाधिगमः' इत्यादि गङ्गेशोपाध्यायोक्तिमनुसृत्य तादृशप्रमाणादिपदार्थतत्त्वज्ञानधर्मिकेष्टसाधनताज्ञानं जायते, तदनन्तरञ्च पुनः प्रागुक्तक्रमेण ग्रन्थश्रवणे प्रवृत्तिर्भवति, ततो निःश्रेयसमित्येवम्प्रकारेण शास्त्रमिदं निःश्रेयसप्रयोजकीभूतं भवति।

परन्तु प्रवृत्तेरभावेन निःश्रेयसप्रयोजकत्वं सर्वथाऽसम्भवीति। यतः वक्ष्यमाणदिशा प्रमात्वनिश्चयासम्भवेन निश्चितप्रामाण्यकतादृशेष्टसाधनताज्ञानाभावादिति। तथा च प्रवृत्त्यभावेन निःश्रेयसाभावाद् व्यर्थमेव स्यात् शास्त्रप्रणयनमिति भावः। तन्न साम्प्रतम् इति।

प्रमाणतत्त्वज्ञानं मदिष्टसाधनमिति ज्ञानं प्रमा न वेति जायमानसंशयानन्तरम् इदम् इत्थमेवेत्यवधारणस्य सफलप्रवृत्तिजनकीभूतस्य प्रामाण्यनिश्चयाधीनत्वादिति तु परमार्थः।

एतावता प्रबन्धेन प्रवृत्तौ प्रामाण्यनिश्चयाऽपेक्षिततया तस्य च स्वतः परतो वाऽसम्भवात् प्रामाण्यनिश्चयानुपपत्तिं वदतो माध्यमिकस्य मतं निराकर्तुं मीमांसकत्रयस्य=गुरुमिश्रभट्टानां नयेन प्रामाण्यनिश्चयस्य स्वतोग्राह्यत्वम्=ज्ञानग्राहकसामग्रीग्राह्यत्वम्।

अर्थात् अयं घट इत्याकारकस्य व्यवसायज्ञानस्य यो ग्रहः स च व्यवसायविषयविषयकोऽनुव्यवसायरूपो 'घटमहं जानामि' इत्याकारको मिश्रसम्मतो ग्रहः, भट्टमते च तादृशो ग्रहः—'इयं ज्ञातता घटत्ववद्विशेष्यकत्वे सति घटत्वप्रकारकज्ञानजन्या ज्ञाततात्वात्, तादात्म्येन ज्ञातताया' इत्याकारकज्ञाततालिङ्गकाऽनुमित्यात्मको ग्रहस्तज्जनिका या सामग्री तज्जन्यग्रहविषयत्वस्य पक्षीभूते प्रामाण्ये सत्त्वात्।

इदमत्रावधेयमस्ति—घटादिज्ञानाद् घटादेः प्रकाशो जायते, अनुव्यवसायाच्च घटादेर्विषयस्य, व्यवसायस्य आत्मनश्च प्रकाशो भवति। परन्तु त्रिपुटीप्रकाशेऽपि स्वस्य अनुव्यवसायस्य च प्रकाशो न भवति, किन्तु अनुव्यवसायविषयकादनुव्यवसायात् प्रकाशो भवति। स च घटज्ञानज्ञानवानहम्, आहोस्वित् घटज्ञानमहं जानामि इत्याकारकः। तत्रापि द्वितीयोऽनुव्यवसायः पुनरपि अप्रका-

शित एव स्यात् । तस्य च प्रकाशस्तृतीयानुव्यवसायेन भविष्यति । स चास्ति घटज्ञानस्य ज्ञानमहं जानामि इत्येवंरूप: ।

एतावांस्तु विशेष: यत् न्यायनये घट-पटादिज्ञानस्य घट-पटादिव्यवहारे प्रकाशोऽपेक्ष्यते, न तु तदीये ज्ञाने इति । तथैव घट-पटादिज्ञानव्यवहारे अनुव्यवसायरूप: प्रकाशोऽपेक्ष्यते, नहि तत्र अनुव्यवसायस्य प्रकाशोऽपेक्षणीयो भवति । इत्थश्च सुस्पष्टमिदं वर्तते यद् यस्य व्यवहार: स्यात् तत्र तस्यैव ज्ञानमपेक्षणीयं भवति । घट-पटादिविषयस्य प्रकाशकं यज्ज्ञानं तत्तु प्रकाशितं भवेत् अप्रकाशितं वेति नात्र विचार्यते । अतो विषयप्रकाशनार्थं ज्ञानस्य प्रकाशो नाऽपेक्षणीय: ।

न्यायनये च ज्ञाननिष्ठं प्रामाण्यमनुमानगम्यं भवति तस्माज्ज्ञाने प्रामाण्यम् अनुमेयं भवति । तथाहि—'इदं घटज्ञानं प्रमा=घटत्ववति घटत्वप्रकारकम्, सफलप्रवृत्तिजनकत्वात्=संवादिप्रवृत्तिजनकत्वात्, यन्नैवं तन्नैवं यथाऽप्रमा' इति ।

तच्च प्रमात्वम्=प्रामाण्यम्, याथार्थ्यम्—

'भ्रमभिन्नत्वे सति ज्ञानत्वम्' । तथा चोक्तम्—

'भ्रमभिन्नन्तु ज्ञानमत्रोच्यते प्रमा'—

अथवा 'तदभाववन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशालिज्ञानभिन्नत्वे सति तत्प्रकारकज्ञानत्वरूपं प्रमाविशेषलक्षणमिदम्' । इत्थश्च 'इदं रजतम्' इति इदन्त्वावच्छिन्नशुक्तिनिष्ठविशेष्यताकरजतत्वप्रकारकज्ञानस्य शुक्तिनिष्ठ इदन्त्वाभाववद्विशेष्यक इदन्त्वप्रकारकज्ञानभिन्नत्वात्तस्येदन्त्वांशे प्रमात्वमुपपद्यते । रजतत्वाभाववद्विशेष्यकरजतत्वप्रकारकज्ञानभिन्नत्वाभावान्न तस्य रजतत्वांशे प्रमात्वमिति । अपि च अनुगतं प्रमात्वलक्षणमाह—

विशेष्यताविशिष्टान्यप्रकारत्वानिरूपकज्ञानभिन्नयत्किञ्चित्प्रकारकज्ञानत्वं प्रमात्वम् । वै० स्वनिरूपितत्व-स्वाश्रयनिष्ठाऽधिकरणतानिरूपितनिरूपकतावदन्यत्वोभयसम्बन्धेन । निरूपकतावत्ता च स्वसामानाधिकरण्य-स्वावच्छेदकावच्छिन्नत्व-स्वावच्छेदकसम्बन्धावच्छिन्नत्व-स्ववृत्तित्वैतच्चतुष्टयसम्बन्धेन । स्ववृत्तित्वञ्च स्वानवच्छेदकानवच्छिन्नत्वसम्बन्धेन । सम्बन्धव्यावृत्तिश्च स्वयमूह्येत्यस्मद्गुरुचरणा: ।

विनयावनत:

**ज्वालाप्रसाद गौड:**

॥ श्रीः ॥

चिन्तामणि-दीधितिविभूषित-

श्रीमद्गदाधरभट्टाचार्यविरचितः

# प्रामाण्यवादः

( प्रथमविप्रतिपत्त्यन्तः )

* दीधितिः *

गिरं गुरूणां हृदये निधाय विधाय सिद्धान्तसरोऽवगाहम् ।
संक्षेपतः श्रीरघुनाथनामा चिन्तामणेर्दीधितिमातनोति ॥

* गादाधरी *

नत्वा नन्दतनूजसुन्दरपदद्वन्द्वं गुरोरादरा-
दुर्वीमण्डलमण्डनायितयशोराशेरशेषा गिरः ।
सङ्क्षिप्तोक्त्यतिदक्षदीधितिकृतः प्रत्यक्षचिन्तामणे-
र्व्याख्यां व्याकुरुते गदाधरबुधो मोदाय विद्यावताम् ॥ १ ॥

गुरुकीर्तनरूपं मङ्गलं कुर्वाण एव स्वीयग्रन्थे प्रेक्षावत्प्रवृत्त्यर्थं तदुत्कर्षं दर्शयति— गिरमिति । हृदये मानसे, निधानं सम्बन्धसम्पादनम्, मनसि गुरुगिरः सम्बन्धः स्वार्थज्ञाने

* कृष्णा *

हैयङ्गवीनमश्नन्तं चलन्तं जानुपाणिना ।
कृष्णं मन्दस्मितोल्लासिवदनं सततं भजे ॥ १ ॥

श्रीगुरुः शरणम् । नत्वेति । तथा च श्रीकृष्णपदद्वन्द्वनमनोत्तरकालीनम् अथ च तादृशगुरूच्चरिताशेषवाक्यार्थस्मरणोत्तरकालीनं विद्यावत्समवेतसुखजनकं च यद्दीधितिकारकर्तृकचिन्तामणिविवरणस्य विवरणं तत्कर्ता गदाधर इति बोधः। सङ्क्षेपो द्विविधः— शब्दसङ्क्षेपोऽर्थसङ्क्षेपश्च । तत्र दीधितिकृतः शब्दसङ्क्षेपवैलक्षण्यं प्रसिद्धमेवेति स एवात्र विवक्षितो नार्थसङ्क्षेपः । गुरुकीर्तनरूपमिति । कीर्तनं च तदुत्कर्षबोधतात्पर्येण तन्नामोच्चारणम् । कुर्वाण इति । गुरुनामोच्चारणाभिन्नमङ्गलोच्चारणं कुर्वाण इति भावः । तदुत्कर्षस्वीयग्रन्थोत्कर्षं, निधायेत्यत्र विधायेत्यत्र च क्त्वाप्रत्ययेन तादृशनिधानविधानानन्तर्यलाभात्स्वीयदीधितिनिर्माणपूर्वकालिकत्वस्य तयोः सूचनेन सिद्धान्ताविरोधेन गुरुवचनमात्रमनुस्मृत्येदं निर्मितमिति स्वीयग्रन्थस्योत्कर्षः प्रतिपाद्यते । तत्सहकारि-

प्रेक्षावत्प्रवृत्तये—

---

जननीये तत्सहकारित्वं, सहकारित्वं चात्र परम्परया फलोपयोगित्वम् । तथा च गुरुवाक्याधीनशाब्दबोधजन्यसंस्कारसध्रीचीनेन मनसा निबद्धव्यमितरापरिशीलितमर्थं निश्चित्येति फलितोऽर्थः । सिद्धान्ताविरुद्ध एवार्थो वर्णनीय इति सूचयति—विधायेति।

सिद्धान्तः मूलकृता महर्षिणा तदुपजीविपूर्वपूर्वनिबन्धकारपरम्परया चाभ्युपगतोऽर्थनिकरः, स एव सरः, तदवगाहनस्य निबन्धनीयार्थे सिद्धान्ताऽपसिद्धान्तसन्देहाहितचेतःसन्तापसन्तानोपशान्तिसाधनत्वात्, तदवगाह्य अवगाहनमन्तःप्रवेशः, स च प्रकृते निरूढतत्त्वाकलनरूपः । सङ्क्षेपतः सङ्क्षिप्तोक्तितः, चिन्तामणेः चिन्तामणिनामकग्रन्थस्य, दीधितिम् अर्थप्रकाशम्, आतनोति विस्तारयति । विवरणग्रन्थनिर्माणेन बहुतरजनसम्बद्धं करोति । चिन्तामणिग्रन्थतत्त्वार्थान् भूयसः शिष्यान् बोधयतीति फलितोऽर्थः । श्रिया युक्तो रघुनाथनामेति मध्यमपदलोपिसमासः, रघुनाथेति नाम रूपं यस्येति बहुव्रीहिगर्भः । न तु श्रीरघुनाथेति नाम रूपं यस्येत्येकः समासः, श्रीशब्दस्य नामानन्तर्गतत्वात्, तथा सति हर्यादिपदानां द्व्यक्षरत्वानुपपत्तेः । न चाऽस्यैव नाम श्रीघटितमिति वाच्यम् । रघुनाथकवेरिति विरोधात् ।

प्रमाणतत्त्वे निरूपयितव्ये महर्षेः प्रमाणादितत्त्वप्रतिपादकशास्त्रप्रणेतृत्वाद्यभिधानस्य सफलत्वं दर्शयति—प्रेक्षावदिति । प्रेक्षावतां विवेचकानां, प्रकृष्टफलोद्देश-

---

कृत्वं गुरुवाक्यसहकारित्वम्, गुरुवाक्यजन्यशाब्दबोधस्यातीतत्वेन विवरणनिर्माणेऽनुपयोगाद्व्याचष्टे—सहकारित्वं चेति । परम्परया संस्कारद्वारा, फलं स्मरणम्, तथा च परम्परया फलं स्वज्ञानाधीनज्ञानजन्यसंस्कारजन्यस्मरणरूपं तज्जनकमित्यर्थः । यद्यपि मनोनिष्ठतादृशसहकारितानिर्वाहकव्यापारोत्तरत्वं विवरणं निर्माणे लभ्यते । तथापि उपयोगित्वान्तेनोपयोगितावच्छेदकीभूततादृशसंस्कारविशेषसाहित्यं लभ्यते इति । तदधीनार्थनिश्चयस्यैवोपयोगित्वमित्यभिप्रेत्याह—तथा चेति । सध्रीचीनेन । सहकारिणा, निबद्धव्यं वर्णनीयम्, संस्कारः उद्बुद्धः, मनसेत्यस्य ल्यप्प्रत्ययप्रकृतिभूते निश्चयेऽन्वयः । तादृशमनोजन्यार्थनिश्चयः स्मृतिर्मानसबोधो वा । परिशीलनं सम्यग् ज्ञानम् । तदुत्कर्षान्तरमाह—सिद्धान्तेति । सन्तापसन्तानोपशान्तेः सरोदर्शनाद्युद्धारकत्वादुक्तम् । तदवगाहनस्येति । सन्देहाहितेति । संशयस्यापि दुःखजनकत्वात्, सरःसादृश्यं दुःखध्वंसहेतुत्वात् । दार्ष्टान्तिके तदाह—स चेति । अन्तःप्रवेशश्चेत्यर्थः । निगूढत्वम् इतरापरिशीलितत्वम्, तत्त्वाकलनं सिद्धान्तितार्थतावच्छेदकप्रकारकप्रमा । एतेन मिश्रप्रभृतीनामर्थवर्णने सिद्धान्तविरोधो व्यञ्जितः । विवरणं च तत्समानार्थक ऋज्वन्तरे शब्दप्रयोगः । अर्थसङ्क्षेपे न्यूनतेत्यतः सङ्क्षिप्तोक्तित इति ।

सफलत्वं सप्रयोजनत्वम्, उपयोगित्वमिति यावत् । तेषां विवेचकानां मोक्षसाधनीभूततत्त्वज्ञानेच्छावतामिति यावत् । परमप्रयोजनीभूतेति । उत्कटेच्छाविषयीभूतेत्यर्थः । निःश्रेयसरूपफलवतां तत्त्वज्ञानद्वारा निःश्रेयसरूपफलसाधनतामित्यर्थः । प्रवृत्तिं प्रतीष्टसाधनताज्ञानं कारणम्, एवं च फलसाधनताज्ञानं विना प्रेक्षावतामेतद्ग्रन्थाध्ययने

मन्तरेण शास्त्राध्ययनेऽप्रवर्तमानानामिति यावत्। तेषां स्वीयग्रन्थाध्ययने प्रवृत्त्यर्थमित्यर्थः।

यद्यपि सामान्यतः साधनार्थप्रतिपादकत्वरूपहेतुमत्त्वं सूचितम्। अभिधेयसम्बन्धज्ञानमपि अर्थविशेषप्रतिपादनद्वारा फलवतो ग्रन्थस्य सफलत्वज्ञाने उपयुज्यते, अतः प्रयोजनाभिधेयसम्बन्धांस्तुल्यतयोपादाय तत्प्रदर्शकताकथनं न सङ्गच्छते।

---

प्रवृत्तिर्न भविष्यतीत्यतो निःश्रेयसफलवदान्वीक्षिकम्। प्रणेतुर्महर्षेर्गौतमस्य सम्बन्धकथनादस्यापि ग्रन्थस्य निःश्रेयसरूपफलसाधकत्वज्ञापनेन प्रवृत्तिः सम्भवति प्रेक्षावतामिति भावः। प्रतिपाद्यम् अभिधेयं, तत्प्रतिपादकत्वरूपं प्रमाणतत्त्वप्रतिपादकत्वरूपम्। तत्सम्बन्धं चेति। अभिधेयसम्बन्धं चेत्यर्थः। आह मूलकार इति शेषः।

सफलत्वज्ञानमिष्टसाधनताज्ञानविधया प्रवृत्तौ साक्षादेव हेतुः, अभिधेयतत्सम्बन्धज्ञानं तु प्रवृत्तिजनकसफलत्वज्ञाने प्रयोजकमिति प्रेक्षावत्प्रवृत्तिप्रयोजकत्वेन तुल्यतया प्रयोजनाभिधेयसम्बन्धानामभिधानमसङ्गतमित्याशङ्कते--यद्यपीति। अभिधेयसम्बन्धज्ञानमपीति। अस्य उपयुज्यते इत्यनेन सम्बन्धः। अर्थविशेषप्रतिपादनद्वारेति। प्रमाणतत्त्वरूपार्थविशेषप्रतिपादकत्वसम्बन्धेन, अस्य फलवत इत्यनेनान्वयः। अर्थविशेषप्रतिपादनद्वारा इत्यनेन मुक्तिरूपफलस्य ग्रन्थे प्रयोजकत्वरूपसम्बन्धो दर्शितः। ग्रन्थस्यार्थविशेषप्रतिपादनद्वारा फलवत इति विशेषणेन निःश्रेयसरूपफलवतः मुक्तिरूपफलवतः, स्वजनकज्ञानजनकत्वसम्बन्धेनेति यावत्। स्वं मुक्तिः, तज्जनकं प्रमाणत्वज्ञानं तज्जनकत्वं ग्रन्थे। दुःखध्वंसरूपाया मुक्तेरात्मनिष्ठायाः ग्रन्थेऽसत्त्वाद् ग्रन्थे तद्वत्तासिद्धयर्थं अर्थविशेषप्रतिपादनद्वारा इत्युक्तम्। ग्रन्थस्य प्रामाण्यवादस्य, सफलत्वज्ञाने प्रयोजकतासम्बन्धेन फलवत्त्वानुमित्यात्मकज्ञाने, प्रयोजकता सम्बन्धेन फलवत्त्वानुमित्यात्मकज्ञाने। अयं ग्रन्थः मुक्तिरूपप्रयोजनवान् मोक्षसाधनीभूत आन्वीक्षिकीप्रतिपादितार्थसमुदायान्तर्गतार्थप्रतिपादकत्वात् प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीति सूत्रवदित्याकारके। उपयुज्यत इति। उपयोगीत्यर्थः। परम्परया मुक्तिसाधनमिति यावत्। ग्रन्थेन सह प्रमाणतत्त्वस्य प्रतिपाद्यप्रतिपादकत्वसम्बन्धज्ञाने जाते निःश्रेयसरूपफलसाधनार्थप्रतिपादकत्वरूपहेतुज्ञानात्फलत्वानुमितिर्भवतीति भावः।

अत्रेदं बोध्यम्—सफलत्वज्ञाने उपयुज्यते इति वाक्यं सावधारणम्। अभिधेयतत्सम्बन्धज्ञानं हि सफलत्वज्ञाने एवोपयुज्यते इति तदर्थः। अवधारणेन प्रवृत्तौ अभिधेय-तत्सम्बन्धज्ञानस्य कारणत्वव्यवच्छेदः। अभिधेयतत्सम्बन्धज्ञानं सफलत्वज्ञाने कारणम्, न तु प्रवृत्तौ इति समुदितार्थः। अयं ग्रन्थः प्रयोजनवान्, निःश्रेयसफलवदान्वीक्षिकीप्रतिपादितार्थप्रतिपादकत्वादित्यनुमानसाम्राज्यात्। अतः अभिधेयतत्सम्बन्धज्ञानस्य सफलत्वज्ञानं प्रत्येव कारणत्वात्, प्रवृत्तौ अकारणत्वादिति यावत्। तुल्यतयेति। प्रेक्षावत्प्रवृत्तिजनकत्वेन तुल्यतयेत्यर्थः। तथा च प्रेक्षावत्प्रवृत्तिजनकत्वरूपतुल्यत्वमेव बाधितम्, यतः सफलत्वज्ञानम् इष्टसाधनताज्ञानविधया प्रवृत्तौ साक्षादेव हेतुः, अभिधेयतत्सम्बन्धज्ञानं तु प्रवृत्तिजनकसफलत्वज्ञाने प्रयोजकमिति भावः। केचित्तु

**तथापि एतद्ग्रन्थप्रतिपाद्यत्वेन सामान्यतः सप्रयोजनज्ञानविषयत्वमवगत्य ग्रन्थस्य प्रयोजनवत्तां जानतोऽपि प्रतिपाद्यस्य ज्ञातत्वसंशये ग्रन्थश्रवणे प्रवृत्तिर्नोपपद्यते इति विशिष्याभिधेयसम्बन्धज्ञानमप्यपेक्षितमित्याशयेन तदभिधानम् ।**

---

तुल्यत्वं सादृश्यम्, तच्च कथनक्रियाकर्मत्वेनेत्याहुः । **तत्प्रदर्शकताकथनमिति** । प्रेक्षावत्प्रवृत्तिप्रयोजकत्वेन प्रयोजनाभिधेयसम्बन्धप्रदर्शकताकथनमित्यर्थः । दीधितिकृत इति शेषः । **न सङ्गच्छते इति** । प्रेक्षावत्प्रवृत्त्यर्थम् अभिधेयसम्बन्धज्ञानं नापेक्षणीयमिति शङ्कितुराशयः ।

आन्वीक्षिकीप्रतिपाद्यमत्र विविच्यते इत्यनुक्त्वा प्रमाणतत्त्वमत्र विविच्यते इति विशिष्याभिधेयप्रदर्शनबीजमाविष्कर्तुमेव दीधितिकृताम् 'अभिधेयसम्बन्धौ चेत्यभिधानमिति समाधत्ते—**तथापीति** । सफलत्वज्ञाने एवाऽभिधेयसम्बन्धज्ञानस्योपयोगित्वेऽपीत्यर्थः । यदि ग्रन्थस्य प्रयोजनवत्ताज्ञाने विशिष्याभिधेयज्ञानं नापेक्षितं तदा प्रयोजनवत्तायाः कथनेऽपि तद्ज्ञानं न स्यात्, स्वजनकप्रतिपाद्यज्ञानजनकत्वरूपसम्बन्धघटकप्रतिपाद्यस्याज्ञानादित्याशङ्कायां सामान्यतो घटकीभूताऽभिधेयज्ञानमादाय स्वजनकज्ञानजनकत्वसम्बन्धेन प्रयोजनवत्वोपपादनेऽपि न निस्तार इत्याह—**एतद्ग्रन्थप्रतिपाद्यत्वेनेति** । तृतीयार्थोऽभेदः, तस्य सामान्यपदार्थे 'आन्वीक्षिकीप्रतिपाद्यत्वेऽन्वयः । अथवा **एतद्ग्रन्थप्रतिपाद्यत्वेनेति** । एतद्ग्रन्थप्रतिपाद्यस्येति शेषः, न तु प्रमाणतत्त्वत्वेनेति भावः । पक्षनिर्देशोऽयम् । हेतुमाह—**सामान्यत इति** । आन्वीक्षिकीप्रतिपाद्यत्वेनेत्यर्थः । साध्यं निर्दिशति—**सप्रयोजनज्ञानविषयत्वमवगत्येति** । सप्रयोजनं मुक्तिफलकम्, यदान्वीक्षिकीप्रतिपादितार्थज्ञानं तद्विषयत्वं निश्चित्येत्यर्थः । तथा च एतद्ग्रन्थप्रतिपाद्यः सप्रयोजनज्ञानविषयः आन्वीक्षिकीप्रतिपाद्यत्वात् तुल्याविति वेद्यतया मुक्तिहेतुज्ञानप्रमाण एतद्ग्रन्थप्रतिपाद्यः आन्वीक्षिकीप्रतिपाद्यत्वादित्यनुमानेन वा एतद्ग्रन्थप्रतिपाद्यः सप्रयोजनज्ञानविषयः इति बोधः । मुक्तिफलकज्ञानविषयाऽऽन्वीक्षिकीप्रतिपादितार्थप्रतिपादकत्वरूपहेतुमत्ताज्ञानात्सप्रयोजनज्ञानविषयत्वनिश्चयोत्तरं ग्रन्थे प्रयोजनवत्ताज्ञानं जायते इति भावः । तदेवाह—**ग्रन्थस्य प्रयोजनवत्तां जानतोऽपीति** । अयं ग्रन्थः प्रयोजनवानिति जानतोऽपीत्यर्थः । प्रयोजनवत्ता च स्वजनकज्ञानजनकत्वसम्बन्धेन । अपिना विशिष्याभिधेयाज्ञानेऽपि प्रयोजनवत्ताज्ञानोत्पादेन विशिष्याभिधेयज्ञानस्य फलान्तरं व्यञ्जयितुं तुल्यतयेत्युपादानमिति सूचितम् । फलान्तरं स्फुटयति—**प्रतिपाद्यस्येति** । अभिधेयस्येत्यर्थः । प्रमाणतत्त्वस्येति प्रमाणतत्त्वस्य ज्ञानविषयत्वसंशये । ज्ञातता ज्ञानविषयतारूपा बोध्या । प्रमाणतत्त्वं मया ज्ञातं न वेति संशये इति यावत् । **ग्रन्थश्रवणे प्रवृत्तिर्नोपपद्यते इति** । ग्रन्थाध्ययनविषयकप्रवृत्तिं प्रति अभिधेयधर्मिकज्ञातत्वनिश्चयस्यैव प्रयोजकत्वात् । तथा च आन्वीक्षिकी प्रतिपाद्य अत्र विविच्यते इति सामान्यतः प्रतिपाद्यस्य ज्ञानं प्रयोजनवत्ताज्ञानोपयोग्यपि न प्रवृत्त्युपयोगि, सामान्यत एतद्ग्रन्थप्रतिपाद्यस्य प्रयोजनवत्ताज्ञानविषयत्वनिश्चयेऽपि प्रमाणतत्त्वविशेष्यकप्रयोजनवत्ताज्ञानविषयत्वसंशये बाधकाभावः, स च संशयः विशिष्य तज्ज्ञाने मोक्षजनकताप-

फलवच्छास्त्रोपकरणत्वेन प्रयोजनवत्तामभिधेयसम्बन्धौ चाह स्वीयग्रन्थस्याऽथेत्यादिना विविच्यते इत्यन्तेन ।

---

प्रमाणतत्त्वमत्र विविच्यते, इत्यतः साक्षादेव अभिधेयसम्बन्धलाभः, प्रयोजनलाभश्च न तथा, तद्वाचकपदाभावात्, अपि तु अर्थत एव तल्लाभ इति विशेषसूचनाय पृथक् समासेन तदभिधानम् ।

कुतोऽर्थात्प्रयोजनवत्तालाभ इत्याकाङ्क्षायामाह—फलवच्छास्त्रोपकरणत्वेनेति । निःश्रेयसफलवदान्वीक्षिकीशास्त्रप्रतिपादितसमुदायैकदेशार्थप्रतिपादकत्वेनेत्यर्थः ।

---

र्यवसन्नः । तथा च सति प्रवृत्तिर्न स्यादतः प्रमाणतत्त्वधर्मिकप्रयोजनवत्ताज्ञानविषयत्वनिश्चय आवश्यक इति भावः । तदभिधानं विशेषतोऽभिधेयाभिधानमित्यर्थः ।

अयम्भावः—तद्ग्रन्थाध्ययनविषयकप्रवृत्तिं प्रति तद्ग्रन्थप्रतिपाद्यविशेषधर्मिकज्ञातत्वनिश्चयस्य प्रयोजकत्वम् इति प्रतिपाद्यस्य ज्ञातत्वसंशयदशायां तादृशनिश्चयासम्भवाद् ग्रन्थश्रवणे प्रेक्षावत्प्रवृत्तिर्न स्यात् । अभिधेयसम्बन्धज्ञाने सति तु ग्रन्थप्रतिपाद्यधर्मिकनिश्चयोत्तरं सम्भवति प्रेक्षावत्प्रवृत्तिरिति । प्रयोजनवत्ताज्ञानमिव अभिधेयसम्बन्धज्ञानमपि प्रेक्षावत्प्रवृत्तौ प्रयोजकमित्यतः समानकोटिकतया त्रयाणामभिधानं यावत् । ज्ञातत्वसंशये ज्ञानविषयत्वसंशये, ज्ञातता ज्ञानविषयतारूपा बोध्या, प्रमाणतत्त्वं ज्ञातं न वेति संशये इति यावत् । ग्रन्थश्रवणे प्रवृत्तिर्नोपपद्यते इति । ग्रन्थाध्ययनप्रवृत्तौ अभिधेयधर्मिकज्ञातत्वनिश्चयस्य प्रयोजकत्वात् । विशिष्य प्रमाणतत्त्वत्वादिरूपेण अभिधेयसम्बन्धज्ञानमपि अपेक्षितमिति । तद्ग्रन्थाध्ययनप्रवृत्तिं प्रति तद्ग्रन्थप्रतिपाद्यविशेषधर्मिकज्ञातत्वनिश्चयः प्रयोजक इति प्रतिपाद्यस्य ज्ञातत्वविषयदशायां तादृशप्रयोजकविरहेण तादृशज्ञातत्वनिश्चयासम्भवाद् ग्रन्थश्रवणे प्रवृत्तिर्न स्यात् । तदभिधानमिति । विशिष्याभिधेयसम्बन्धाभिधानमिति । अभिधेयसम्बन्धज्ञाने तु ग्रन्थप्रतिपाद्यधर्मिकज्ञातत्वनिश्चयानन्तरं भवति प्रेक्षावतां प्रवृत्तिरिति प्रयोजनवत्ताज्ञानमिव अभिधेयसम्बन्धज्ञानमपि प्रेक्षावत्प्रवृत्तौ प्रयोजकमिति समानकोटिकतया त्रयाणामभिधानमिति भावः ।

ननु प्रयोजनाभिधेयसम्बन्धानाहेति समस्तवाक्यप्रयोग एव समुचितो लाघवात्, न तु प्रयोजनवत्तामिति व्यासप्रयोगो गौरवात्, इत्याशङ्कायामाह—प्रमाणतत्त्वमिति । इत्यत इति । इति ग्रन्थेनेत्यर्थः । साक्षादेव शब्दादेव, न तथा न साक्षात् । अर्थत एवेति । अनुमानादेवेत्यर्थः । तल्लाभ इति । प्रयोजनवत्ताज्ञानमित्यर्थः । पृथक् व्यासेन । तदभिधानमिति । क्रमेण प्रयोजनाभिधेयसम्बन्धाभिधानमित्यर्थः । तथा च फलवच्छास्त्रप्रकरणत्वेनेत्यस्य प्रयोजनवत्त्वांशे एवान्वय इति भावः । अर्थत इति प्रागुक्तं तदेव पृच्छति—कुतोऽर्थादिति । कस्मादनुमानादित्यर्थः । दीधितौ फलवच्छास्त्रोपकरणत्वेनेति । अत्र फलवच्छास्त्रप्रकरणत्वेनेत्येव पाठः सम्यक् । फलवतः निःश्रेयसफलवतः, शास्त्रस्य आन्वीक्षिकीशास्त्रस्य, प्रकरणत्वेन अन्तर्गतत्वेनेत्यर्थः । आन्वीक्षिकीशास्त्रैकदेशार्थविवेचकत्वेनेति यावत् । तथा चाऽऽन्वीक्षिकीफलेनैवाऽस्यापि फलवत्त्वं बोध्यम् ।

तृतीयार्थः प्रयोजनवत्त्वान्वयिज्ञाप्यत्वम् । 'जगद्दुद्दिधीर्षुरान्वीक्षिकीं प्रणिनाय' इत्यतो मूलभूतशास्त्रस्य निःश्रेयसरूपोद्धारप्रयोजकतालाभः । प्रमाणादीनां तत्त्वज्ञानान्निःश्रेयसाधिगम 'इत्यादावसूत्रयत्' इत्यन्तेन निःश्रेयसोपायभूतज्ञानविषयपदार्थतत्त्वस्य तच्छास्त्राभिधेयत्वलाभः ।

एवं तदन्तर्गतप्रमाणतत्त्वप्रतिपादकत्वलाभान्निरुक्तशास्त्रप्रकरणत्वलाभः स्वीयग्रन्थस्य । तत्र च निःश्रेयससाधनत्वानुमितौ निरुक्तार्थप्रतिपादकत्वस्य निःश्रेयससाधनार्थप्रतिपत्तिजनकतात्वेनैव हेतुता । तथाविधार्थे आन्वीक्षिकीप्रतिपाद्यसमुदायान्तर्गतत्वज्ञानं च तस्यां सहचारज्ञानेन व्याप्तिग्रहार्थमित्यवधेयम् । प्रणिनायेत्यत्रैव

---

समुदितार्थमाह—निःश्रेयसफलवदिति । फलवत्ताशास्त्रस्य प्रयोजकतासम्बन्धेन । निःश्रेयसफलप्रयोजकमित्यर्थः । तादृशं यच्छास्त्रं तेन प्रतिपादितो यः प्रमाणादिनिग्रहस्थानान्तसमुदायः तदेकदेशार्थस्य प्रमाणसत्त्वस्य प्रतिपादकत्वेनेति यावत् । तथा चायं ग्रन्थः निःश्रेयसरूपप्रयोजनवान् निःश्रेयसफलवदान्वीक्षिकीशास्त्रप्रतिपादितसमुदायैकदेशार्थप्रतिपादकत्वादित्यनुमानेन प्रयोजनवत्तासिद्धिः । तृतीयार्थ इति । फलवच्छास्त्रोपकरणत्वेनेत्यत्रेत्यादिः । तथा च फलवच्छास्त्रप्रकरणत्वज्ञानज्ञाप्यप्रयोजनवत्तामित्यर्थः । आन्वीक्षिकीशास्त्रस्य फलप्रयोजकतां दर्शयति—मूलभूतशास्त्रस्येति । आन्वीक्षिकीशास्त्रस्येत्यर्थः ।

एतद्ग्रन्थप्रतिपाद्यप्रमाणादिपदार्थतत्त्वस्य आन्वीक्षिकीप्रतिपाद्यतामाह—प्रमाणादीनामिति । निःश्रेयसोपायभूतं यद्ज्ञानं तद्विषयेत्यर्थः । तथा च निःश्रेयससाधनीभूतप्रमाणतत्त्वप्रतिपादकत्वेन प्रवृत्तिर्युक्तेति भावः । तच्छास्त्राभिधेयत्वलाभ इति । आन्वीक्षिकीशास्त्राभिधेयत्वलाभ इत्यर्थः । एवं प्रमाणादितत्त्वस्य तच्छास्त्राभिधेयत्वे । तदन्तर्गतेति । निःश्रेयसफलवदान्वीक्षिकीशास्त्रान्तर्गतेत्यर्थः । निरुक्तेति । आन्वीक्षिकीत्यर्थः । स्वीयग्रन्थस्य प्रामाण्यवादस्येत्यर्थः ।

ननु अयं ग्रन्थः निःश्रेयससाधनं निःश्रेयससाधनीभूतार्थप्रतिपत्तिजनकत्वादित्यस्यैव सम्यक्त्वे निःश्रेयससाधनीभूतार्थे निःश्रेयसफलवदान्वीक्षिकीशास्त्रप्रतिपादितसमुदायैकदेशत्वविशेषणं व्यर्थमित्याशङ्कायामिष्टापत्त्या समाधत्ते—तत्र चेति। स्वीयग्रन्थे चेत्यर्थः । सप्तम्यर्थो विशेष्यकत्वम् । निःश्रेयससाधनत्वानुमितौ निःश्रेयससाधनत्वप्रकारकानुमितौ । निरुक्तार्थप्रतिपादकत्वस्येति । निःश्रेयसफलवदान्वीक्षिकीशास्त्रप्रतिपादितसमुदायैकदेशार्थप्रतिपादकत्वस्येत्यर्थः । निःश्रेयससाधनीभूतार्थप्रतिपत्तिजनकतात्वेनैवेति । निःश्रेयससाधनीभूतार्थप्रतिपादकत्वस्यैवेत्यर्थः । हेतुतेति । लाघवादिति शेषः । एवकारेण निःश्रेयसफलवदान्वीक्षिकीशास्त्रप्रतिपादितसमुदायैकदेशार्थप्रतिपत्तिजनकत्वस्य व्यावृत्तिः । तथा च निःश्रेयससाधनार्थप्रतिपत्तिजनकत्वमेव हेतुरिति भावः । निःश्रेयससाधनीभूतार्थे निःश्रेयसफलवदान्वीक्षिकीशास्त्रप्रतिपादितसमुदायैकदेशत्वविशेषणस्य प्रयोजनमाह—तथाविधार्थ इति । निःश्रेयससाधनीभूतार्थे इत्यर्थः । विशेष्यत्वं सप्तम्यर्थः । तथा च निःश्रेयससाधनीभूतार्थविशेष्यकाऽऽन्वीक्षिकीशास्त्रप्रतिपादितसमुदायान्तर्गतत्व-

* चिन्तामणिः *

अथ जगदेव दुःखपङ्कनिमग्नमुद्दिधीर्षुरष्टादशविद्यास्थानेषु अभ्यर्हिततमामान्वीक्षिकीं परमकारुणिको मुनिः प्रणिनाय। तत्र प्रेक्षावत्प्रवृत्त्यर्थं 'प्रमाणादीनां तत्त्वज्ञानान्निःश्रेयसाधिगम' इत्यादावसूत्रयत्। तेष्वपि प्रमाणाधीना सर्वेषां व्यवस्थितिरिति प्रमाणतत्त्वमत्र विविच्यते।

---

वाक्यपरिसमाप्तेस्तावन्मात्राच्चाभिधेयसम्बन्धलाभो न सम्भवतीति तत्र कथन्तानिवृत्तये विविच्यते—इत्यन्तेनेति।

---

ज्ञानं चेत्यर्थः। तस्यां जनकतायां हेताविति यावत्। सहचारज्ञानेनेति। प्रयोज्यत्वं तृतीयार्थः। तस्य व्याप्तिग्रहेऽन्वयः। तथा च निःश्रेयसफलवदान्वीक्षिकीशास्त्रप्रतिपादितसमुदायैकदेशत्वविशेषणं सहचारग्रहसूचनार्थम्। तथा हि—यत्र यत्र निःश्रेयससाधनीभूतार्थप्रतिपत्तिजनकत्वं तत्र तत्र निःश्रेयससाधनत्वं, यथा प्रमेयसंशयादितत्त्वप्रतिपादकग्रन्थे इति सहचारः सुलभः। यथा प्रमेयसंशयादितत्त्वप्रतिपादकग्रन्थस्य निःश्रेयसफलवदान्वीक्षिकीशास्त्रप्रतिपादितसमुदायैकदेशप्रतिपत्तिजनकत्वेन निःश्रेयसोपयोगित्वं तथैव प्रमाणतत्त्वप्रतिपादकग्रन्थस्यापीति भावः। तत्र तावन्मात्राभिधाने, कथन्तानिवृत्तये कथमभिधेयसम्बन्धलाभ इति जिज्ञासानिवृत्तये, प्रमाणतत्त्वमत्र विविच्यत इत्युक्तौ प्रमाणतत्त्वरूपाभिधेयस्य प्रतिपाद्यप्रतिपादकभावसम्बन्धस्य च लाभ इति भावः।

अथेत्यादिमूलार्थस्तु—अथ मङ्गलस्य, समाप्तिकारणत्वव्यवस्थापनानन्तरं प्रमाणतत्त्वमत्र विविच्यते इत्यनेनान्वयः। आनन्तर्यपरेणाप्यथशब्देन मङ्गलं सूचितम्। जगत् संसारविशिष्टात्मजातम्, संसारविशिष्टयावदात्मानो वा। संसारो वक्ष्यमाणः मिथ्याज्ञानजन्यसंस्कारः। जगत्पदस्य समूहे अशेषे वा लक्षणा। एवकारस्तदर्थे तात्पर्यग्राहकः, अनुपदमेव स्फुटीभविष्यति। दुःखपङ्कनिमग्नम्—दुःखि, उद्दिधीर्षुः आत्यन्तिकदुःखविशिष्टं चिकीर्षुः। यतः संसारि आत्मजातं दुःखि अतस्तदुद्दिधीर्षुरिति समुदितार्थः। अष्टादशविद्यास्थानेषु परिगणितेषु, स्थानं प्रभेदः।

'अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः।
धर्मशास्त्रं पुराणं च विद्या ह्येताश्चतुर्दश॥
आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रयः।
अर्थशास्त्रं च विज्ञेयं विद्या ह्यष्टादशैव तु'॥

इत्यष्टादश विद्या बोध्याः। अभ्यर्हिततमां प्रकृष्टतमाम् आन्वीक्षिकीं न्यायशास्त्रं, अनु श्रवणादनु, इक्षा मननं, तन्निर्वाहिकामान्वीक्षिकीम्। श्रोतव्यमन्तव्य इति श्रुतेर्मननस्य श्रवणानन्तरकर्तव्यत्वात्। परमकारुणिकः—परमा उत्कटा, या करुणा परदुःखप्रहीणेच्छा, तद्वान्। मुनिः वेदशास्त्रार्थतत्त्वावगन्ता, प्रणिनाय निर्ममे। तत्र आन्वीक्षिक्याम्। प्रमाणादीनां तत्त्वज्ञानादिति। प्रमाणादीनां षोडशपदार्थानामसाधारणतत्त-

जगत्=संसार्यात्मजातम् ।

---

जगत्पदस्य वस्तुमात्रार्थकत्वे घटादीनामचेतनानां मोक्षरूपोद्धारस्य बाधेन तदीयत्वेनोद्धारेच्छा मुनेर्न सम्भवतीति व्याचष्टे—जगदिति । परमेश्वरस्य मुक्तानां च जीवानां नोद्दिधीर्षाविषयत्वसम्भव इत्यतः संसारित्वं विशेषणम् । संसारश्च मिथ्याधी-प्रभवा वासना । मत्वर्थीयार्थं उपलक्षणव्यावृत्तं विशेषणत्वम् । अतस्तदुपलक्षितमुक्त-जीवात्मव्यावृत्तिः ।

---

द्धर्मप्रकारकज्ञानादित्यर्थः । पञ्चम्यर्थः प्रयोज्यत्वम् । तच्च निःश्रेयसाधिगमपदार्थे तत्त्वज्ञानेऽन्वेति । तत्त्वज्ञानं चात्मधर्मिकेतरभेदज्ञानं, तत्र षोडशपदार्थज्ञानानां प्रयोजकता च इतरभेदबुद्धौ प्रतियोगितावच्छेदकप्रकारकज्ञानविधया बोध्या । निःश्रेयसाय मोक्षाय, अधिगमो मिथ्याज्ञानजन्यवासनाविरोधिज्ञानात्मकं निरुक्ततत्त्वज्ञानं, गम-धातोर्ज्ञानार्थकत्वात्, अभिशब्दस्य समीचीनार्थकत्वात् फपदारित्यादिवन्निःश्रेयसाधिगम इत्यत्रोपपदविभक्त्यन्तेनापि समाससम्भवात् ।

केचित्तु निःश्रेयसाधिगमो मोक्षप्राप्तिः गमेः प्राप्त्यर्थकत्वात् प्राप्तिरत्राऽऽत्यन्तिकदुःख-ध्वंसस्य 'मोक्षस्य' स्वरूपसम्बन्धः । तत्त्वज्ञानादिति पञ्चम्यर्थः प्रयोज्यत्वम्, प्राप्तौ अन्वेति । शेषं पूर्ववदित्याहुः । तन्न । प्रयोजनाभिधेयसम्बन्धज्ञानस्य ग्रन्थाध्ययने शिष्य-प्रवृत्त्युपयोगितया तत्कथनस्यावश्यकत्वेऽपि प्रयोजनप्राप्तिपर्यन्तानुधावनवैयर्थ्यापत्तेरिति चिन्तनीयम् ।

इतीति । एतदर्थकमित्यर्थः । आदौ प्रथमतः, असूत्रयत् शास्त्रस्य तत्त्वज्ञान-साधनताप्रतिपादकसूत्रं कृतवान् । तेष्वपि शास्त्रोद्दिष्टप्रमाणादिषोडशपदार्थेषु मध्ये, अत्र चिन्तामणौ, प्रतिपाद्यत्वं सप्तम्यर्थः । तस्य प्रमाणतत्त्वेऽन्वयः । धात्वर्थो विवेचनं, तच्च परमतनिराकरणपूर्वकस्वमतव्यवस्थापनम् । व्यवस्थापनं प्रमाणवत्तया बोधनं, विषयत्वं कर्माख्यातार्थः । तथा च मद्'गङ्गेशमिश्र'समवेतकृतिजन्यबोधविषयो निरुक्तं प्रमाणतत्त्वमिति बोधः । प्रमाणत्वम् इन्द्रियादिचतुष्कत्वसमनियतं प्रमिति-करणत्वम्, एवं चैतद्ग्रन्थस्य मोक्षसाधनीभूततत्त्वज्ञानरूपफलवदान्वीक्षिकीप्रतिपादित-प्रतिपादकत्वं सूचितम् । ननु षोडशपदार्थेषु मध्ये प्रमाणतत्त्वस्यैव कुतो विवेचनमत आह—प्रमाणाधीनेति । व्यवस्थितिः निश्चयः ।

तदीयत्वेन घटीयत्वेन, उद्धारेच्छा घटीय उद्धारो भवतु इत्याकारिका । मुनेर्न सम्भवतीति । जगत्पदस्य वस्तुमात्रे शक्ततया घटादेर्दुःखपङ्कनिमग्नत्वासम्भवाद् घटाद्युद्दिधीर्षायां मुनेर्भ्रान्तत्वं स्यादिति भावः । दीधितौ—संसार्यात्मजातमिति । तथा च घटादीनां संसारित्वेऽपि आत्मसमूहानन्तर्गतत्वाद् व्यावृत्तिः । संसारित्वविशेषणस्य प्रयोजनमाह—परमेश्वरस्येति । नोद्दिधीर्षाविषयत्वसम्भव इति । सिद्धे-इच्छाविरहादिति भावः । संसारित्वविशेषणेन व्यावृत्तिमाह—संसारश्चेति । मिथ्येति । मिथ्याज्ञानजन्य-संस्कार इत्यर्थः । तादृशसंस्कारोऽस्ति अस्मिन्निति संसारी जीवात्मा । परमेश्वरस्य तादृशसंस्कारवत्त्वविरहेण व्यावृत्तिः । मुक्तात्मनां व्यावृत्त्यर्थमाह—मत्वर्थीयार्थं इति ।

न च मूलोपात्तदुःखपङ्कनिमग्नत्वविशेषणेनैव परमेश्वरादिव्यावृत्तिसम्भवात्संसारित्वविशेषणवैयर्थ्यमिति वाच्यम् ? एवं हि आत्मपरजगत्पदस्यापि वैयर्थ्यापातात् आत्मभिन्नानां दुःखपङ्कनिमग्नत्वविशेषणेनैव वारणात्। तथा चोद्दिधीर्षाविषयत्ववद्दुःखपङ्कनिमग्नत्वमपि विधेयतयैव विवक्षितम्, जगद्यतो दुःखपङ्कनिमग्नमतस्तदुद्दिधीर्षुरित्येवार्थः।

अत एव जगत्पदात्परत एव दुःखपङ्कनिमग्नत्वनिर्देशसङ्गतिः। दुःखपङ्कनिमग्नत्वस्योद्दिधीर्षाविषयत्वोद्देश्यजगत्पदार्थव्यावर्तकतया विवक्षितत्वे उद्देश्यतावच्छेदकी-

---

मत्वर्थीयो णिनिप्रत्ययस्तदर्थ इत्यर्थः। उपलक्षणव्यावृत्तं विशेषणत्वं च तत्कालावच्छिन्नतद्वत्त्वरूपम्। मुक्तात्मनां मुक्तिकालावच्छेदेन तादृशवासनावत्त्वविरहाद्व्यावृत्तिः। उपलक्षणसाधारणविशेषणत्वं च प्रतियोगिव्यधिकरणवासनाभावाभाववत्वं मुक्तात्मनामप्यस्तीत्याह—अतः उपलक्षणव्यावृत्तविशेषणत्वविवक्षणात्। तदुपलक्षितेति। वासनावत्वोपलक्षितेत्यर्थः। व्यावृत्तिः। मुक्तात्मनां विशेषणाभावात्।

दुःखपङ्कनिमग्नत्वं जगतो विशेषणं, तथा च यतो दुःखपङ्कनिमग्नं जगत् अतस्तदुद्दिधीर्षुरित्यर्थ इत्याशयेन शङ्कते—न चेति। दुःखपङ्कनिमग्नत्वविशेषणेनैवेति। एवकारेण संसारित्वव्यवच्छेदः। परमेश्वरादीति। आदिना मुक्तात्मपरिग्रहः। व्यावृत्तिसम्भवादिति। परमेश्वरस्य मुक्तात्मनां च दुःखपङ्कनिमग्नत्वाभावादिति भावः। संसारित्वविशेषणवैयर्थ्यमिति। दुःखपङ्कनिमग्नात्मत्वस्योद्देश्यतावच्छेदकतया तद्व्यापकत्वस्योद्दिधीर्षाविषयत्वे 'विधेये'ऽवाधादिति भावः।

अथ दुःखपङ्कनिमग्नत्वं दुःखित्वम्, तस्य विशेषणत्वे स्वर्गिणामुद्दिधीर्षाविषयत्वानुपपत्तिः, तेषां दुःखाभावेनोद्देश्यतावच्छेदकानाक्रान्तत्वात्। तस्योपलक्षणत्वे मुक्तानामुद्दिधीर्षाविषयत्वापत्तिः, तेषामपि प्रतियोगिव्यधिकरणदुःखित्वाभावाभाववत्वात्। संसारित्वविशेषणसत्त्वे दुःखित्वस्योपलक्षणतया स्वर्गिणां सङ्ग्रहात्, मुक्तात्मवारणाय संसारित्वविशेषणसार्थक्यादिति चेन्न। दुःखपङ्कनिमग्नत्वं दुःखप्रागभाववत्वं दुःखित्वमेव वा, दुःखं चैकविंशतिः, तच्च विशेषणमेव तथा च मुक्तात्मनां नोद्दिधीर्षाविषयत्वापत्तिः। स्वर्गेऽपि दुःखस्वीकारेण नानुपपत्तिः। तथा च संसारित्वविशेषणवैयर्थ्यमेवेति भावः। एवं हि दुःखपङ्कनिमग्नत्वस्योद्देश्यतावच्छेदकत्वे हि। जगत्पदस्यापीति। अपिना संसारित्वविशेषणस्य समुच्चयः। वैयर्थ्यापातादिति। दुःखपङ्कनिमग्नमुद्दिधीर्षुरित्यस्यैव सम्यक्त्वादिति भावः। तथा च जगत्पदस्यापि वैयर्थ्ये च। विधेयतयैवेति। एवकारेण 'न तूद्देश्यतावच्छेदकतया' इति सूचितम्। विवक्षितमिति। दुःखि जगद् उद्धृतं भवतु इति नेच्छा, अदुःखिजगत्स्वीकारापत्तेः किन्तु जगदुद्धृतं भवतु इत्येव विवक्षितमिति भावः। धनवान् सुखीत्यादिवदुद्दिधीर्षाविषयत्वप्रयोजकतया दुःखित्वं विवक्षितमित्याह—जगद् यतो दुःखपङ्कनिमग्नमिति। इत्येवार्थ इति। न तु दुःखिजगदुद्दिधीर्षुरित्यर्थ इति भावः। अत एव दुःखपङ्कनिमग्नत्वस्य विधेयत्वादेव, दुःखपङ्कनिमग्नत्वस्योद्देश्यतावच्छेदकतया विवक्षायां तु उद्देश्यवाचकजगत्पदपूर्वमेव तन्निर्देशौचित्यादि-

भूततद्वाचकपदस्य उद्देश्यवाचकजगत्पदपूर्वमुपादानं क्रियेत इति यतो जगद् दुःखपङ्कनिमग्नमतस्तदुद्दिधीर्षुरित्यर्थस्यैव विवक्षणात्, जगत्पदार्थतावच्छेदकमात्रस्यैव-उद्दिधीर्षितत्वोद्देश्यतावच्छेदकतया तत्र संसारित्वान्तर्भावस्यावश्यकत्वात् ।

आत्मपदं चावच्छेदकशरीरव्यावृत्तस्य समवायेन वासनाविशेषवत्त्वस्य लाभाय । लक्षणयापि समूहे एव प्रामाणिकानां जगत्पदस्य व्यवहारात्समूहार्थकं जगत्पदं न त्वशेषार्थकम्, एवकारेणैव तल्लाभात् । अथवा जगत्पदमेवाशेषार्थकं, तत्परत्वग्राहक एवकारः न तु तदर्थकः, यथा 'सर्व एव शुभः कालः' इत्यादौ ।

---

त्याह—दुःखपङ्कनिमग्नत्वस्येति । अस्य जगत्पदार्थव्यावर्त्तकतया इत्यनेनान्वयः । उद्दिधीर्षाविषयत्वस्योद्देश्यीभूतो जगत्पदार्थः परमेश्वरमुक्तात्मानोऽपि—तद्व्यावर्तनतयेत्यर्थः । दुःखपङ्कनिमग्नत्वस्योद्देश्यतावच्छेदकत्वे इति यावत् । विवक्षितत्वे इति । जगत्पदार्थतावच्छेदकतया विवक्षितत्वे इत्यर्थः । तद्वाचकपदस्य दुःखित्ववाचकपदस्य । क्रियेत इति । अन्यथानिराकाङ्क्षत्वप्रसङ्गादिति भावः । इदं चोद्देश्यतावच्छेदकवाचकपदस्योद्देश्यवाचकपदपूर्ववर्तित्वमिति नियममभिप्रेत्य । इति पूर्वमनुपादानात् । इत्यर्थस्यैवेति । दुःखपङ्कनिमग्नत्वस्य विधेयतयैवेति यावत् । जगत्पदार्थतावच्छेदकमात्रस्यैवेति । एवकारेण दुःखपङ्कनिमग्नत्वस्य व्यवच्छेदः । तत्र जगत्पदार्थे, आत्मनि । संसारित्वान्तर्भावस्याऽवश्यकत्वादिति । निरुक्तवासनारूपसंसारविशिष्टत्वेनाऽऽत्मनो निवेश आवश्यक इति भावः ।

अयम्भावः—जगदुद्दिधीर्षाविषयो दुःखपङ्कनिमग्नत्वादित्यनुमाने अवच्छेदाववच्छेदेन विधेयान्वयस्यौत्सर्गिकतया जगत्पदार्थतावच्छेदकावच्छेदेन उद्दिधीर्षाविषयत्वस्यान्वये मुक्तात्मनि बाधो भागासिद्धिश्च, जगत्पदार्थतानवच्छेदकावच्छेदेन दुःखपङ्कनिमग्नत्वरूपहेतोरनन्वयात् । अतो जगत्पदार्थे आत्मनि संसारित्वविशेषणमावश्यकम् । तथा चेश्वरमुक्तात्मनोः पक्षानन्तर्गततया नोक्तदोषाविति भावः ।

ननु तथापि आत्मपदं व्यर्थम्, आत्मभिन्नानां घटादीनां निरुक्तवासनारूपसंसारवत्त्वाभावेन संसारविशिष्टस्यैव जगत्पदार्थत्वे दोषाभावादित्यत आह—आत्मपदं चेति । अवच्छेदकेति । वासनावच्छेदकेत्यर्थः । शरीरव्यावृत्तस्य शरीरावृत्तेः । लाभायेति । अन्यथा अवच्छेदकतासम्बन्धेन येन केनापि सम्बन्धेन वा निरुक्तवासनात्मकसंसारस्य शरीरघटादिसाधारण्येन तेषामपि पक्षान्तर्गततया तत्र चोद्दिधीर्षाविषयत्वविरहेण बाधः, आत्मपदसत्त्वे तत्समभिव्याहारात्समवायलाभेन तेन सम्बन्धेन शरीरादीनां वासनावत्त्वविरहेण पक्षानन्तर्गततया बाधविरहादिति भावः ।

शिरोमणिव्याख्यानमुक्त्वा स्वयं जगत्पदव्याख्यानमाह—लक्षणयापीति । अपिना शक्तिसङ्ग्रहो दृष्टान्तार्थः । यथा शक्त्या चेतनाचेतनसमूहस्य बोधकं जगत्पदं तथा लक्षणया तादृशात्मसमूहस्येत्यर्थः । न त्वशेषार्थकमिति । व्यापकार्थकमित्यर्थः । जगद्वृत्तिसमूहत्वमात्रेणोद्धारेच्छाविषयत्वे प्रत्येकमुद्धारानुपपत्तिः, अतस्तत्संसारावच्छिन्नयावल्लाभ

न चाऽनधिकारिणः शूद्रादीनध्यापयाम्बभूव प्रवरो मुनीनाम्, येनाशङ्क्येतापि प्रत्यवायस्तस्य।

न चानधिकारिणां शास्त्रावलोकनेनार्थावगमे प्रत्यवयन्ति प्रणेतारः शास्त्राणाम्।

---

ननु शूद्रादीनामपि जगदन्तर्गततयाऽध्यात्मविद्यानधिकारिणां तेषाम् अर्थज्ञानेच्छया शास्त्रप्रणयने महर्षिः प्रत्यवेयात्।

अनधिकारिणामर्थज्ञानेच्छया शब्दप्रयोगरूपतदध्यापनस्य प्रत्यवायहेतुत्वादित्यधिकारित्वमपि विशेषणमस्तु इत्याशङ्कां परिहरति—न चेति। शूद्रादीन् शूद्रत्वादि-

---

आवश्यकः, अत एव विशिष्टा सकलजीवानामान्वीक्षिकीशास्त्राध्ययनद्वारोद्देश्यतानिर्वाहो वक्ष्यति, तथा चाशेषरूपार्थत्यागोऽयुक्त इत्यत आह—एवकारेणेति। वस्तुतो जगत्पदादेव संसार्यात्मत्वसमानाधिकरणसकलतत्संसारवत्त्वलाभेनैवोपपत्तेः, आत्मनि समूहत्वनिवेशोऽनुपयुक्त इत्यत आह—अथवेति। तत्परत्वग्राहक इति। अशेषपरत्वग्राहक इत्यर्थः। सर्व एवेति। अशेषः काल इत्यर्थः।

अवच्छेदावच्छेदेन विधेयान्वयस्यौत्सर्गिकत्वेन संसार्यात्मत्वावच्छेदेनोद्दिधीर्षाविषयत्वस्यान्वये शूद्रादिशरीरावच्छिन्नात्मनामपि उद्देश्यतावच्छेदकाक्रान्ततया तदध्यापने मुनिः प्रत्यवायभागी भवेदतोऽधिकारित्वमपि उद्देश्ये विशेषणीयमित्याशङ्कते—नन्विति। शूद्रादीनामपि। शूद्रत्वजात्यवच्छिन्नशरीरविशिष्टात्मनामपि। यावदन्तर्गततया संसार्यात्मान्तर्गततया, उद्देश्यतावच्छेदकाक्रान्ततयेति यावत्। तेषां शूद्रत्वजात्यवच्छिन्नशरीरविशिष्टात्मनाम्, अर्थज्ञानेच्छया तत्त्वज्ञानेच्छया, तेषां तत्त्वज्ञानं भवतु इतीच्छयेति यावत्। प्रत्यवेयात् प्रत्यवायभागी भवेत्। अनधिकारिसंसार्यात्मविशेष्यकतत्त्वज्ञानप्रकारकेच्छाप्रयोज्यशब्दप्रयोगोऽध्यापनम्, तच्च प्रत्यवायहेतुः 'न शूद्राय मतिं यच्छेत्' इति निषेधादित्याशयवानाह—अनधिकारिणामिति। षष्ठ्यर्थो विशेष्यकत्वम्, तस्येच्छायामन्वयः। अर्थज्ञानेच्छयेति। तत्त्वज्ञानप्रकारकेच्छयेत्यर्थः। तृतीयार्थः प्रयोज्यत्वम्। तदध्यापनस्य अनधिकार्यध्यापनस्य। अधिकारित्वमपीति। अपिना संसारित्वसमुच्चयः। विशेषणमस्त्विति। जगत्पदार्थस्येत्यादिः। दीधितौ—न चेति। न हीत्यर्थः। तादृशशरीरोपलक्षितानामेवेति। शूद्रशरीरावच्छिन्नत्वोपलक्षितानामेवेत्यर्थः। प्रतियोगिव्यधिकरणशूद्रशरीरावच्छिन्नत्वाभावाभाववतामिति यावत्। एवकारेण शूद्रशरीरावच्छिन्नत्वविशिष्टात्मनो व्यावृत्तिः, अस्य तदुद्देश्यत्वादित्यनेनान्वयः। तदुद्देश्यत्वादिति। शास्त्रप्रणयनोद्देश्यत्वादित्यर्थः। शूद्रशरीरावच्छिन्नत्वोपलक्षितात्मानः अर्थज्ञानवन्तो भवन्तु इति शास्त्रप्रणेतुरिच्छाविषयत्वादिति यावत्। शूद्रशरीरावच्छिन्नत्वोपलक्षितविप्रादेरध्यापनस्य प्रत्यवायहेतुत्वापत्त्या न शूद्रायेत्यत्र शूद्रपदेन शूद्रशरीरावच्छिन्नत्वस्यैव विवक्षणादिति भावः।

शब्दप्रयोगस्यैवेति। न तु तादृशशरीरोपलक्षितज्ञानेच्छाप्रयोज्यशब्दप्रयोगस्येत्यर्थः। तत्तच्छरीरावच्छिन्नात्मविशेष्यकतत्त्वज्ञानप्रकारकबोधोद्देश्यकशब्दप्रयोक्तृत्व-

उद्देश्यता तु कीटपतङ्गादीनामपि विशिष्टशरीरपरिग्रहादर्थावगमेन सम्भवन्ती न कामपि क्षतिमावहति इति सर्वं चतुरस्रम्। टीकाकृतस्तु समाधिसौकर्यादभ्युपेत्य प्रत्यवायमन्यथैव समादधिरे।

---

जात्याक्रान्तशरीरविशिष्टात्मनः, अध्यापयाम्बभूव उद्दिश्य शास्त्रं प्रणिनाय। तादृशशरीरोपलक्षितानामेवात्मनां शास्त्रार्थज्ञानभागितया तदुद्देश्यत्वादिति भावः। अनधिकारिताप्रयोजकशरीरावच्छिन्नज्ञानेच्छया शब्दप्रयोगस्यैव प्रत्यवायहेतुत्वमित्याशयेनाह—येनेति। स्वप्रयुक्ताद्दैववशेनानधिकारिणामर्थज्ञानं न प्रत्यवायहेतुरित्याह—न चेति। तथा सति ब्राह्मणादिमात्रोद्दिधीर्षया शास्त्रप्रणयनादपि प्रत्यवेयादिति भावः।

ननु जन्यज्ञानस्य शरीरावच्छिन्नत्वनियमाच्छूद्राद्यात्मनामुद्धारेच्छया शास्त्रप्रणयने शूद्राद्यात्मनां ज्ञानभागितयोद्देश्यत्वे शूद्रादिशरीरावच्छिन्नज्ञानेच्छा मुनेरावश्यकीत्याशङ्कां परिहरति—उद्देश्यता तु इति। अर्थज्ञानवत्वेनेच्छाविषयता तु इत्यर्थः। विशिष्टशरीरेति। ब्राह्मणत्वादिविशिष्टशरीरं परिगृह्य एतच्छास्त्रार्थमवगच्छेदित्यभिसन्धानेनाऽनधिकारिशरीरावच्छिन्नतया ज्ञानस्येच्छयाऽनवगाहनेऽपि उपपद्यमानेत्यर्थः।

---

रूपमध्यापकत्वं न मुनेः, अत एवान्यस्यान्येनाध्यापने क्रियमाणेऽन्येन श्रवणे अयं श्रोतुरध्यापक इति न व्यवहारः। न प्रत्यवायहेतुरिति। स्वस्येति शेषः। यथा फलपातनेच्छया इषुप्रयोगेन विप्रादिमरणे वाचनिकप्रायश्चित्तविध्यन्यथानुपपत्त्या तत्र प्रत्यवायान्तरं कल्प्यते तथा नेह कल्पनं तादृशविध्यभावादिति हृदयम्। तथा सति शास्त्रप्रणेतुः प्रत्यवायभागित्वे सति। प्रत्यवेयादिति। तत्रापि दैववशेनानधिकारिणामर्थज्ञानसम्भवादिति भावः। अनधिकारिताप्रयोजकशरीरावच्छिन्नज्ञानेच्छया शब्दप्रयोगस्यैव प्रत्यवायहेतुत्वेनैव सामञ्जस्येऽधिकारित्वविशेषणमनावश्यकमिति ध्येयम्।

नन्विति। ईश्वरव्यावृत्तये जन्येति। शूद्राद्यात्मनामिति। शूद्रशरीरावच्छिन्नात्मनां जगदन्तर्गततया इति शेषः। षष्ठ्यर्थो विशेष्यकत्वम्। उद्धारो मोक्षः। तत्प्रकारकेच्छयेत्यर्थः। शूद्राद्यात्मानो मोक्षवन्तो भवन्तु इतीच्छयेति यावत्। प्रयोज्यत्वं तृतीयार्थः। तस्य च शास्त्रप्रणयनेऽन्वयः। शूद्रात्मनां शूद्रशरीरावच्छिन्नात्मनां, ज्ञानभागितया ज्ञानार्हतया, अयं चोद्देश्यत्वे हेतुः। उद्देश्यत्वं चेच्छाविशेष्यत्वम्। शूद्रात्मनामित्यादिः। शूद्रात्मानो ज्ञानवन्तो भवन्तु इतीच्छाविशेष्यत्वे इति समुदितार्थः। शूद्रादिशरीरावच्छिन्नज्ञानेच्छेति। शूद्रादिशरीरावच्छिन्नात्मविशेष्यकशास्त्रार्थज्ञानप्रकारकेच्छा इत्यर्थः। आवश्यकी अत्र च तादृशोद्देश्यत्वं हेतुः। अर्थज्ञानवत्त्वेनेच्छाविषयता तु इति। अर्थज्ञानवन्तो भवन्तु इतीच्छाविशेष्यता तु इत्यर्थः।

परिगृह्येति। तथा च ब्राह्मणाद्यवच्छिन्नधर्मिकौ वेति भावः। अभिसन्धानेन ज्ञानेन, कल्पनेनेति यावत्। अनधिकारिशरीरावच्छिन्नतयेति। तृतीया प्रकारे। अनवगाहनेऽपि अविषयत्वेऽपि। उपपद्यमानेति। तथा च शूद्रत्वविशिष्टशरीरं परिगृह्य एतच्छास्त्रार्थमवगच्छेदितीच्छा मुनेर्नास्तीति भावः। ननु शूद्राः शास्त्रार्थज्ञानवन्तो भवन्तु इतीच्छायां शूद्रशरीरोपलक्षितात्मभाने मानाभावः, ज्ञानवत्वप्रकारकेच्छायाः शरीरावच्छिन्नात्म-

**( चि० म० ) ननु प्रमाणादीनां तत्त्वं प्रतिपादयच्छास्त्रं परम्परया निःश्रेयसेन सम्बध्यत इति न युक्तं, प्रमाणतत्त्वावधारणस्याऽशक्यत्वात्, तद्धि प्रमातत्त्वावधारणाधीनं, तच्च स्वतः परतो वा न सम्भवति, वक्ष्यमाण-दूषणग्रासात् ।**

---

अन्यथा कीटादिशरीरस्य शास्त्राधीनज्ञानानवच्छेदकत्वनिश्चयात्तदात्मनामुद्देश्यतैव न निर्वहेदिति भावः । क्षतिं प्रत्यवायम् । नन्वेवं मुनेरुत्पन्नोऽपि प्रत्यवायस्तपःप्रभावादेव-विनश्यतीति टीकाकारसमाधानविरोध इत्यत आह—टीकाकृतस्तु इति ।

---

विषयकत्वनियमादित्यत आह—अन्यथेति । अनधिकारिशरीरावच्छिन्नतया ज्ञानस्ये-च्छयानवगाहने इत्यर्थः । तदात्मनां कीटादिशरीरावच्छिन्नात्मनाम्, उद्देश्यतैव इच्छावि-शेष्यतैव । न निर्वहेदिति । तथा च कीटा अर्थज्ञानवन्तो भवन्तु इतीच्छायाः संवादित्वा-नुरोधेन कीटशरीरोपलक्षितात्मविषयकत्वात्तत्रैव तन्नियमभङ्गप्रसङ्ग इति भावः । दीधितौ—समाधिसौकर्यादिति । सुलभसमाधानार्थमिति यावत् । अधिकारित्वमपि विशेषणमस्तु इति शङ्कायाः इत्यादिः । अन्यथैव समादधिरे इति । कीटपतङ्गादीनाम-पीत्यपि शब्दतः शूद्रशरीरावच्छिन्नानामुद्देश्यत्वेन पापं मुनेरुत्पद्यत एव तत्त्वज्ञान-महिम्ना तु नश्यतीति समादधिरे इति भावः ।

मूले—नन्विति । इयमाशङ्का माध्यमिकस्य, तेन मीमांसकसौगतचार्वाकैः प्रामाण्याभ्युपगमेऽपि न क्षतिः । प्रमाणादीनामिति । आदिना प्रमेयादिपरिग्रहः । तत्त्वं प्रमाकरणत्वादिकं, प्रकारित्वं द्वितीयार्थः । प्रतिपादयत् ज्ञानं जनयत्, तथा च प्रमाणा-दिविशेष्यकप्रमाकरणत्वप्रकारकज्ञानं जनयदित्यर्थः । परम्परया मोक्षसाधनतत्त्वज्ञान-द्वारा, निःश्रेयसेन सम्बध्यते निःश्रेयसोपयोगि भवितुमर्हति, इति न युक्तम् इति सूत्र-कृतामभिप्रायो न युक्त इति भावः । प्रमाणतत्त्वावधारणस्य प्रमाणादीनां प्रमाकरणत्व-प्रकारकावधारणस्य, अशक्यत्वात् असम्भवात्, अशक्यत्वमुपपादयति—तद्धीति । प्रमा-णादिविशेष्यकप्रमाकरणत्वावधारणं हि । प्रमातत्त्वावधारणाधीनं प्रमात्वप्रकारकाव-धारणाधीनं, विशेषणतावच्छेदकप्रकारकज्ञानं विना विशिष्टवैशिष्ट्यबोधासम्भवा-दिति भावः । प्रमाणशब्दः प्रमाविशिष्टवाचकः, एवं च प्रमाणतत्त्वावधारणं प्रमातत्त्वा-वधारणाधीनम् । तथा च यदि प्रमातत्त्वावधारणं न स्यात्तदा प्रमाणतत्त्वावधारणम-शक्यमेव, प्रमातत्त्वावधारणं तु न सम्भवत्येवेत्याह—तच्चेति । प्रमातत्त्वावधारणं चेत्यर्थः । न च प्रमापदादेव प्रमात्वप्रकारकोपस्थितिसम्भव इति वाच्यम् । मानान्तरेण प्रमात्वप्रकारकज्ञानं विना प्रमापदशक्तिग्रहस्यैवाऽसम्भवात् । स्वतः स्वाश्रयज्ञानग्राहक-सामग्रीतः, स्वं प्रमात्वम्, परतः संवादिप्रवृत्तिजनकत्वलिङ्गकानुमितिसामग्रीतः, न सम्भवति न गृह्यते । तथा च प्रमात्वं न स्वाश्रयज्ञानग्राहकसामग्रीग्राह्यं, नापि निरुक्तानुमितिसामग्रीग्राह्यमिति भावः । तत्र हेतुमाह—वक्ष्यमाणदूषणग्रासादिति । वक्ष्यमाणदूषणं संशयानुपपत्तिरूपम्, नैयायिकमते चानवस्थारूपं बोध्यम् । तच्चाग्रे

प्रामाण्यनिश्चायनेन निःश्रेयसार्थिनं प्रवर्तयच्छास्त्रं निःश्रेयसेन सम्बध्यते इत्याशयं मन्वान आदेशयति—अथेति ।

---

ननु प्रमाकरणत्वप्रमाणतत्त्वावधारणे तद्घटकप्रमातत्त्वावधारणस्यापेक्षिततया तस्य स्वतः परतश्चासम्भवेन प्रमाणतत्त्वस्य दुरवधारणतया तदवधारणेन शास्त्रस्य निःश्रेयसोपयोगित्वं यत्सूत्रकृतोक्तं तन्न सङ्गच्छते इत्याक्षेपे प्रामाण्यावधारणस्य व्यभिचारान्यथासिद्धिभ्यां प्रवृत्त्यहेतुतया तदसम्भवेऽपि न क्षतिरित्याशङ्कनम् 'अथ किमि'त्यादिना मूलकृतोऽसङ्गतम्, प्रवर्तकतया प्रामाण्यनिश्चयापेक्षाया आक्षेपेऽनुक्तत्वात्,

---

स्फुटीभविष्यति । तथाहि—प्रामाण्यं स्वाश्रयज्ञानग्राहकसामग्रीग्राह्यत्वाभाववत् अनभ्यासदशायां सांशयिकत्वात् अप्रामाण्यवत् । स्वतोग्राह्यत्वे प्रामाण्यसंशयो न स्यात्, ज्ञाननिश्चयकादेव तन्निश्चयादिति तर्को बाधकः । न चानभ्यासदशायामिति विशेषणं किमर्थमिति वाच्यम् । अभ्यस्तनिश्चयनिष्ठप्रमात्वस्यापि पक्षान्तर्गततया सांशयिकत्व-विरहेण भागासिद्धेः । तथा च प्रामाण्यस्य स्वतोग्राह्यत्वे अयं घट इति व्यवसायानन्तरम् इदं ज्ञानं प्रमा न वेति संशयानुपपत्तिः । निर्णीते संशयायोगात् ।

एवं प्रामाण्यस्य परतोग्राह्यत्वे 'संवादिप्रवृत्तिजनकत्वलिङ्गकानुमित्याग्राह्यत्वे' अनवस्था । तथाहि—अप्रामाण्यज्ञानास्कन्दितज्ञानात्प्रवृत्त्याद्यनुत्पत्त्या गृहीतप्रामाण्यक-ज्ञानत्वेनैव प्रवृत्तिहेतुता वाच्या । प्रकृतेऽपि प्रामाण्यग्रहस्यापि अप्रामाण्यज्ञानास्कन्दि-तस्याऽकिञ्चित्करत्वात् तत्रापि गृहीतप्रामाण्यकत्वमवश्यं निवेश्यम्, एवं तादृशप्रामाण्य-ग्रहादावपि गृहीतप्रामाण्यकत्वं निवेश्यम्, तथा च वदतः प्रामाण्यग्रहपक्षे प्रवृत्त्यादि-जनकज्ञाने अनुमानाद्यधीनः प्रामाण्यग्रहोऽपेक्षणीयः, एवं तत्रापि तथाविधप्रामाण्यग्रहान्त-रमपेक्षणीयमिति व्यक्तैवानवस्था ।

एवं प्रवर्त्तकज्ञानादौ आनुमानिक एव प्रामाण्यग्रहो वाच्यः, तत्र च गृहीतप्रामाण्यक-परामर्शादिज्ञानापेक्षा तत्र प्रामाण्यग्रहोऽपि गृहीतप्रामाण्यकलिङ्गान्तरादित्येवं क्रमेणाऽन-वस्थेति सङ्क्षेपः ।

तद्धि प्रमातत्त्वावधारणाधीनमिति ग्रन्थेन प्रमाकरणत्वरूपप्रमाणतत्त्वावधारणं प्रमात्वावधारणं विनाऽशक्यं विशिष्टवैशिष्टवैशिष्टचबुद्धौ विशेषणतावच्छेदकप्रकारक-निश्चयस्य हेतुत्वादित्युक्तम्, न तु प्रवृत्तिजनकतया प्रमात्वनिश्चयस्याऽपेक्षणीयत्व-मित्युक्तम् । एवं च प्रवृत्त्यजनकतया प्रमात्वनिश्चयस्याऽनपेक्षणीयत्वाभिधानम् 'अथ किं प्रामाण्यज्ञानेने'त्यादिग्रन्थेनानुचितम्, तादृशाभिधानेनाऽऽक्षेपानिरासादित्याशङ्कां निर-सितुमुपक्रमते—नन्वित्यादिना । तद्घटकेति । प्रमाणतत्त्वघटकेत्यर्थः । तस्य प्रमात्वस्य, तदवधारणेन प्रमाणतत्त्वावधारणद्वारा, प्रामाण्यावधारणस्य प्रमात्वावधारणस्य, तद-सम्भवेऽपि प्रमात्वावधारणासम्भवेऽपि, न क्षतिरिति । व्यभिचारान्यथासिद्धिभ्यां प्रमात्वावधारणस्य प्रवृत्तावहेतुत्वादिति भावः । असङ्गतमिति । तत्र हेतुमाह—प्रवर्तक-तयेति । प्रवृत्तिजनकतया इत्यर्थः । अनुक्तत्वादिति । प्रमात्वनिश्चयः प्रवृत्तौ कारण-मित्यस्य शङ्काकोपवनभिधानादित्यर्थः । तथा च प्रवृत्तिमात्रे तस्य व्यभिचारादिति

अतः प्रवर्तकतया प्रामाण्यनिश्चयापेक्षैवाऽऽक्षेपकस्याभिमतय इत्यभिमानमूलकतया शङ्कां सङ्क्रमयति—प्रामाण्येति । प्रामाण्यनिश्चायनेन निःश्रेयसार्थिप्रवृत्तिजनकज्ञाने प्रामाण्यनिश्चयसम्पादनेन, निश्चीयमानप्रामाण्यकस्य स्वप्रतिपाद्य-'प्रमाणादिसत्त्वज्ञानधर्मिकनिःश्रेयससाधनत्वरूप'-प्रथमसूत्रार्थज्ञानस्य सम्पादनेनेति यावत् ।

निःश्रेयसेन सम्बध्यते इति । निःश्रेयसोपयोगि भवितुमर्हतीत्यर्थः । प्रमात्वस्य दुरवधारणतया च सूत्राधीनप्रयोजनवत्ताज्ञाने निश्चीयमानप्रामाण्यकत्वं न सम्भवतीति शेषः । प्रामाण्यनिश्चायनेनेति यथाश्रुतपरता तु न सङ्गच्छते, एतच्छास्त्रस्य मोक्षसाधनताज्ञाने प्रामाण्याबोधकत्वात् । शास्त्राधीनप्रमात्वग्रहे स्वतस्त्वाप्रसक्त्या स्वतः परतो वेत्यादिना स्वतस्त्वनिराकरणासङ्गतेश्च ।

---

तटस्थोक्तिस्सङ्गतेति भावः । अतः असङ्गतत्वात्, प्रवर्तकतया प्रवृत्तिजनकतया । प्रामाण्यनिश्चयापेक्षैवेति । एवकारेण विशेषणतावच्छेदकप्रकारकनिश्चयत्वेन प्रमात्वनिश्चयापेक्षाव्यावृत्तिः । शङ्काम् अथ किं प्रामाण्यज्ञानेनेत्यादिशङ्काम् । निःश्रेयसार्थिप्रवृत्तिजनकज्ञाने इति । निःश्रेयसार्थिनां या प्रवृत्तिः तज्जनकीभूतेष्टसाधनताज्ञाने इत्यर्थः । प्रमाणतत्त्वज्ञानमिष्टसाधनमित्याकारके इति भावः । सप्तम्यर्थो विशेष्यकत्वम्, तस्य प्रामाण्यनिश्चयेऽन्वयः । प्रामाण्यनिश्चयसम्पादनेनेति । प्रमात्वप्रकारकनिश्चयजननेनेत्यर्थः । प्रमाणतत्त्वज्ञानमिष्टसाधनमिति ज्ञानं प्रमेति निश्चयसम्पादनेनेति यावत् । प्रामाण्यनिश्चायनेनेति दीधितेरर्थद्वयं प्रथमसूत्रार्थज्ञानधर्मिकप्रामाण्यप्रकारकनिश्चयजनकत्वेनेत्येकः । 'प्रामाण्यनिश्चयविशेष्यीभूतप्रथमसूत्रार्थज्ञानजनकत्वेनेत्यपरः, केवलं विशेषणविशेष्यभावव्यत्यासात् । तत्र यथाश्रुतमर्थं प्रदर्श्य द्वितीयमर्थं दर्शयति—निश्चीयमानप्रामाण्यकस्येति। प्राचीनमते निश्चीयमानप्रामाण्यकस्यैवेष्टसाधनताज्ञानस्य प्रवृत्तिजनकत्वादिति भावः। स्वप्रतिपाद्येति। स्वम् आन्वीक्षिकी, तत्प्रतिपाद्यत्वकथनेन प्रमाणतत्त्वज्ञानमिष्टसाधनमिति ज्ञानस्य शास्त्राश्रवणप्रवर्तकत्वं सूचितम् । तथा हि—एतादृशेष्टसाधनताज्ञानात्प्रमाणादितत्त्वज्ञानेच्छा ततः शास्त्रश्रवणेच्छा ततस्तत्र प्रवृत्तिरिति । प्रमात्वस्य दुरवधारणतया चेति । प्रमात्वावधारणस्याऽशक्यतया चेत्यर्थः । सूत्राधीनप्रयोजनवत्ताज्ञाने इष्टसाधनताज्ञाने, प्रमाणतत्त्वज्ञानमिष्टसाधनमिति ज्ञाने इति यावत् । निश्चीयमानप्रामाण्यकत्वं प्रमाणतत्त्वज्ञानमिष्टसाधनमिति ज्ञानं प्रमेति निश्चय इत्यर्थः । न सम्भवतीति । प्रथमसूत्रान्निश्चितप्रामाण्यकप्रमाणादिपदार्थतत्त्वज्ञानधर्मिकेष्टसाधनताज्ञानं ततः पूर्वोक्तक्रमेण ग्रन्थश्रवणे प्रवृत्तिस्ततो मुक्तिरिति रीत्या शास्त्रं निःश्रेयसप्रयोजकं भवति परन्तु प्रवृत्तिरेव न सम्भवति वक्ष्यमाणरीत्या प्रमात्वनिश्चयासम्भवेन निश्चितप्रामाण्यकतादृशेष्टसाधनताज्ञानाभावादिति भावः । तथा च प्रकृत्यभावेन निःश्रेयसाऽभावाद् व्यर्थं शास्त्रप्रणयनमिति ध्येयम् ।

ननु प्रामाण्यनिश्चायनेनेत्यस्य प्रामाण्यनिश्चयजनकत्वरूप-यथाश्रुतार्थं परित्यज्य निश्चीयमानप्रामाण्यकस्य प्रथमसूत्रार्थज्ञानस्य सम्पादनेनेत्यर्थानुसरणं किमर्थमित्यत आह—यथाश्रुतपरता तु न सङ्गच्छते इति । तत्र हेतुमाह —एतच्छास्त्रस्येति । आन्वी-

( चि० म० ) अथ किं प्रामाण्यज्ञानेन । प्रवृत्तिमात्रे तस्य व्यभिचारात् । बहुवित्तव्यवायाससाध्ये प्रवृत्तिश्चावश्यकार्थनिश्चयादेव ।

---

इत्याशयं मन्वानः । नन्वित्याक्षेपकर्तुरित्याशयं मन्वानः । अभिमानश्चायं न दुर्घटः । तथाहि—परम्परयेत्यस्य प्रवर्त्तकज्ञाने प्रामाण्यनिश्चायनेनेत्यर्थकतायाः सम्भवात् । प्रमाणतत्त्वावधारणस्येत्यादेश्च शास्त्रश्रवणप्रवृत्तिनिर्वाह्यशास्त्राधीनप्रमाणतत्त्वावधारणस्याऽशक्यत्वात् । यतस्तत्र प्रवर्तकज्ञाने प्रमातत्त्वावधारणमपेक्षितम्, तच्च स्वतः परतश्च न सम्भवतीत्यर्थकताया अपि सम्भवात् । न चैवमेतदर्थकताभिप्रायः सम्भवदुक्तिक एव मूलकृत इति कथं तदभिमान इति वाच्यम् । सम्मुखत एवाक्षेपसङ्गतेस्तथाभिप्रायस्यानौचित्यात् ।

---

क्षिकीशास्त्रस्येत्यर्थः । प्रामाण्याबोधकत्वादिति । प्रमात्वप्रकारकबोधाजनकत्वादित्यर्थः । एतच्छास्त्रस्य प्रमाणादितत्त्वज्ञानधर्मिकनिःश्रेयससाधनत्वप्रकारकज्ञानजनकत्वेन प्रमाणादितत्त्वज्ञानमिष्टसाधनमिति ज्ञानं प्रमेति निश्चयाजनकत्वादिति भावः । शास्त्रस्य प्रमात्वबोधकत्वे त्वाह—शास्त्राधीनप्रमात्वग्रहे इति । प्रमात्वग्रहस्य शास्त्राधीनत्वे इति यावत् । स्वतस्त्वाप्रसक्त्येति । स्वतस्त्वाभावेन । इत्याशयं मन्वानः इत्याशयाभिमानी । तथा च प्रमाणादितत्त्वज्ञानमिष्टसाधनमिति ज्ञानं प्रमेति ज्ञानमेव निःश्रेयसार्थिप्रवृत्तिजनकं तज्जनकतयैव शास्त्रस्य मोक्षोपयोगित्वमित्याशय एव नन्वित्याक्षेपकर्त्तुरित्यभिमानवतस्तटस्थस्य अथेत्याद्याशङ्केति सर्वसमञ्जसम् । मन्वान इत्यनेनाऽन्यदुक्तमन्यद्बुद्धमिति सूचितम् । अभिमानश्चायमिति । नन्वित्याद्याक्षेपकर्तुस्तादृशाशय इति भ्रम इत्यर्थः । तटस्थस्येति शेषः । न दुर्घट इति । नाशक्य इत्यर्थः । भ्रमसामग्रीं दर्शयति—तथाहीति । प्रवर्तकज्ञाने निःश्रेयसार्थिप्रवृत्तिजनकेष्टसाधनताज्ञाने । प्रामाण्यनिश्चायनेनेति । प्रमात्वनिश्चयसम्पादकत्वेनेत्यर्थः । प्रमाणतत्त्वज्ञानमिष्टसाधनमिति ज्ञानं प्रमेति निश्चयजनकत्वेनेति यावत् । प्रमाणतत्त्वावधारणस्येत्यादेश्चेति । प्रमाणतत्त्वावधारणस्याऽशक्यत्वादिति मूलस्येत्यर्थः । प्रवृत्तिनिर्वाह्येति । निर्वाह्यं चात्र प्रयोज्यत्वरूपं, तच्च ज्ञानज्ञाप्यत्वरूपं, धूमप्रयोज्यो वह्निरितिवत् । एतदर्थकताभिप्राय इति । एतादृशाशय इत्यर्थः । कथं तदभिमान इति । तथा च यदुक्तं तद्बुद्धं न तु अन्यदुक्तमन्यद्बुद्धमित्याशयः । सम्मुखतः यथाश्रुतशब्दतः ।

प्रामाण्यावधारणात्मकज्ञानस्यैवेति । एवकारेण प्रामाण्यज्ञानसामान्यव्यवच्छेदः । प्राक् पूर्वं, तच्च स्वतः परतो वा न सम्भवतीति ग्रन्थेनेति शेषः । दुर्घटत्वोक्तेः दुर्घटत्वकथनात्, तस्यैव प्रामाण्यनिश्चयस्यैव । एवकारव्यवच्छेद्यं स्पष्टयति—न त्विति । तद्ज्ञानसामान्यस्येति । प्रामाण्यज्ञानसामान्यस्येत्यर्थः । तद्ज्ञानस्यानुयोगित्वे शङ्कनीये सति । उत्तरकालं तन्निश्चयस्तद्धेतुरिति ग्रन्थेन, अतः प्रामाण्यनिश्चयस्यैवोपयोगिताव्यवस्थापनात् । ज्ञानपदमिति । प्रामाण्यज्ञानेनेत्यत्र ज्ञानपदमित्यर्थः ।

मूले—तस्य प्रामाण्यनिश्चयस्य । व्यभिचारादिति । विसंवादिप्रवृत्तेस्तेन विनापि

( चि० म० ) न च यस्य संशयव्यतिरेकनिश्चयौ प्रवृत्तिप्रतिबन्धकौ तन्निश्चयस्तद्धेतुरनुमितौ व्याप्तिरिवेति वाच्यम् ।

---

प्रामाण्यज्ञानेन=प्रामाण्यनिश्चयेन ।

---

प्रामाण्यावधारणात्मकज्ञानस्यैव प्राग्दुर्घटत्वोक्तेरथेत्यादिना तस्यैवानुपयोगित्वं शङ्कितुमुचितम्, न तु तज्ज्ञानसामान्यस्य, तथा सति उत्तरकालं निश्चयमात्रस्यैवोपयोगिताव्यवस्थापनमप्यसङ्गतं स्यादतो ज्ञानपदं निश्चयपरतया व्याचष्टे—प्रामाण्यज्ञानेनेति ।

---

जननादित्यर्थः । अत इष्टसाधनताज्ञानमेव हेतुरिति भावः । ननु मास्तु विसंवादिप्रवृत्तौ प्रामाण्यनिश्चयस्य हेतुत्वम्, संवादिप्रवृत्तौ तु सोऽवश्यमपेक्षणीय इत्यत आह—बहुवित्तेति । प्रवृत्तिः—संवादिप्रवृत्तिः । अर्थसन्देहस्य प्रवर्तकतानिराकरणाय—अर्थनिश्चयादेवेति । इष्टसाधनतानिश्चयादेवेत्यर्थः । एवकारेण प्रामाण्यनिश्चयो व्यवच्छिद्यते, तथा च संवादिप्रवृत्तेरपीष्टसाधनतानिश्चयादेवोपपत्तौ प्रामाण्यनिश्चयोऽन्यथासिद्ध इति भावः । न च विनिगमनाविरहादिष्टसाधनतानिश्चय एवान्यथासिद्धोऽस्तु इति वाच्यम् । साधनतासंसर्गकफलनिश्चयासत्त्वे तद्धर्मिकप्रमात्वनिश्चयेऽपि प्रवृत्त्यनुत्पत्तेरेव विनिगमकत्वादिति ध्येयम् ।

माध्यमिकस्तटस्थशङ्कां निराकर्तुं प्रामाण्यनिश्चयस्य कारणतां व्यवस्थापयितुं शङ्कते दीधितौ—न चेति । प्रामाण्यनिश्चयः प्रवृत्तिकारणं प्रामाण्यसंशयसत्त्वे प्रामाण्यव्यतिरेकनिश्चयसत्त्वे च प्रवृत्तिप्रतिबन्धात् । तथा च प्रवृत्तिः प्रामाण्यनिश्चयजन्या प्रामाण्यसंशयस्य प्रामाण्यव्यतिरेकनिश्चयस्य च प्रतिबध्यत्वादित्यनुमानेन प्रामाण्यनिश्चयजन्यत्वं साधनीयम्, तथा च साध्यहेत्वोर्न वैयधिकरण्यम् । सामान्यव्याप्तिमाह—यस्य संशयव्यतिरेकनिश्चयौ इति । यस्य संशयः यस्य व्यतिरेकनिश्चयश्चेत्यर्थः । प्रवृत्तिः उत्पत्तिः, अत्रापि यस्येत्यनुषज्यते । प्रवृत्तिपदस्य यथाश्रुतार्थकत्वे अनुमितौ व्याप्तेरिवेति दृष्टान्ताऽसङ्गतिः । अत एव वक्ष्यति प्रवृत्तिरिति प्रकृताभिप्रायमिति । तथा च यस्य संशयः यस्य व्यतिरेकनिश्चयश्च यत्र प्रतिबन्धकस्तन्निश्चयस्तद्धेतुरिति फलितम् । प्रकृते प्रमाणतत्त्वज्ञानमिष्टसाधनमिति ज्ञानधर्मिकप्रमात्वसंशयः 'प्रमाणतत्त्वज्ञानमिष्टसाधनमिति ज्ञानं प्रमा न वेत्याकारकः' प्रमात्वव्यतिरेकनिश्चयश्च 'तादृशज्ञानमप्रमेत्याकारकः' प्रमाणतत्त्वप्रतिपादकग्रन्थाध्ययनप्रवृत्तौ प्रतिबन्धकः अतस्तादृशज्ञानधर्मिकप्रमात्वनिश्चयः 'तादृशज्ञानं प्रमेत्याकारकः' तादृशप्रवृत्तौ हेतुः । दृष्टान्तमाह—अनुमितौ व्याप्तेरिवेति । अनुमितौ व्याप्तिनिश्चय इवेत्यर्थः । व्याप्तिसंशयः । 'धूमो वह्निव्याप्यो न वेत्याकारकः' व्याप्तिव्यतिरेकनिश्चयश्च 'धूमो वह्निव्याप्त्यभाववानि'त्याकारकः पर्वतो वह्निमानित्यनुमितौ प्रतिबन्धकः, अतो व्याप्तिनिश्चयः 'धूमो वह्निव्याप्य इत्याकारकः' पर्वतो वह्निमानित्यनुमितौ हेतुः । तथा च यत्र यत्संशय-यद्व्यतिरेकनिश्चयनिष्ठप्रतिबन्धकतानिरूपितप्रतिबध्यतावत्त्वं तत्र तन्निश्चयजन्यत्वमिति सामान्यव्याप्तिः ।

'यस्य संशयव्यतिरेकनिश्चयौ' इति मूलं यद्व्यतिरेकज्ञानसामान्यपरतया अनुपदं वर्णनीयम्, सामान्यलाभश्च यावद्विशेषोपादानादेव। तच्च यथाश्रुते नोपपद्यते। यत्संशयानात्मकयद्व्यतिरेकसंशयानुपादानात्। तदभाववद्भेदकोटिकतदभावसंशयस्य तत्संशयानात्मकत्वात्। एवं यत्संशयादिपदं यद्रूपावच्छिन्नविषयकसंशयादिपरमवश्यं

अत्र यस्य संशयो यत्र प्रतिबन्धक इत्येतावन्मात्रोक्तौ व्यभिचारसंशयस्य व्याप्तिज्ञानप्रतिबन्धकत्वाद्। अथ च व्याप्तिज्ञाने व्यभिचारनिश्चयजन्यत्वविरहाद् व्यभिचारवारणाय यद्व्यतिरेकनिश्चयः प्रतिबन्धक इत्युक्तम्, तथा च व्यभिचारव्यतिरेकनिश्चयस्य व्याप्तिज्ञानेऽप्रतिबन्धकत्वान्न व्यभिचारः। तावन्मात्रोक्तौ योग्यताव्यतिरेकनिश्चयस्य शाब्दबोधे प्रतिबन्धकत्वाद् अथ च योग्यतानिश्चयजन्यत्वविरहाद् व्यभिचारवारणाय यस्य संशय इत्युक्तम्, तथा च योग्यतासंशयस्य शाब्दबोधेऽप्रतिबन्धकत्वान्न व्यभिचारः। संशयनिश्चयसाधारणयोग्यताज्ञानत्वेन कारणत्वादिति भावः।

वस्तुतो घटव्यतिरेकनिश्चयस्य घटवत्ताबुद्धौ प्रतिबन्धकत्वाद् अथ च घटनिश्चयजन्यत्वविरहाद् व्यभिचारवारणाय यस्य संशयेत्युक्तम्, घटसंशयस्तु घटवत्ताबुद्धौ न प्रतिबन्धकः, ग्राह्यसंशयत्वात्। ग्राह्यसंशयस्तु न प्रतिबन्धक इति स्वयमेव वक्ष्यमाणत्वात्।

**अनुपदमिति**। तेन यद्व्यतिरेकज्ञानत्वेन प्रतिबन्धकता लभ्यते इति ग्रन्थेनेति भावः। सामान्यलाभश्च सामान्यपरता च। **यावद्विशेषोपादानादेवेति**। यावद्विशेषपरत्वादेवेत्यर्थः। तच्च यावद्विशेषपरत्वं च। यथाश्रुते यस्य संशयव्यतिरेकनिश्चयौ इति वाक्यात्। **नोपपद्यते इति**। अनुपपन्नमिति यावत्। न च संशयत्वनिश्चयत्वयोर्हेतुघटकत्वं किमर्थम्, यद्व्यतिरेकज्ञानं यत्र प्रतिबन्धकमित्येव कथं नोक्तमिति वाच्यम्। प्रतिबन्धकतायां यद्व्यतिरेकज्ञानत्वरूपसामान्यधर्मव्यापकतालाभायैव तदुपादानात्। शब्दाधिक्ये नार्थाधिक्यमिति न्यायादिति भावः। यावद्विशेषपरत्वानुपपत्तौ साधकमाह—**यत्संशयानात्मकेति**। व्याप्तिसंशयानात्मकेत्यर्थः। **यद्व्यतिरेकसंशयानुपादानादिति**। व्याप्तिव्यतिरेकसंशयाग्रहणादित्यर्थः। व्याप्त्यभाववान्न वेति संशयानुपादानादिति यावत्। तत्र हेतुमाह—**तदभाववद्भेदकोटिकेति**। व्याप्त्यभाववद्भेदकोटिकेत्यर्थः। तदभावसंशयस्य व्याप्त्यभावसंशयस्य, तत्संशयानात्मकत्वात् व्याप्तिसंशयानात्मकत्वात्, व्याप्तिव्यतिरेकनिश्चयानात्मकत्वाच्चेत्यपि बोध्यम्। तथा च यत्संशययद्व्यतिरेकनिश्चयान्यतरत्वं यदि यद्व्यतिरेकज्ञानत्वसमनियतं स्यात्तदा लाघवाद् यद्व्यतिरेकज्ञानत्वं प्रतिबन्धकतावच्छेदकं स्यात्, तच्च न सम्भवति। तादृशान्यतरत्वाभाववति व्याप्त्यभाववान्न वेति संशये व्याप्तिव्यतिरेकज्ञानत्वसत्त्वादिति भावः। भेदकोटिकसंशयाऽसङ्ग्रहमुक्त्वाऽत्यन्ताभावकोटिकतदसङ्ग्रहमाह—**एवमिति**। व्याप्त्यभावाभावस्य व्याप्तिरूपतया यस्य संशय इत्येतावन्मात्राभिधानेऽपि अत्यन्ताभावकोटिकसंशयस्य उक्तभेदकोटिकसंशयस्यापि सङ्ग्रहात्प्रथमतो यत्संशयपदार्थं दर्शयति—**यत्संशयादिपदमिति**। **अवश्यं वाच्यमिति**। यद्रूपावच्छिन्नविषयकसामान्यपरमवश्यं वाच्यमित्यर्थः। व्याप्तिसंशयात्मकघटव्यति-

यस्य संशयव्यतिरेकनिश्चयौ=यद्व्यतिरेकसंशयनिश्चयौ ।

---

वाच्यम्, व्याप्तिसंशयादिसामान्यान्तर्गतानां किञ्चिद्रूपेण व्याप्तिप्रकारकनानासंशयानाम् अनुमित्युत्पत्तावप्रतिबन्धकत्वात् ।

तथा च व्याप्तित्वावच्छिन्नसंशयानात्मकोऽपि व्याप्त्यभावाभावत्वादिना व्याप्तिविषयकव्याप्त्यभावादिसंशयः सम्भवतीति व्याप्तित्वाद्यवच्छिन्नसंशयत्वेन तदुपादाना-

---

रेकनिश्चयप्रतिबध्यस्य घटविशिष्टज्ञानस्य व्याप्तिनिश्चयांऽजन्यत्वाद् व्यभिचारवारणाय सामान्यपदम् । तथा च यद्रूपावच्छिन्नविषयकसंशयत्वव्यापकत्वं प्रतिबन्धकतायामुपादेयमिति भावः । यद्रूपावच्छिन्नेत्यस्य व्यावृत्तिमाह—व्याप्तिसंशयसामान्यान्तर्गतानामिति । किञ्चिद्रूपेण प्रमेयत्वादिना । व्याप्तिप्रकारकनानासंशयानामिति । प्रमेयत्वेन व्याप्त्यवगाहि 'धूमः प्रमेयवान्न वे'ति संशयानामित्यर्थः । अनुमित्युत्पत्तावप्रतिबन्धकत्वादिति । अनुमितावप्रतिबन्धकत्वादित्यर्थः । तथा च यत्संशयसामान्यान्तर्गत-'धूमः प्रमेयवान्न वे'ति संशयनिष्ठप्रतिबन्धकताकत्वस्यानुमितौ विरहाद् दृष्टान्तासिद्धिरतो यत्संशयपदेन यद्रूपावच्छिन्नविषयकसंशयपरत्वमवश्यं वाच्यमिति भावः । तदुपादाने तु व्याप्तित्वावच्छिन्नविषयकसंशयसामान्यस्यैवानुमितौ प्रतिबन्धकत्वान्नादृष्टान्तासिद्धिः । एवं चोक्तभेदकोटिकात्यन्ताभावकोटिकसंशययोरसङ्ग्रहो दुर्वार एवेति भावः । इदमुपलक्षणम् । प्रमात्वसंशयसामान्यान्तर्गतानां किञ्चिद्रूपेण प्रमात्वविषयकसंशयानां प्रवृत्तावप्रतिबन्धकत्वात्स्वरूपासिद्धिरपि बोध्या ।

अत्रेदं विचारणीयम्—यत्संशयत्वावच्छिन्नत्वमेव प्रतिबन्धकतायां निवेशनीयम्, व्यापकत्वं यद्रूपावच्छिन्नविषयकत्वमपि न निवेशनीयम्, व्याप्तिसंशयरूपघटाभावनिश्चयमादाय घटवत्ताज्ञाने यत्संशयत्वावच्छिन्नप्रतिबन्धकताविरहान्न व्यभिचारः । संशयत्वावच्छिन्नेत्यत्र संशयत्वावच्छिन्नत्वं संशयत्वनिष्ठावच्छेदकताकत्वं, तत्र संशयत्वनिष्ठावच्छेदकत्वं स्वरूपसम्बन्धविशेषः । धूमो वह्निव्याप्यो न वेति संशयवत् धूमो वह्निव्याप्त्यभाववान्न वेति संशयस्यापि प्रतिबन्धकतया व्याप्त्यभावाभावत्वेन व्याप्तिकोटिकव्याप्त्यभावसाधारणानुरोधेन व्याप्तित्वावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नकोटिकसंशयत्वस्यैव स्वरूपसम्बन्धरूपावच्छेदकतावत्वात्, व्याप्तित्वावच्छिन्नकोटिकसंशयत्वस्य व्याप्त्यभावाभावत्वावच्छिन्नकोटिकसंशयसाधारण्यविरहात् । व्याप्तिकोटिकसंशयत्वस्योभयसाधारण्येऽपि किञ्चिद्रूपेण व्याप्तिप्रकारकनानासंशयसाधारण्येनाऽतिप्रसक्तत्वात् । तथा च व्याप्तित्वावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नकोटिकसंशयत्वस्यैव प्रतिबन्धकतावच्छेदकत्वे दृष्टान्तासिद्ध्यादेरभावेन यद्रूपावच्छिन्नविषयकत्वं न निवेशनीयम् । अग्रे च स्वरूपसम्बन्धरूपावच्छेदकत्वं निराकृत्य व्यापकत्वं निवेशितमित्यस्मद्गुरुचरणाः ।

यत्संशयपदस्य यद्रूपावच्छिन्नविषयकसंशयपरत्वे अत्यन्ताभावकोटिकसंशयाऽसङ्ग्रह इत्याह—तथा चेति । यत्संशयपदस्य यद्रूपावच्छिन्नविषयकसंशयपरत्वे चेत्यर्थः ।

ऽसम्भवादसङ्गतिः, अतो व्यतिरेकपदव्यत्यासेन व्यतिरेकविषयकसंशयनिश्चयपरतया व्याचष्टे—यस्येति ।

परे तु यथाश्रुते यस्येति षष्ठ्याः प्रतियोगित्वरूपार्थो व्यतिरेकान्वयी, अन्यश्च विषयतारूपः संशयान्वयी, अतस्तस्या एकार्थपरत्वनिर्वाहाय व्यतिरेकपदं व्यत्यस्यति—यस्येति । न च घटस्य संशय इत्यादौ एकधर्मिकघटतदभावावगाहिज्ञानलाभाय संशयपदं व्यतिरेकावगाहिसमानधर्मिकज्ञानपरम् । प्रतियोगित्वं विषयत्वं च षष्ठ्या अर्थः । संशयपदार्थैकदेशे व्यतिरेके प्रतियोगित्वस्य ज्ञाने च विषयत्वस्यान्वय इति व्युत्पत्तिरावश्यकीति षष्ठ्या अर्थद्वयपरत्वमावश्यकमेवेति कथमेतदिति वाच्यम् । यतः स्वावच्छिन्न-

---

सम्भवतीति । यावद्विशेषान्तर्गत इत्यादिः । तदुपादानाऽसम्भवादिति । धूमो व्याप्त्यभाववान् व्याप्त्यभावाभाववान् वेति संशयाऽसङ्ग्रहादित्यर्थः । असङ्गतिरिति । यावद्विशेषपरत्वासङ्गतिरित्यर्थः । तथा च यद्व्यतिरेकज्ञानसामान्यपरत्वाऽसङ्गतिरिति यावत् । एतेन व्याप्त्यभावाभावत्वावच्छिन्नकोटिकसंशयाऽसङ्ग्रहो अस्तु व्याप्तित्वावच्छिन्नकोटिकसंशयत्वव्यापकप्रतिबन्धकतानिवेशस्यैव युक्तत्वादिति निरस्तम् । व्यतिरेकज्ञानत्वेन पर्यवसानानुपपत्तेरेव तदर्थत्वात् । अतः उक्तसंशयसङ्ग्रहायेति यावत् । व्यतिरेकपदव्यत्यासेनेति । व्यतिरेकपदस्य संशयात्पूर्वं योजनेनेति भावः । व्यतिरेकसंशयनिश्चयपरतया । यस्येत्यादिः । तथा च यस्य व्यतिरेकसंशयः यस्य व्यतिरेकनिश्चयश्चेत्यर्थलाभात्, यद्रूपावच्छिन्नप्रतियोगिताकाभावसंशयनिश्चयौ यत्र प्रतिबन्धकौ तद्रूपावच्छिन्ननिश्चयस्तद्धेतुरिति पर्यवसितम् । अत्र यद्व्यतिरेकसंशय इत्यनेन व्याप्तिमान्न वेति संशये अभावकोटेः सत्त्वेन व्याप्तित्वावच्छिन्नाभावविषयकः सः—एवं व्याप्त्यभावान्न वेति संशयोऽपि 'भावकोटिमादाय' व्याप्तित्वावच्छिन्नाभावविषयक इति तयोर्नाऽसङ्ग्रहः ।

व्यतिरेकपदव्यत्यये बीजान्तरं प्रदर्शयतां मतमाह—परे त्विति । यथाश्रुते यथाश्रुतत्वं च निरूढलक्षणेतरलक्षणाग्रहाजन्यशक्तिभ्रमाजन्यशाब्दबोधेच्छयोच्चरितत्वम् । यस्येति षष्ठ्या इति । यस्य संशयव्यतिरेकनिश्चयौ इत्यत्र यस्येति षष्ठ्या इत्यर्थः । प्रतियोगित्वरूपार्थ इति । षष्ठ्या द्वावर्थौ—तत्रैकः प्रतियोगित्वरूपः=अभावान्वयी इत्यर्थः । अन्यश्च द्वितीयश्च, अतः अर्थद्वयकल्पनातः, तस्याः षष्ठ्याः, एकार्थपरत्वनिर्वाहाय प्रतियोगित्वपरतानिर्वाहाय, अन्यथा सकृदुच्चरित इत्यादि व्युत्पत्तिविरोधापत्तेरिति भावः ।

संशयसमभिव्याहृतषष्ठ्या अर्थद्वयकल्पनं क्लृप्तमेवेत्याशङ्कते—न चेति । संशयपदमिति । इदं च देहलीदीपकन्यायेनोभयत्र 'लाभायेत्यत्र, ज्ञानपरमित्यत्र चा'न्वेति । आवश्यकीति । न च संशयपदादेव घटविषयकघटप्रतियोगिकाभावावगाहि ज्ञानं बुध्यते इति वाच्यम् । घटस्येत्यनन्वयापत्तेः । यदि च तादृशपदसमभिव्याहारस्य तात्पर्यग्राहकत्वमुच्यते तदा संशयपदस्य नानाशक्तिकल्पनापत्तेः । एकशक्त्यनिर्वाहे एव नानाशक्तिकल्पनादिति भावः । अर्थद्वयपरत्वमावश्यकमिति । तथा चैकधर्मिक-

प्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्व-स्वसामानाधिकरण्योभयसम्बन्धेन विषयिताविशिष्टविषयिताशालिज्ञानं संशयपदार्थः। चरमविषयितायामेव षष्ठ्यर्थस्य निरूपकत्वस्य निरूप्यत्वस्य वाऽन्वयः।

घटप्रकारकघटप्रतियोगिकाभावप्रकारकं ज्ञानमिति घटस्य संशय इति वाक्याद् बोधः। कथमेतदिति। षष्ठ्या अर्थद्वयपरत्वस्यावश्यकत्वे व्यतिरेकपदव्यत्ययः· कथं कृत इति वाक्यार्थः। समाधत्ते—यत इति। स्वावच्छिन्नेति। स्वं विषयिता। घटस्य संशय इत्यादौ षष्ठ्यर्थो निरूपकत्वम्। तत्र प्रकृत्यर्थघटस्याऽऽधेयतयाऽन्वयः। निरूपकत्वस्य च निरूपितत्वसम्बन्धेन द्वितीयविषयितायामन्वयः। तथा चोक्तोभयसम्बन्धेन 'घटाभाव'विषयिताविशिष्टा या घटवृत्तिनिरूपकताकविषयिता तच्छालिज्ञानमिति बोधः। घटाभावस्य संशय इत्यादौ प्रथमविषयितापदेन घटविषयिता, अथ च द्वितीयविषयितापदेन घटाभाववृत्तिनिरूपकताकविषयिताग्राह्येति विशेषः। अत्राऽऽहार्यज्ञानवारणाय प्रथमसम्बन्धनिवेशः। विरोधिज्ञानद्वयस्य वारणाय द्वितीयसम्बन्धनिवेशः। समुच्चये प्रतिबन्धकतावच्छेदकीभूतविषयिताशून्यत्वान्न सङ्ग्रहः। निरवच्छिन्नसंयोगादिसम्बन्धेनैव प्रतिबन्धकत्वात्। अथ निरूपकत्वस्य षष्ठ्यर्थत्वे घटस्य संशयो न पटस्येति प्रयोगानुपपत्तिः, निरुक्तोभयसम्बन्धेन 'घटाभाव'विषयिताविशिष्टा या घटवृत्तिनिरूपकताका अथ च निरूपितत्वसम्बन्धावच्छिन्नप्रतियोगिताकपटवृत्तिनिरूपकत्वाभाववती विषयिता तच्छालिज्ञानमिति बोधः। तत्र निरूपितत्वसम्बन्धावच्छिन्नप्रतियोगिताकपटवृत्तिनिरूपकत्वाभावो विषयितायां बोधयितुमशक्यः, निरूपितत्वसम्बन्धस्य वृत्त्यनियामकतया तत्सम्बन्धावच्छिन्नप्रतियोगिताकपटवृत्तिनिरूपकत्वाभावाप्रसिद्धेः। सम्बन्धान्तरेण तादृशनिरूपकत्वाभावबोधे तु 'घटस्य संशयो न घटस्ये'ति प्रयोगापत्तिरित्यत आह—निरूप्यत्वस्य वेति। निरूपितत्वस्य वेत्यर्थः। स्वरूपसम्बन्धेनेति शेषः। तथा च स्वरूपसम्बन्धस्य वृत्तिनियामकतया नोक्तप्रयोगानुपपत्तिरिति भावः।

चरमविषयितामेवेति। एवकारेण प्रथमविषयिताया व्यवच्छेदः। ननु षष्ठ्यर्थनिरूप्यत्वस्य प्रथमविषयितायामन्वये का क्षतिरिति चेत्, सत्यम्। संशयपदस्योक्तोभयसम्बन्धेन विषयिताविशिष्टविषयिताया ज्ञाने च खण्डशः शक्तिः स्वीक्रियते। एवं च षष्ठ्यर्थनिरूप्यत्वस्य प्रथमविषयितायामन्वये एकदेशान्वयापत्तिः। न च खण्डशक्तिनये विषयिताविशिष्टविषयिताया गुरुत्वेन विषयिताद्वये ज्ञाने च शक्तिः। तथा च प्रथमविषयितायां षष्ठ्यर्थाऽन्वयेऽपि एकदेशान्वयाभावादिति वाच्यम्। खण्डशक्तिनये विषयितात्वेन विषयिताद्वये शक्तिस्वीकारे उद्देश्यतावच्छेदकविधेययोरैक्येन विषयितायां विषयितान्वयाऽसम्भवादतो विषयिताविशिष्टविषयितायां शक्तिस्वीकारस्यावश्यकतया एकदेशान्वयभीत्या चरमविषयितायामेव षष्ठ्यर्थान्वय इति ध्येयम्।

न च तत्रापि विषयिताविशिष्टविषयिताशालिज्ञानरूपसंशयपदार्थैकदेशे चरमविषयितायां षष्ठ्यर्थान्वये एकदेशान्वय इति वाच्यम्। निरुक्तोभयसम्बन्धेन विषयिताविशिष्टविषयिताशालिज्ञानं न संशयपदार्थः। किन्तु निरुक्तोभयसम्बन्धेन विषयिता-

विशिष्टविषयिताज्ञानैतदुभयम् । एवं च चरमविषयितायामन्वयोपगमे नैकदेशान्वयप्रसङ्गः ।

केचित्तु ससम्बन्धिकस्थले 'चैत्रस्य गुरुकुलमि'त्यादौ साक्षात्पदार्थतावच्छेदकेऽन्वयस्य व्युत्पन्नतया चरमविषयितायां षष्ठ्यर्थस्यान्वये एकदेशान्वयेऽपि न क्षतिः । तस्याः साक्षात्पदार्थतावच्छेदकत्वात् । तथा च निरुक्तोभयसम्बन्धेन विषयिताविशिष्टविषयिताशालिज्ञानमेव संशयपदार्थः । खण्डशक्तिवादिमते शक्तिद्वयकल्पनाया अन्याय्यत्वात् । कालातिरिक्तैकपदोपात्तपदार्थस्य विशेष्यविशेषणभावेनान्वयस्याव्युत्पन्नतया ज्ञाने विषयिताविशिष्टविषयिताऽन्वयायोगाच्च । परन्तु पदार्थतावच्छेदककोटिप्रविष्टायां 'पदार्थतावच्छेदकतावच्छेदकीभूतायां' प्रथमविषयितायां षष्ठ्यर्थान्वयस्याऽन्याय्यत्वात्, अपसिद्धान्ताच्चेति चरमविषयितायामेवेत्युक्तमित्याहुः । तच्चिन्त्यम् ।

अपरे तु संशयपदार्थघटकप्रथमविषयितायां षष्ठ्यर्थस्यान्वयोपगमे ज्ञानं घटनिरूपितविषयित्वाभाववदिति बाधनिश्चयदशायां घटस्य संशय इति वाक्यजन्यबोधापत्तिः, तादृशबाधनिश्चयसत्त्वे घटनिरूपितविषयिताविशिष्टविषयिताशालिज्ञाने बाधकाभावात्, चरमविषयितायां षष्ठ्यर्थान्वयोपगमे तु तादृशबाधनिश्चयस्य विषयिताविशिष्टघटनिरूपितविषयिताशालिज्ञानंप्रतिबन्धकत्वान्न तादृशबाधनिश्चयसत्त्वे तादृशवाक्यजन्यशाब्दबोधापत्तिरिति प्राहुः ।

यत्तु घटस्य संशयो न घटीय इति वाक्यजन्यबोधापत्तिः, घटनिरूपितविषयिताविशिष्टविषयिताशालिज्ञानं घटनिरूपितविषयित्वाभाववदिति शाब्दबोधे बाधकाभावादतो न प्रथमविषयितायां षष्ठ्यर्थान्वयः । चरमविषयितायामन्वये तु विषयिताविशिष्टघटनिरूपितविषयिताशालिज्ञानं घटनिरूपितविषयित्वाभाववदिति ज्ञानस्याऽऽहार्यतया तादृशवाक्यजन्यबोधानुदयादिति । तन्न । तादृशव्यवहारस्य संशयधर्मिकघटविषयितावदन्यत्वबोधकतया प्रामाण्यापत्तेरयोगात् । अन्यथा चरमविषयितायामन्वयेऽपि घटस्य संशयो न घटाभावीय इति व्यवहारस्य प्रामाण्यापत्तेर्दुर्वारत्वात् ।

वस्तुतो यद्व्यतिरेकज्ञानत्वेन प्रतिबन्धकता लभ्यते इति दीधितिकृदुक्तिरक्षार्थमेव तादृशान्वयस्य स्वीकारात् । तथाहि—प्रथमविषयितायां यद्व्यतिरेकनिरूपितविषयिताविशिष्टविषयिताशालिज्ञानलाभः । तथा सति व्यतिरेकनिरूपितविषयितायाः ज्ञानपदार्थेऽनन्वयाद् ज्ञाने व्यतिरेकविषयकत्वलाभो न स्यात्, चरमविषयतायामन्वये तु व्यतिरेकनिरूपितविषयिताशालिज्ञानलाभः । तत्र व्यतिरेकविषयितायाः ज्ञानांशेऽन्वयात्तन्मात्रोपादानेनैव सामञ्जस्ये नेतरांशो निवेशनीय इति दीधितिकृतस्तन्मात्रोक्तिरित्यस्मद्गुरवः ।

अत्रेदं बोध्यम्—प्रथमविषयितायां षष्ठ्यर्थान्वये पर्वतो वह्निमान् वह्न्यभावव्याप्यवान्न वेति संशयस्य वह्नेः संशयत्वापत्तिः । तादृशोभयसम्बन्धेन वह्निविषयिताविशिष्टायाः वह्न्यभावव्याप्यविषयितायाः तत्र सत्त्वात्, अतश्चरमविषयितायामेवेत्यभिहितम् । तथा च वह्निनिरूपितविषयितायां वह्न्यभावव्याप्यविषयितावैशिष्ट्य-

विरहान्नोक्तापत्तिः । किन्तु वह्न्यभावव्याप्यस्य संशय इत्येव प्रयोग इति भावः । न च चरमविषयितायां तस्यान्वयेऽपि वह्न्यभावव्याप्यांशे सन्दिग्धाप्रामाण्यक-पर्वतो वह्निमान्न वा वह्न्यभावव्याप्यवांश्चेति संशयस्य वह्न्यभावव्याप्यस्य संशयत्वापत्तिः, स्वावच्छिन्न-प्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्व-स्वसामानाधिकरण्योभयसम्बन्धेन वह्नि-त्वावच्छिन्नविषयिताविशिष्टा या वह्न्यभावव्याप्यविषयिता तद्वत्वस्य तादृश-ज्ञाने सत्त्वात् । यदि चरमविषयितायां कोटित्वादिकं निवेश्यते तदा नोक्तदोष इति वाच्यम् । तादृशसंशयस्य गृहीताप्रामाण्यकत्वस्वीकारेऽपि तस्याऽनाहार्यत्वानभ्युपगमेन प्रथमसम्बन्धविरहान्नापत्तिः । अनाहार्यत्वाभ्युपगमे तु स्वावच्छिन्नप्रतिबध्यतावत्त्व-स्वसामानाधिकरण्योभयसम्बन्धेन विषयितावैशिष्ट्यं निवेशनीयम् । प्रतिबध्यतावत्त्वं तु सामानाधिकरण्य-स्वनिरूपितप्रतिबन्धकतावच्छेदकत्वोभयसं० । अनाहार्यज्ञाने प्रतिबध्य-तावत्त्वविरहेणैव नोक्तवह्निव्याप्यस्य संशयत्वापत्तिः । न चैवं वह्निमान्पर्वतो वह्न्यभाव-व्याप्यवान्न वेति संशयस्य वह्नेः संशयत्वापत्तिः, वह्निनिरूपितविषयितायामुक्तोभय-सम्बन्धेन वह्न्यभावव्याप्यविषयितावैशिष्ट्यसत्त्वादिति वाच्यम् । चरमविषयिताया अवच्छेदकतानात्मकत्वेन विशेषणीयत्वादिति सङ्क्षेपः ।

न च स्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकत्व-स्वसामानाधि-करण्योभयसम्बन्धेन विषयितावैशिष्ट्यनिवेशान्नोक्तस्थले वह्न्यभावव्याप्यस्य संशय-त्वापत्तिः, वह्न्यभावव्याप्यनिरूपितविषयितायां तादृशप्रतिबध्यतावच्छेदकत्वविरहादिति वाच्यम् । अत्र कल्पे षष्ठ्यर्थस्य चरमविषयितायामन्वये पर्वतो वह्निमान् वह्न्यभाव-व्याप्यवान्न वेति संशयस्य वह्नेः संशयत्वापत्तिः, वह्निनिरूपितविषयितायां तादृशोभय-सम्बन्धेन वह्न्यभावव्याप्यविषयितावैशिष्ट्यसत्त्वात् । प्रथमविषयितायामन्वये तु तस्य लक्षणान्तरत्वमित्यवधेयम् ।

अथैवमपि भूतलं घटवन्न वेति संशयस्य भूतलस्य संशयत्वापत्तिः । निरुक्तोभय-सम्बन्धेन घटविषयिताविशिष्टभूतलविषयितायास्तत्र सत्त्वात् । न च चरमविषयितायाः प्रकारितात्वेन निवेशनीयतया नोक्तातिप्रसङ्गः, प्रकारितायां भूतलनिरूपितत्वाभावा-दिति वाच्यम् । तथा सति वायौ रूपं न वेति कोटिविशेष्यकसंशयस्य रूपसंशयत्वा-नुपपत्तिः । मैवम् । विशेष्यीभूतविषयितायां स्वनिरूपकतापर्याप्त्यधिकरणधर्मानव-च्छिन्नत्व-स्वावच्छिन्नविषयितानिरूपकतावच्छेदकधर्मावच्छिन्नविषयित्वानिरूपितत्वोभय-वत्वस्य विवक्षितत्वादिति दिक् । एवं प्रथमविषयिता भूतलं घटवन्न वेति संशये भूतलनिरूपितविषयितायां घटविषयितानिरूपकतावच्छेदकतापर्याप्त्यधिकरणघटत्वान-वच्छिन्नत्वसत्त्वेऽपि संशये कोटिद्वयविषयितयोः परस्परावच्छेद्यावच्छेदकभावात्, घटादि-विषयित्वावच्छिन्ना या घटाभावादिविषयिता तदनिरूपितत्वविरहादेव न भूतलसंशय-त्वापत्तिः । घटविषयितायां घटाभावविषयितानिरूपकघटितधर्मानवच्छिन्नत्वघटाभाव-विषयित्वावच्छिन्ना या घटविषयिता तदनिरूपितत्वस्य च 'स्वस्मिन् स्वनिरूपितत्व-विरहात्' सत्त्वात्तस्य घटसंशयत्वोपपत्तिश्च ।

एवं चाऽभावस्य संशयपदार्थाऽघटकतया तत्समभिव्याहृतषष्ठ्या अभावान्वयितदीयप्रतियोगित्वार्थकताया अनावश्यकता। न च विषयितानिरूपकत्वं विषयिताप्रतियोगित्वमेव, तथा च व्यतिरेके संशये चान्वयी एकविध एवार्थः षष्ठ्या इति कथं तदर्थभेदभयेन व्यतिरेकपदव्यत्यास इति वाच्यम्? अभावनिरूपितस्य विषयितानिरूपितस्य च प्रतियोगित्वस्यैकजातीयत्वविरहादित्याहुः।

अत्र संशयादिपदं प्रतिबध्यसमानधर्मितावच्छेदककयद्रूपावच्छिन्नाभावसंशयादिसामान्यपरमवश्यं वाच्यम्।

---

एव च विषयिताविशिष्टविषयिताशालिज्ञानस्य संशयरूपत्वे च। तत्समभिव्याहृतेति। संशयसमभिव्याहृतेत्यर्थः। षष्ठ्या इति। यस्य संशयव्यतिरेकनिश्चयौ इत्यत्र यस्येति षष्ठ्या इत्यर्थः। तदीये अभावीयेत्यर्थः। अनावश्यकतेति। तथा च षष्ठ्याः प्रतियोगित्वरूपार्थो न कल्पनीय इति भावः। संशयस्य पदार्थान्तरत्वमनभ्युपेत्यापि एकधर्मिकविरुद्धभावाऽभावावगाहि यथाश्रुतप्रथमसंशयपदार्थे एकार्थपरतानिर्वाह इत्याशङ्कते—न चेति। षष्ठीविभक्तेश्चात्राऽर्थद्वयमुक्तम्, प्रतियोगित्वं विषयत्वं च, विषयत्वं च विषयितानिरूपकत्वम्। निरूपकत्वस्य प्रतियोगित्वरूपत्वे एकविध एवार्थं इत्याह—विषयितानिरूपकत्वमित्यादिना। तथा च विषयितानिरूपकत्वस्य प्रतियोगित्वरूपत्वे च। एकविध एवेति। प्रतियोगित्वरूप एवेत्यर्थः। एवकारेण विषयताया व्यवच्छेदः। तदर्थभेदभयेनेति। षष्ठ्या अर्थद्वयकल्पनाभयेनेत्यर्थः। एकजातीयत्वविरहादिति। अभावीयप्रतियोगित्वनिष्ठस्य सांसर्गिकप्रतियोगित्वनिष्ठस्य च प्रतियोगितात्वस्य परस्परं वैलक्षण्यादिति भावः। आहुरित्यस्वरसः—तद्बीजं तु तात्पर्यग्रन्थे सकृदुच्चरित इति व्युत्पत्तेर्निराकार्यतया अर्थद्वयकल्पनस्य सुकरत्वात्। सकृदुच्चरितादपि उभयबोधस्य मणिकारादिसम्मतत्वात्। अत एव तात्पर्यसत्त्वे सकृदुच्चरितादपि शब्दादुभयबोधस्य इष्टत्वादिति मणिकारेणोक्तम्।

यद्व्यतिरेकसंशयनिश्चयौ यत्र प्रतिबन्धकौ इत्यत्र यद्व्यतिरेकज्ञानत्वव्यापकप्रतिबन्धकत्वाप्रसिद्ध्या स्वरूपासिद्धिरतो धर्मिनिवेशनायाह—अत्रेति। यद्व्यतिरेकसंशयनिश्चयौ इत्यत्रेत्यर्थः। घटकत्वं सप्तम्यर्थः। संशयादिपदमिति। आदिना यद्व्यतिरेकनिश्चयपरिग्रहः। प्रतिबध्यसमानधर्मितावच्छेदककेति। इदं च संशयविशेषणम्। अत्र प्रतिबध्यः—व्याप्तिनिश्चयप्रतिबध्यः, प्रतिबध्यपदं व्याप्तिनिश्चयप्रतिबध्यपरम्, व्याप्तिव्यतिरेकसंशयनिश्चययोः व्याप्तिनिश्चयप्रतिबध्यत्वात्। समानेति। प्रतिबन्धकीभूतव्याप्तिनिश्चयसमानेत्यर्थः। प्रतिबध्यसमानधर्मितावच्छेदककयोः कर्मधारयः। तथा च अथ च व्याप्तिनिश्चयधर्मितावच्छेदकधर्मितावच्छेदककश्च यः संशय इत्यर्थः। न चेदं विशेषणं किमर्थमिति वाच्यम्। तथा सति निर्धर्मितावच्छेदककज्ञानस्याऽप्रतिबन्धकतया यद्व्यतिरेकज्ञानत्वव्यापकप्रतिबन्धकत्वाप्रसिद्ध्या साधनाप्रसिद्धेः।

एतेन प्रतिबध्येन समानः प्रतिबध्यसमानः, प्रतिबध्यसमानः धर्मितावच्छेदको यस्य सः। तस्य संशयेन कर्मधारयः। प्रतिबध्यधर्मितावच्छेदकधर्मितावच्छेदककेत्यर्थः।

**अन्यथा समूहालम्बनरूपघटाभावादिनिश्चयात्मकव्याप्त्यादिव्यतिरेकसंशयादिप्रतिबध्यस्य घटादिज्ञानस्य व्याप्त्यादिनिश्चयाऽहेतुकत्वाद् व्यभिचारापत्तेः। एवं च,व्यतिरेकनिश्चयत्वादिघटकव्यतिरेकज्ञानत्वपुरस्कारेण तज्ज्ञानसामान्यनिवेशादेवोपपत्तेस्तद्घटकदलान्तरोपादानमितरपदोपादानं च व्यर्थम्।**

---

प्रतिवध्यपदमनुमित्यादिपरम्। तथा च दृष्टान्तासिद्धिः, तथाहि—व्याप्तिव्यतिरेकसंशयादिप्रतिबध्याया: अनुमितेर्धर्मितावच्छेदकं पर्वतत्वादिकं तन्न व्याप्तिव्यतिरेकसंशयादिधर्मितावच्छेदकम् अपि तु धूमत्वादिकमित्येवेति निरस्तम्। प्रतिबध्यश्चासौ समानधर्मितावच्छेदककश्चेत्येव विग्रहः। तथा च व्याप्तिसंशयः व्याप्तिव्यतिरेकनिश्चयो व्याप्तिनिश्चयस्य प्रतिबध्यः, तत्समानधर्मितावच्छेदककश्चेत्यर्थः। तथा च यत्सत्त्वे यदनुत्पत्तिप्रयुक्तानुमित्यनुत्यनुत्पादः प्रतिबध्यपदेन तस्य ग्रहणात्, व्याप्तिसंशयसत्त्वे व्याप्तिनिश्चयानुत्पत्तिप्रयुक्तानुमितेरनुत्पाद इति व्याप्तिनिश्चय एव धर्मितानिरूपको बोध्यः। व्याप्तिनिश्चयस्य धर्मितावच्छेदकं यद् धूमत्वादिकं तदेव संशयधर्मितावच्छेदकमिति न दृष्टान्तासिद्धिः।

न च शिरोमणिमते ग्राह्यसंशयस्याऽप्रतिबन्धकत्वान्न व्याप्तिसंशयो व्याप्तिनिश्चयप्रतिबध्य इति व्याप्तिसंशयप्रयुक्तानुत्पादो व्याप्तिनिश्चयस्य दुर्घट इति वाच्यम्। तथापि व्याप्तिव्यतिरेकनिश्चयप्रतिबध्यत्वस्य तत्र सत्त्वात्।

अथवा ग्राह्याभावावगाहित्वेन यद्व्यतिरेकनिश्चयप्रतिबध्यपरं प्रतिबध्यपदम्। तथा च यद्व्यतिरेकनिश्चयप्रतिबध्यतावच्छेदक-'विशेष्य'तावच्छेदकनिष्ठविशेष्यतावच्छेदकताकसंशयादिपरमिति ग्रन्थार्थः। तेन यद्व्यतिरेकनिश्चयप्रतिबध्यीभूतमन्यधर्मितावच्छेदकसमूहालम्बनात्मकं यन्निश्चयमादाय न दृष्टान्तासिद्धिरिति ध्येयम्।

यत्तु धूमपक्षकस्थलानुरोधेन प्रतिबध्यसमानधर्मितावच्छेदककत्वकथनम्। तन्न समीचीनम्। दृष्टान्तासिद्धिवारणेऽपि प्रवृत्तौ स्वरूपासिद्धेर्दुर्वारत्वादिति दिक्।

सामान्यपदस्य व्यावृत्तिमाह—**अन्यथेति**। व्यापकत्वार्थकसामान्यपदानिवेशे इत्यर्थः। **समूहालम्बनरूपघटाभावादिनिश्चयात्मकेति**। अस्य संशयेऽन्वयः। धूमो वह्न्यभावव्याप्त्यभाववान्न वा घटाभाववांश्चेत्याकारकेत्यर्थः। **संशयादीत्यादीना** निश्चयपरिग्रहः। तथा च धूमो वह्न्यभावव्याप्त्यभाववान् घटाभाववांश्चेति निश्चयप्रतिबध्यस्येत्यपि बोध्यम्। **व्यभिचारापत्तेरिति**। तथा च समूहालम्बनोक्तव्याप्तिव्यतिरेकसंशयप्रतिबध्यत्वस्य तादृशव्याप्तिव्यतिरेकनिश्चयप्रतिबध्यत्वस्य च घटादिज्ञाने सत्त्वेन तत्र व्याप्तिनिश्चयजन्यत्वविरहाद् व्यभिचारः स्यादतः सामान्यपदोपादानमिति भावः। यद्व्यतिरेकज्ञानत्वेन प्रतिबन्धकताया लाभप्रकारमाह—**एवं चेति**। व्यापकत्वनिवेशे चेत्यर्थः। अस्य चोपपत्तेरित्यनेनान्वयः। **व्यतिरेकनिश्चयत्वादिघटकेति**। व्यतिरेकनिश्चयत्वं च व्यतिरेकाभावाप्रकारकत्वे सति व्यतिरेकप्रकारकज्ञानत्वम्। तद्घटकेत्यर्थः। **व्यतिरेकज्ञानत्वपुरस्कारेणेति**। व्यतिरेकप्रकारकज्ञानत्वप्रकारेणेत्यर्थः।

यदि च संशयत्वादिव्यापकत्वेन प्रतिबन्धकतानिवेशे तज्ज्ञानत्वव्यापकताघटकप्रतियोगितावच्छेदकत्वाभावादन्य एव तदभावः संशयत्वादिव्यापकताघटक इत्यवैयर्थ्यम्, संशयत्वनिश्चयत्वे अव्याप्यवृत्तिजातिविशेषाविति मते तच्छरीरे ज्ञानत्वस्यानन्तर्भावादपि न वैयर्थ्यशङ्का, तथापि अनुचितं गौरवं संशयनिश्चययोः पृथङ्निवेशपक्षे दुर्वारमेवेति मनसिकृत्य फलितार्थमाह—तेनेति ।

---

तज्ज्ञानसामान्यनिवेशादेवेति । व्यतिरेकप्रकारकज्ञानसामान्यनिवेशादेवेत्यर्थः । एवकारव्यवच्छेद्यं स्पष्टयति—तद्घटकेति । निश्चयत्वघटकेत्यर्थः । दलान्तरोपादानमिति । तदभावाप्रकारकत्वदलोपादानमित्यर्थः । इतरपदोपादानं संशयपदोपादानमित्यर्थः । एवं व्यतिरेकनिश्चयत्वादीत्यत्रादिपदग्राह्यसंशयत्वघटकयद्रूपावच्छिन्नकोटिकत्वदलं निश्चयपदोपादानं चेत्यपि बोध्यम् । व्यर्थमिति । व्याप्तिज्ञाने व्यभिचारव्यतिरेकसंशयप्रतिबध्यत्वमादाय व्यभिचारवारणाय यद्व्यतिरेकनिश्चयस्य, घटज्ञाने घटव्यतिरेकनिश्चयप्रतिबध्यत्वमादाय व्यभिचारवारणाय यद्व्यतिरेकसंशयपदस्य च सार्थक्यं सम्भवति, परन्तु यद्व्यतिरेकज्ञानत्वव्यापकप्रतिबन्धताकत्वविरहान्न तत्र तत्र व्यभिचार इति भावः ।

अत्रेदं बोध्यम्—प्रतिबध्यसमानधर्मितावच्छेदककत्वरूपं विशेषणं संशये निश्चये वा अन्यतरत्र निवेश्यं न तूभयत्र, प्रयोजनाभावात् । वस्तुतो ग्राह्यसंशयस्याऽप्रतिबन्धकत्वमते निश्चये एव तन्निवेश्यम् । संशये तन्निवेशपक्षे निश्चयपदोपादानं, संशयघटकयद्रूपावच्छिन्नकोटिकत्वदलं च व्यर्थम्, एवं निश्चये तन्निवेशपक्षे च संशयपदं निश्चयत्वघटकतदभावाप्रकारकत्वदलोपादानं च व्यर्थम् । तथा च व्यतिरेकज्ञानत्वेन प्रतिबन्धकत्वं पर्यवसितम् । अखण्डाभावघटकतया तयोः सार्थक्यमित्याशङ्कते—यदि चेति । तज्ज्ञानत्वव्यापकताघटकेति । यद्व्यतिरेकज्ञानवृत्तिभेदप्रतियोगितावच्छेदकत्वाभावरूपव्यापकताघटकेत्यर्थः । तदभावः यद्व्यतिरेकसंशयत्वव्यापकताघटकप्रतियोगितावच्छेदकत्वाभावः । संशयत्वव्यापकता च यद्व्यतिरेकसंशयवृत्तिभेदप्रतियोगितावच्छेदकत्वाभावरूपा । अवैयर्थ्यमिति । व्यापकताघटकाभावभेदादित्यर्थः । स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं यत्स्वसमानाधिकरणप्रकृतसाध्यव्याप्यतावच्छेदकधर्मान्तरं तद्घटितत्वे सति स्वावच्छिन्नाविषयकप्रतीतिविषयतानवच्छेदकं तद्घटकत्वं हि वैयर्थ्यम्, तच्चात्र न सम्भवति, यद्व्यतिरेकसंशयत्वादिव्यापकतारूपाऽभावस्य यद्व्यतिरेकज्ञानत्वव्यापकतारूपाभावस्य च परस्परं भेदात्, यद्व्यतिरेकज्ञानत्वव्यापकताघटितप्रतिबन्धकताकत्वत्वरूपधर्मान्तरस्य यद्व्यतिरेकसंशयत्वव्यापकताघटितप्रतिबन्धकताकत्वत्वरूपहेतुतावच्छेदकसामानाधिकरण्याभावादिति भावः । वस्तुतस्तु अन्यत्र दर्शितरीत्या संशयत्वनिश्चयत्वयोर्न्यूनवारकपर्याप्तिनिवेशे प्रयोजनाभावेन वैयर्थ्यं सम्भवत्येवेति ध्येयम् । तच्छरीरे संशयत्वनिश्चयत्वजातिशरीरे, ज्ञानत्वस्य यद्व्यतिरेकज्ञानत्वस्य, अनन्तर्भावाद् अघटकत्वात्, तथापि अघटकत्वेऽपि ।

तेन यद्व्यतिरेकज्ञानत्वेन प्रतिबन्धकता लभ्यते ।

---

यद्व्यतिरेकज्ञानत्वेनेति । अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वं तृतीयार्थः । न तु स्वरूपसम्बन्धरूपम् ।

ग्राह्याभावज्ञानत्वस्य ग्राह्यज्ञानप्रतिबन्धकतावच्छेदकग्राह्याभावनिश्चयत्वघटकतया ग्राह्यनिश्चयस्य ग्राह्यज्ञानाहेतुतया व्यभिचारस्य दुर्वारत्वात् । पर्याप्तिनिवेशे च तदर्थ-पर्यालोचने लाघवाऽसम्भवात् ।

यद्व्यतिरेकज्ञानत्वावच्छिन्नप्रतिबन्धकताकं यत् तत् तन्निश्चयजन्यमिति सामान्य-व्याप्तिः पर्यवसितेति न साध्यसाधनयोर्वैयधिकरण्यम्, न वा ईश्वरीयप्रामाण्यनिश्चय-जन्यतामादाय सिद्धसाधनावसरः ।

---

दीधितौ—तेनेति । यद्व्यतिरेकसंशयनिश्चयौ इत्यर्थकरणेनेत्यर्थः । तृतीयार्थ इति । यद्व्यतिरेकज्ञानत्वेनेत्यत्रेत्यादिः । यद्रूपावच्छिन्नप्रतिबध्यतानिरूपितप्रति-बन्धकतानतिरिक्तवृत्ति-यद्व्यतिरेकज्ञानत्वं तद्रूपावच्छिन्नस्तन्निश्चयजन्य इत्यर्थः । न त्विति । स्वरूपसम्बन्धरूपमिति । देहलीदीपकन्यायेन तृतीयार्थ उभयत्रान्वयी । तथा सति यद्रूपावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेद-कतावद्यद्व्यतिरेकज्ञानत्वं तद्रूपावच्छिन्नस्तन्निश्चयजन्य इति फलितम् । तत्र व्यभि-चारमाह—ग्राह्याभावज्ञानत्वस्येति । घटाभावज्ञानत्वस्येत्यर्थः । ग्राह्यज्ञानेति । घट-ज्ञानेत्यर्थः । ग्राह्यनिश्चयस्येति । घटनिश्चयस्येत्यर्थः । ग्राह्यज्ञानाहेतुतया घटज्ञाना-हेतुतया । व्यभिचारस्य दुर्वारत्वादिति । तथा च स्वरूपसम्बन्धरूपावच्छेदकत्वप्रवेशे घटज्ञाने व्यभिचारः, घटवत्ताबुद्धिं प्रति घटाभाववत्तानिश्चयस्य प्रतिबन्धकतया तद्घट-कतया घटाभावज्ञानत्वस्यापि प्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकतावत्त्वेन तादृशावच्छेदकताकप्रतिबन्धकताकत्वस्य घटज्ञाने सत्त्वेन तत्र घटनिश्चयजन्यत्वविरहा-दतोऽनतिरिक्तवृत्तित्वरूपावच्छेदकत्वनिवेशः । तथा च न व्यभिचारः, घटज्ञानं प्रति घटव्यतिरेकज्ञानत्वेनाऽप्रतिबन्धकत्वात्, घटव्यतिरेकज्ञानत्वस्य प्रतिबन्धकतातिरिक्तवृत्ति-त्वात्, तस्य संशयसाधारण्यादिति भावः । ननु यद्व्यतिरेकज्ञानत्वपर्याप्तावच्छेदकताक-प्रतिबन्धकताकं यत् तत्तन्निश्चयजन्यमित्युक्तौ न व्यभिचार इत्यत आह—पर्याप्ति-निवेशे चेति । तदर्थपर्यालोचने इति । तृतीयार्थपर्यालोचने इत्यर्थः । लाघवासम्भवा-दिति । घटव्यतिरेकज्ञानत्वे घटज्ञानप्रतिबन्धकतावच्छेदकतापर्याप्तिविरहेण व्यभिचार-विरहेऽपि लाघवानवकाशादिति भावः ।

सामान्यव्याप्तिः पर्यवसितेतीति । तथा चाऽनाहार्याऽप्रामाण्यज्ञानानास्कन्दित-यद्धर्मितावच्छेदकक-यद्धर्मावच्छिन्नव्यतिरेकज्ञानत्वावच्छिन्नप्रतिबन्धकताकं यत् तत्तद्धर्मा-वच्छिन्नप्रकारकनिश्चयत्वावच्छिन्नजनकतानिरूपितजन्यतावदिति सामान्यव्याप्तिः पर्य-वसितेत्यर्थः । यथाश्रुतार्थपरित्यागे बीजमाह—वैयधिकरण्यमिति । साध्यस्याप्रवृत्ति-जनकत्वस्य प्रामाण्यनिश्चये सत्त्वात् । हेतोश्च प्रवृत्तिप्रतिबन्धकत्वस्य यद्व्यतिरेकज्ञाने

सत्त्वेन साध्यहेत्वोर्वैयधिकरण्येऽपि न क्षतिरिति भावः। निश्चयत्वावच्छिन्नजनकतानिवेशस्य फलमाह—न वेति। सिद्धसाधनावसर इति। ईश्वरज्ञानस्योपादानप्रत्यक्षत्वेनैव कारणत्वं प्रामाण्यनिश्चयत्वेन प्रयोजनाभावादिति भावः। अत्र व्यतिरेकज्ञानत्वनिष्ठावच्छेदकत्वमनतिरिक्तवृत्तित्वरूपं ग्राह्यम्। वस्तुतस्तु स्वसमानाधिकरणप्रामाण्यतादृशनिश्चयाव्यवहितोत्तरक्षणोत्पत्तिकत्वरूपं जन्यत्वं निविष्टं तावतापि भगवत्प्रामाण्यनिश्चयमादाय सिद्धसाधनाभावात्। स्वमनुमितिः। अत्रेदमाशङ्क्यते—ननु रक्तदण्डव्यतिरेकज्ञानत्वव्यापकप्रतिवन्धकताके दण्डो रक्तो न वेति सन्देहे रक्तदण्डनिश्चयजन्यत्वविरहेण व्यभिचार इति चेन्न। यन्निश्चयत्वाऽव्यापिका सती यद्वचतिरेकज्ञानत्वव्यापिका या प्रतिबन्धकता तन्निरूपकं यद्भवति तत्तन्निश्चयजन्यं भवतीत्यस्य विवक्षितत्वात्। रक्तदण्डव्यतिरेकज्ञानत्वव्यापिकाया दण्डो रक्तो न वेति संशयनिरूपितप्रतिबन्धकताया दण्डविशेष्यकरक्तत्वप्रकारकनिश्चयत्वावच्छिन्नाया रक्तदण्डनिश्चयत्वव्यापकत्वात्। अथवा दण्डांशे रक्तत्वनिश्चयात्मक-रक्तदण्डव्यतिरेकज्ञानसामान्यप्रतिबध्यस्यापि दण्डो रक्तो न वेति संशयस्य रक्तदण्डनिश्चयाजन्यत्वेन व्यभिचारवारणाय व्यतिरेकविषयतायां स्वप्रतिवन्धकतावच्छेदकत्वमपि निवेशनीयम्। स्वं पक्षत्वेनाभिमतम्। तथा च न व्यभिचारः।

व्याप्तिव्यतिरेकज्ञानत्वव्यापकप्रतिवन्धकताके व्याप्तिनिश्चयाजन्ये अभावो हेत्वसमानाधिकरण इति ज्ञाने व्यभिचारवारणाय प्रतिबन्धकतायां व्याप्तिव्यतिरेकज्ञानत्वसमनियतत्वविवक्षणं गौरवग्रस्तमिति सूचितम्। प्रतिवन्धकताया भ्रमसाधारणत्वेन तादृशनियतत्वाऽसिद्धेश्च। न चाऽभावांशे हेतुसामानाधिकरण्यादिसंशयात्मकव्याप्त्यादिव्यतिरेकज्ञानस्याप्रतिवन्धकतया प्रतिबन्धकतायां व्याप्त्यादिव्यतिरेकज्ञानत्वव्यापकत्वविरहादेव नोक्तव्यभिचार इति वाच्यम्। प्रतियोगिविशेषिताभावज्ञानस्य विशिष्टवैशिष्टयावगाहित्वनियमेन तादृशज्ञानोत्पादाऽसम्भवात्, विशेषणतावच्छेदकप्रकारकनिश्चयस्य विशिष्टवैशिष्टयबोधकारणत्वात्।

अथ स्वव्यापकत्व-स्वभिन्नत्वोभयसम्बन्धेन यद्वचतिरेकज्ञानत्वव्यापकप्रतिबन्धकताविशिष्टान्यत्वं यद्वयतिरेकज्ञानत्वव्यापकप्रतिवन्धकतायां निवेशनीयम्, तथा चाऽभावो हेत्वसमानाधिकरण इति ज्ञानप्रतिवध्यतानिरूपितप्रतिबन्धकतायाः 'व्याप्तिव्यतिरेकज्ञानत्वव्यापिकायाः' तादृशप्रतिबन्धकताविशिष्टत्वाद्वचुदासः। व्याप्त्यादिव्यतिरेकग्रहत्वव्यापकप्रतिवन्धकतामात्रस्यैव स्वव्यापकत्वसम्बन्धेन स्वात्मकं प्रतिबन्धकताविशिष्टत्वात्तदन्यतादृशप्रतिवन्धकत्वाऽप्रसिद्धिवारणाय स्वभिन्नत्वनिवेशः। स्वव्यापकत्वनिवेशनं ज्ञानभेदेन प्रतिबन्धकताभिन्नत्वमतेऽसिद्धिवारणार्थम्। व्याप्त्यादिव्यतिरेकवद्धेत्वादिमान्देश इत्यादिज्ञानीयतादृशहेत्वाद्यभावज्ञानप्रतिवन्धकताविशिष्टान्यत्वस्य व्याप्त्यादिव्यतिरेकज्ञानत्वावच्छिन्नप्रतिवन्धकतायां विरहाद् 'दृष्टान्तासिद्धिः' असिद्धिवारणार्थं भेदप्रतियोगितावच्छेदकप्रतिवन्धकतायां यद्वचतिरेकज्ञानत्वव्यापकत्वं निवेशितम्। घटाद्यभावज्ञानप्रतिवन्धकतायास्तादृशप्रतिवन्धकताविशिष्टान्यत्वेन घटविशिष्टबुद्धौ व्यभिचारवारणाय चरमप्रतिवन्धकतायां यद्वचतिरेकज्ञानत्वव्यापकत्वं निवेशितम्।

यद्यपि विशेष्यताप्रकारतानां विशेष्यविशेषणभाववैपरीत्येन सर्वत्र प्रतिबन्धकतानानैव न कुत्राप्येका, तथा च व्याप्त्यादिव्यतिरेकग्रहत्वव्यापकप्रतिबन्धकतायास्तादृशप्रतिबन्धकताविशिष्टत्वेन तद्भिन्नत्वाऽप्रसिद्धया स्वरूपासिद्धिर्दृष्टान्तासिद्धिश्च—तथापि स्वव्यापकत्व-स्वानधिकरणवृत्तित्वोभयसम्बन्धेन तादृशप्रतिबन्धकतावैशिष्टयनिवेशान्न दोषः । एतादृशरीत्या परिष्कारकरणे गौरवादिति ध्येयम् ।

केचित्तु यदभावावगाहिताप्रयुक्त-यद्व्यतिरेकज्ञानत्वव्यापकप्रतिबन्धकताकं यत्तत् तन्निश्चयजन्यमित्यर्थे न पूर्वोक्तदोषाणामवकाशः ।

नचैवं यद्व्यतिरेकसंशयवृत्तित्वनिवेशेनैव बाधादिप्रतिबन्धकतामादाय घटादिविशिष्टबुद्धौ व्यभिचारवारणसम्भवाद्व्यतिरेकग्रहत्वव्यापकत्वनिवेशनं किमर्थमिति वाच्यम् । पर्वतत्वादिसामानाधिकरण्येन घटाभावादिनिश्चयात्मक-तत्सामानाधिकरण्येन घटाभावकोटिकतदवच्छेदेन घटकोटिकसंशयस्य यदभावावगाहिताप्रयुक्तप्रतिबन्धकताविशिष्टत्वात्पर्वतत्वावच्छेदेन घटादिविशिष्टबुद्धौ व्यभिचारवारणाय तादृशव्यापकत्वनिवेशस्यावश्यकत्वादिति वदन्ति ।

अप्रामाण्यनिश्चयास्कन्दित-यद्व्यतिरेकग्रहस्यानुमित्यप्रतिबन्धकत्वे तादृशव्यापकत्वभङ्गभीत्या व्याप्तिशरीरेऽप्रामाण्यनिश्चयानास्कन्दितयद्व्यतिरेकग्रहत्वव्यापकत्वनिवेशस्यावश्यकत्वेन अभावो हेत्वसमानाधिकरण इति विशिष्टबुद्धौ व्यभिचारवारणसम्भवः, हेतुसामानाधिकरण्यांशेऽप्रामाण्यसंशयास्कन्दितव्याप्त्यादिव्यतिरेकग्रहस्योक्तविशिष्टबुद्धिप्रतिबन्धकत्वाभावेन व्यापकत्वाभावात्, ग्राह्याभावनिश्चयस्याऽप्रामाण्यज्ञानाभावविशिष्टत्वेनैव प्रतिबन्धकत्वात् इति यथाश्रुतमेव सम्यक् । तन्न । संशयसाधारणप्रतिबन्धकतास्थलेऽप्रामाण्यनिश्चयाभावस्यैव प्रतिबन्धकतावच्छेदककोटौ निवेशस्यावश्यकत्वेऽपि प्रकृतव्याप्तिशरीरेऽप्रामाण्यनिश्चयाभावमपेक्ष्य लाघवेनाऽप्रामाण्यज्ञानाभावस्यैव निवेशनीयत्वात् । अभावो हेत्वसमानाधिकरण इति बुद्धौ व्यभिचारवारणाय गुरुभूतनिश्चयत्वावच्छिन्नाभावस्य निवेशसम्भवेऽपि ग्राह्याभावनिश्चयत्वावच्छिन्नप्रतिबन्धकतामादाय ग्राह्यविशिष्टबुद्धौ व्यभिचारवारकानतिरिक्तवृत्तित्वरूपावच्छेदकत्वनिवेशवैफल्यापत्तेश्च । अप्रामाण्यज्ञानाभावस्यैव ग्राह्याभावनिश्चयप्रतिबन्धकतावच्छेदकघटकतया 'अप्रामाण्यनिश्चयाभावस्य ग्राह्याभावनिश्चयप्रतिबन्धकतावच्छेदकाऽघटकतया' स्वरूपसम्बन्धरूपावच्छेदकत्वनिवेशस्यैव सम्यक्त्वादिति ध्येयम् ।

इदं पुनरिहावधेयम्—अप्रामाण्यज्ञानाभावविशिष्ट-यद्व्यतिरेकग्रहत्वस्याऽनतिरिक्तवृत्तित्वरूपावच्छेदकत्वनिवेशापेक्षया अप्रामाण्यनिश्चयाभावविशिष्ट-यद्व्यतिरेकग्रहत्वस्य स्वरूपसम्बन्धरूपावच्छेदकत्वनिवेश एवोचितः, निश्चयत्वस्य स्वव्यापकतत्कत्वरूपाऽनतिरिक्तवृत्तित्वापेक्षया लाघवशरीरत्वात् । तावतैव बाधप्रतिबन्धकतामादाय घटादिविशिष्टबुद्धौ एवं विशेषणान्तराऽदानेऽपि अभावो हेत्वसमानाधिकरण इति ज्ञाने च व्यभिचारानवकाशः । तत्तत्प्रतिबन्धकतायाः अप्रामाण्यनिश्चयाभावविशिष्टव्याप्त्यादिव्यतिरेकग्रहत्वानवच्छिन्नत्वात् 'किन्तु अप्रामाण्यग्रहाभावघटिततादृशग्रहत्वावच्छिन्नत्वादि'ति तत्कथमुपेक्षितम् ? अत्राहुः—निश्चयत्वस्य मतभेदेन भिन्नतायाः प्रागेवोक्ततया

**न च माध्यमिकपूर्वपक्षे अथेत्याद्याशङ्का न नैयायिकस्य, तेन प्रामाण्यनिश्चयोपयोगितास्वीकारात्, किन्तु तटस्थस्य, तदुपरि च न चेत्याद्याशङ्का पुनर्माध्यमिकस्यैव, तेनेश्वरानभ्युपगमेन न सिद्धसाधनावसरः, साध्यस्य मतद्वयसिद्धतायामेव तद्दोषादिति वाच्यम्। एवमपि तटस्थेनार्थान्तरोद्भावनस्य दुर्वारत्वात्। न च स्वतः परतश्च प्रामाण्यस्य ग्रहणं निराकुर्वतो माध्यमिकस्य कथं प्रवृत्तौ प्रामाण्यनिश्चयहेतुकत्वसाधनं सङ्गच्छते इति वाच्यम्। प्रामाण्यनिश्चायनेन शास्त्रस्य निःश्रेयसोपयोगितावादिनं नैयायिकं पराभवितुं तन्मतमालम्ब्य माध्यमिकस्यापि प्रवृत्तौ प्रामाण्यनिश्चयोपयोगिताव्यवस्थापनसम्भवात्।**

---

एकमतसिद्धनिश्चयत्वावच्छिन्नाभावनिवेशे मतान्तराऽसङ्ग्रहः। एवमप्रामाण्यज्ञानस्याननुगमेन तत्तद्व्यक्तित्वावच्छिन्नाभावा एव निवेश्याः गत्यन्तराभावात्। तथा चाऽप्रामाण्यनिश्चयसामान्याभावस्य प्रतिवन्धकतानवच्छेदकतया दृष्टान्तासिद्ध्यादिप्रसङ्गः इति ध्येयम्।

अथ भ्रमत्वावच्छिन्नविशेष्यकव्याप्त्यादिव्यतिरेकज्ञानत्वावच्छिन्नप्रकारताकज्ञानस्य जातित्वादिना धूमत्वावगाहि जातिमान् व्याप्त्यभाववानित्याद्यप्रतिवन्धकज्ञानसाधारणतया सर्वत्रैव प्रतिवन्धकतायां व्यापकत्वमसम्भवि इति चेन्न। स्वावच्छेदकीभूतविषयताशालियद्व्यतिरेकग्रहत्वव्यापकतायाः विवक्षितत्वात्। स्वपदं प्रतिवन्धकतापरम्। संशयेऽपि प्रतिवन्धकतावच्छेदकविषयतासत्त्वान्न वाधादिप्रतिवन्धकतामादाय विशिष्टबुद्धौ व्यभिचार इति ध्येयम्।

सिद्धसाधनावसर एव नास्तीति जनकतायां निश्चयत्वावच्छिन्नत्वनिवेशो व्यर्थ इत्याशङ्कते—**न चेति**। **माध्यमिकपूर्वपक्षे इति**। माध्यमिकपूर्वपक्षोपरीत्यर्थः। प्रवृत्तिं प्रति प्रामाण्यनिश्चयस्य कारणत्वमिति नैयायिकसिद्धान्ते 'प्रमाणतत्त्वावधारणस्याऽशक्यत्वादि'त्यादिग्रन्थेन प्रत्यवस्थितस्य माध्यमिकस्य पूर्वपक्षनिरासार्थमिति यावत्, **अथेद्याशङ्का**—अथ किं प्रामाण्यज्ञानेनेत्यादिना प्रामाण्यनिश्चयस्य प्रवृत्तिं प्रति अन्यथासिद्धत्वापादनम्। शङ्काविरहे हेतुमाह—**तेनेति**। नैयायिकेनेत्यर्थः। **प्रामाण्यनिश्चयोपयोगितास्वीकारादिति**। अर्थनिश्चयसम्पादकतया प्रामाण्यनिश्चयस्य प्रवृत्तिं प्रत्युपयोगितास्वीकारादिति भावः। **तटस्थस्य** नैयायिकमाध्यमिकभिन्नस्य। **अथेत्याद्याशङ्केति** पूर्वेणान्वयः। **तदुपरि चेति**। तटस्थशङ्कोपरि चेत्यर्थः। न चेत्याद्याशङ्का यस्य संशयव्यतिरेकनिश्चयौ इत्यादिना प्रवृत्तौ प्रामाण्यनिश्चयजन्यत्वाशङ्कनम्। **माध्यमिकस्यैवेति**। एवकारेण नैयायिकव्यावृत्तिः माध्यमिकशङ्कानिरासार्थं प्रवृत्तस्य तटस्थस्य माध्यमिकेनैव निरासस्योचितत्वादिति भावः। **तेन** माध्यमिकेन। **न सिद्धसाधनावसर इति**। ईश्वरीयप्रामाण्यनिश्चयजन्यत्वमादाय प्रसक्तस्य सिद्धसाधनस्यावसरो नेत्यर्थः। तत्र हेतुमाह—**साध्यस्येति**। **मतद्वयसिद्धतायामेवेति**। उभयमतसिद्धत्वे एवेति। एवकारेणैकतरमतसिद्धत्वव्यवच्छेदः। **तद्दोषदानात्** सिद्धसाधनात्। **एवमपि** सिद्धसाधनविरहेऽपि। **अर्थान्तरोद्भावनस्येति**। एकसिद्धौ अन्यसिद्धिरर्थान्तरम्। प्रकृते

ग्राह्यसंशयस्य तु न प्रतिबन्धकतेति भावः ।

---

ननु अव्यभिचारव्यतिरेकरूपव्यभिचारस्य संशयो निश्चयश्चाऽव्यभिचारग्रहप्रतिबन्धकः, व्यभिचारसंशयप्रतिबन्धतायाः व्याप्तिग्रहोपाये मणिकारैरुक्तत्वात्, तथा च व्यभिचारज्ञानसामान्यप्रतिबध्येऽव्यभिचारनिश्चयाऽजन्येऽव्यभिचारनिश्चये व्यभिचार इत्यत आह—ग्राह्यसंशयस्येति । अव्यभिचारव्यतिरेकसंशयरूपस्येत्यादिः । न प्रतिबन्धकता । व्याप्तिग्रहे इति शेषः । तथा च व्यभिचारसंशयस्य व्याप्तिग्रहप्रतिबन्धकत्वाभिधानं मतविशेषावलम्बनेनैवोक्तमिति न विरोध इति भावः ।

एतेन घटादिसंशयस्य घटादिग्रहाऽप्रतिबन्धकतया संशयपदेन घटादिनिश्चयाहेतुके घटादिज्ञाने व्यभिचारं वारयतां मिश्राणां प्रतिबन्धकसंशयादौ यदभावत्व-

---

प्रामाण्यजन्यत्वसिद्ध्यवसरे ईश्वरसिद्धिरर्थान्तरम् । दुर्वारत्वादिति । तथा च सिद्धसाधनपदमर्थान्तरमिति भावः । प्रामाण्यनिश्चायनेन प्रमाणादितत्त्वज्ञानमिष्टसाधनमिति ज्ञानं प्रमेति निश्चयद्वारा शास्त्रस्य निःश्रेयसोपयोगितावादिनं प्रमाणातत्त्वप्रतिपत्तिजनकत्वेन शास्त्रस्य निःश्रेयसजनकत्ववादिनं, पराभवितुं तिरष्कर्तुं, तन्मतं नैयायिकमतम् । माध्यमिकस्यापीति अपिना नैयायिकसमुच्चयः ।

यद्व्यतिरेकज्ञानत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यतावान् यः स तन्निश्चयजन्य इति पर्यवसितव्याप्तौ व्यभिचारमाशङ्कते—नन्विति । अव्यभिचारव्यतिरेकरूपेति । तथा च यद्व्यतिरेकेत्यादि हेतुघटक-यत्पदेनाऽव्यभिचारस्य ग्रहणमिति भावः । अव्यभिचारग्रहप्रतिबन्धक इति । व्याप्तिग्रहप्रतिबन्धक इत्यर्थः । ननु व्यभिचारसंशयस्य प्रतिबन्धकत्वेऽपसिद्धान्त इत्यत आह—व्यभिचारसंशयप्रतिबन्धकताया इति । व्याप्तिग्रहं प्रतीत्यादिः । तथा च व्यभिचारसंशयस्य प्रतिबन्धकत्वे च । व्यभिचारज्ञानसामान्यप्रतिबध्ये इति । अव्यभिचारव्यतिरेकज्ञानसामान्यप्रतिबध्ये इत्यर्थः । अस्याऽव्यभिचारनिश्चये इत्यनेनान्वयः । एतावता च हेतुसत्त्वं सूचितम् । अव्यभिचारनिश्चयाजन्ये इति । अनेन साध्यविरहः सूचितः । स्वस्मिन् स्वजन्यत्वविरहादिति तत्त्वम् । व्यभिचार इति । अव्यभिचारव्यतिरेकज्ञानत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यतावति अव्यभिचारनिश्चये अव्यभिचारनिश्चयजन्यत्वविरहाद् व्यभिचार इति भावः । व्याप्तिग्रहे इति ग्राह्यग्रहमात्रोपलक्षकम् । तथा च अव्यभिचारव्यतिरेकसंशयरूपस्य ग्राह्यसंशयस्याऽप्रतिबन्धकत्वे च । व्यभिचारसंशयस्य अव्यभिचारव्यतिरेकसंशयरूपस्य । मतविशेषावलम्बनेनैवेति । यन्मते ग्राह्यसंशयस्य प्रतिबन्धकत्वं तन्मतेनैवेत्यर्थः । उक्तमिति । मणिकृतेति शेषः ।

एतेन ग्राह्यसंशयस्याऽप्रतिबन्धकत्वेन, अस्याऽयुक्तमित्यनेनाऽन्वयः । मिश्रास्तु 'यस्य संशयव्यतिरेकनिश्चयौ' इति मूलस्य यथाश्रुतमेवार्थं वर्णयन्ति । यद्व्यतिरेकज्ञानत्वव्यापकप्रतिबन्धकताकत्वनिवेशसम्भवेऽपि यथाश्रुतमलानुरोधेन प्रतिबन्धकताविशेष्यतया संशयनिश्चयत्वोपादानम्, अखण्डाभावघटतया च न वैयर्थ्यम् । तथा च

प्रकारकत्वनैयत्यविवक्षयाऽव्यभिचारनिश्चयाजन्यतन्निश्चयेऽव्यभिचाराभावत्वाप्रकारक-व्यभिचारत्वप्रकारकसंशयसाधारणप्रतिबन्धकताके व्यभिचारवारणमयुक्तमिति ध्वनितम् ।

यत्संशयप्रतिबध्यत्वे सति यद्व्यतिरेकनिश्चयप्रतिबध्यत्वं हेतुः । सत्यन्तफलोपादानस्य प्रयोजनमाह—घटादिसंशयस्येति । भूतलं घटवन्न वेति संशयस्येत्यर्थः । घटादिग्रहाऽप्रतिबन्धकतयेति । घटवत्ताबुद्धौ अप्रतिबन्धकतयेत्यर्थः । ग्राह्यसंशयस्याप्रतिबन्धकत्वादिति भावः । घटादिनिश्चयाहेतुके घटादिनिश्चयाजन्ये । संशयपदेनेति । यत्संशयप्रतिबध्यत्वे सतीति दलेनेति यावत् । अस्य व्यभिचारं वारयतामित्यनेनाऽन्वयः । घटादिव्यतिरेक-निश्चयप्रतिबध्ये घटादिनिश्चयाजन्ये घटादिज्ञाने व्यभिचारं वारयतामित्यर्थः । मिश्राणां व्यभिचारवारणमयुक्तमिति भावः । घटसंशयस्य ग्राह्यसंशयतया ज्ञानाप्रतिबन्धकत्वान्न व्यभिचार इति ध्येयम् । व्यभिचारसंशयस्य व्याप्तिज्ञाने प्रतिबन्धकत्वात् अथ च व्य-भिचारनिश्चयस्य व्याप्तिज्ञानेऽहेतुत्वाद् व्यभिचारवारणाय यद्व्यतिरेकनिश्चयप्रतिबध्य-त्वरूपविशेष्यदलम् । ननु अन्यत्र ग्राह्यसंशयस्याऽप्रतिबन्धकत्वेऽपि अव्यभिचारव्यतिरेक-संशयस्य व्यभिचारसंशयपर्यवसन्नस्य अव्यभिचार'व्याप्ति'निश्चये प्रतिबन्धकतामिश्रादि-सम्मता । मणिमन्त्रादिन्यायेन तत्र प्रतिबन्धकतास्वीकारात् । तथा चाऽव्यभिचार-निश्चये व्यभिचारः, तत्राऽव्यभिचारसंशयप्रतिबध्यत्वस्य सत्त्वात्, तादृशसंशयस्य व्यभि-चारसंशयरूपतया ग्राह्यसंशयरूपत्वेऽपि मिश्रादिमते प्रतिबन्धकत्वात् । अव्यभिचार-व्यतिरेकनिश्चयस्य व्यभिचारनिश्चयरूपतया तत्प्रतिबध्यत्वस्यापि सत्त्वात् अथ चाऽव्य-भिचारनिश्चयजन्यत्वविरहादिति तं विशेषणान्तरप्रक्षेपेण वारयति—प्रतिबन्धकसंशया-दाविति । आदिपदाद् यद्व्यतिरेकनिश्चयपरिग्रहः । न च प्रतिबन्धकपदं व्यर्थम्, व्यभि-चारसंशयस्य ग्राह्यसंशयत्वाऽविशेषत्वेऽपि मणिमन्त्रादिन्यायेन प्रतिबन्धकत्वमिति सूचनायैव तदुपादानात् । यदभावत्वप्रकारकत्वनैयत्यविवक्षयेति । अस्य व्यभिचारवारण-मित्यनेनाऽन्वयः । तथा च यदभावत्वप्रकारकत्वनियतयत्संशयनिष्ठप्रतिबन्धकता-निरूपितप्रतिबध्यत्वे सति यदभावत्वप्रकारकत्वनियतयद्व्यतिरेकनिश्चयनिष्ठप्रतिबन्ध-कतानिरूपितप्रतिबध्यत्वं हेतुः, तादृशप्रतिबध्यत्वं यत्र तत्र तन्निश्चयजन्यत्वमिति फलितम् । तथा च नोक्तव्यभिचारप्रसक्तिरित्याह—अव्यभिचारनिश्चयाजन्येति । अनेन साध्यविरहः सूचितः । तन्निश्चये अव्यभिचारनिश्चये । अव्यभिचाराभावत्वा-प्रकारकेति । इदं च संशयान्वयि । अनेन यदभावप्रकारकत्वरूपविशेषणाभावः सूचितः । व्यभिचारत्वप्रकारकेति । अनेनाऽव्यभिचारसंशयनिष्ठप्रतिबन्धकतायां व्यभिचारत्व-प्रकारकत्वनैयत्यं सूचितम् । संशयसाधारणप्रतिबन्धकताके इति । व्यभिचारवान्न वेति संशयस्यापि प्रतिबध्ये इत्यर्थः । अस्यापि तन्निश्चये इत्यनेनाऽन्वयः । व्यभिचारवारण-मिति । अव्यभिचारनिश्चये अव्यभिचाराभावत्वप्रकारकत्वरूपविशेषणाभावप्रयुक्ताऽव्य-भिचाराभावत्वप्रकारकत्वविशिष्टयत्संशयप्रतिबध्यत्वरूपहेतोरप्यभावाद् व्यभिचार-वारणमित्यर्थः ।

घटादिसंशयस्य तन्निश्चय इव व्यभिचारसंशयस्यापि अव्यभिचारनिश्चये ग्राह्यसंशयत्वाविशेषेणाऽप्रतिबन्धकत्वौचित्यात् । यन्मतमवलम्ब्य मणिकृतो व्यभिचारसंशयप्रतिबन्धकत्वाभिधानं घटादिसंशये तन्निश्चयप्रतिबन्धकताया अपि तन्मतसिद्धत्वात् ।

अत्र मिश्रानुयायिनः—व्यभिचारज्ञानस्य व्याप्तिनिश्चये मणिमन्त्रादिवत्पृथगेव प्रतिबन्धकता न तु ग्राह्याभावज्ञानत्वेन कथमन्यथाऽत्यन्ताभावगर्भव्यभिचारग्रहस्याऽन्योन्याभावगर्भव्याप्तिधीविरोधिता । ग्राह्याभावावगाहितया प्रतिबन्धकत्वमेव च ग्राह्यसंशयव्यावृत्तमिति व्यभिचारसंशयप्रतिबन्धकत्वं युक्तमेव ।

स्वप्रतिबन्धकसंशयव्यतिरेकनिश्चययोर्यदभावत्वप्रकारकत्वनियतत्वविशेषणं वैकल्पिकम्, अव्यभिचाराभावत्वप्रकारकत्वस्य व्याप्तिनिश्चयप्रतिबन्धके व्यभिचारस्य निर्णये

---

अयम्भावः—यथा 'अव्यभिचारवान्न वे'ति अव्यभिचारसंशयस्य 'अव्यभिचाराभाववानिति' अव्यभिचाराभावनिश्चयस्य च अव्यभिचारज्ञानं प्रति प्रतिबन्धकत्वं तथैव व्यभिचारवान्न वेति व्यभिचारसंशयस्य व्यभिचाराभाववानिति व्यभिचारनिश्चयस्य च प्रतिबन्धकत्वमनुभवसिद्धम् । एवं च व्यभिचारत्वावच्छिन्नप्रकारताशालिज्ञानत्वेनैवाऽव्यभिचारज्ञानं प्रति विरोधित्वं लाघवात्, तथा च प्रतिबन्धकतायां व्यभिचारत्वप्रकारकत्वनैयत्यस्यैव सत्त्वेनाऽव्यभिचाराभावत्वप्रकारकत्वनैयत्याभावाद् यत्संशयपदेनाऽव्यभिचारसंशयस्य यद्व्यतिरेकनिश्चयपदेनाऽव्यभिचारव्यतिरेकनिश्चयस्य धर्तुमशक्यतया न व्यभिचार इति ध्येयम् । अयुक्तत्वे हेतुमाह—घटादिसंशयस्येति । घटवान्न वेत्याकारकस्येत्यर्थः । तन्निश्चय इवेति । घटादिनिश्चये इवेत्यर्थः । अप्रतिबन्धकत्वौचित्यादिति । तथा च ग्राह्यसंशयतया यथा घटादिसंशयस्य तन्निश्चयं प्रति न प्रतिबन्धकत्वं तथा व्यभिचारसंशयस्यापि अव्यभिचारज्ञाने न प्रतिबन्धकत्वमिति भावः । ननु ग्राह्यसंशयस्य प्रतिबन्धकतामते तद्विशेषणमावश्यकमित्यत आह—यन्मतमवलम्ब्येति । तन्मतसिद्धत्वादिति । तथा च यत्संशयोपादानेऽपि नैयत्यान्तदलोपादानेऽपि च घटज्ञाने व्यभिचारो दुर्वार इति भावः ।

मिश्रमतं परिष्करोति—अत्रेति । व्यभिचारज्ञानस्य संशयनिश्चयसाधारणस्य, व्याप्तिनिश्चये व्याप्तिज्ञाने, पृथगेव स्वातन्त्र्येणैव, एवकारव्यवच्छेद्यं स्पष्टयति—नन्विति । कथमिति । अस्य विरोधित्वेऽन्वयः । अन्यथा ग्राह्याभावज्ञानत्वेन प्रतिबन्धकत्वे, अत्यन्ताभावगर्भव्यभिचारग्रहस्य साध्याभाववद्वृत्तिर्हेतुरित्याकारकस्य । अन्योन्याभावगर्भव्याप्तिधीविरोधितेति । साध्यवदन्यावृत्तिर्हेतुरिति व्याप्तिधीविरोधितेत्यर्थः । प्रतिबन्धकत्वमेवेति । एवकारेण मणिमन्त्रादिवत्पृथक्प्रतिबन्धकत्वस्य व्यवच्छेदः । ग्राह्यसंशयव्यावृत्तमिति । ग्राह्यसंशया वृत्तीत्यर्थः । न तु मणिमन्त्रादिवत्पृथक् प्रतिबन्धकत्वं ग्राह्यसंशया वृत्तीति यावत् । तथा च ग्राह्यसंशयस्य ग्राह्याभावावगाहित्वेन न प्रतिबन्धकत्वमित्येव 'ग्राह्यसंशयस्य न प्रतिबन्धकत्वमिति दीधितिकृतामाशयः । इतीति । ग्राह्याभावानवगाहितयेत्यर्थः । मणिमन्त्रादिवदिति यावत् । अव्यभिचारज्ञाने इति शेषः । युक्तमेवेति । तथा च यदभावत्वप्रकारकत्वनैयत्यविवक्षाऽऽवश्यकीति भावः ।

**संशये चाऽनियमात्, एकत्र तन्निवेशेनैवाऽव्यभिचारसंशयतद्व्यतिरेकनिश्चयप्रतिवध्ये तन्निश्चयाजन्ये व्याप्तिनिश्चये व्यभिचारवारणसम्भवात् ।**

यदभावत्वप्रकारकत्वनियतत्वमित्यत्र नियतत्वं व्याप्तिः, सा च व्यापकसामानाधिकरण्यरूपा । अत्र अनुमितिप्रतिबन्धकव्याप्तिसंशये व्याप्त्यभावत्वप्रकारकत्वनियमो न तु अनुमितिप्रतिबन्धके व्याप्त्यभावत्वप्रकारकत्वनियमः, प्रमेयत्वेन व्याप्त्यभावावगाहिनि प्रमेयवान्धूमः पर्वताऽवृत्तिरिति ज्ञाने 'अनुमितिप्रतिबन्धके' व्याप्त्यभावत्वप्रकारकत्वाभावात्, प्रतिबन्धकसंशयादावेव यदभावत्वप्रकारकत्वविशेषणं बोध्यम् । तत्रापि यदभावत्वप्रकारकत्वं संशयनिश्चययोरन्यत्र विशेषणं न तूभयत्र प्रयोजनाभावादित्याह— **स्वप्रतिबन्धकेति** । स्वम् —अनुमिति-प्रवृत्त्यादि । पथ इति यावत् । **यदभावत्वप्रकारकत्वनियतत्वविशेषणमिति** । स्वप्रतिबन्धके संशये तादृशनिश्चये वा यदभावत्वप्रकारकत्वविशेषणमित्यर्थः । **वैकल्पिकमिति** । तथा च स्वप्रतिबन्धकयत्संशयत्वव्यापकयदभावत्वप्रकारकताकत्वे सति यद्व्यतिरेकनिश्चयप्रतिबध्यत्वं 'स्वप्रतिबन्धकयद्व्यतिरेकनिश्चयत्वव्यापकयदभावत्वप्रकारताकत्वे सति यत्संशयप्रतिबध्यत्वं वा' हेतुः । तेन यदभावत्वप्रकारको यत्संशयो यद्व्यतिरेकनिश्चयश्च यत्र प्रतिबन्धकस्तन्निश्चयस्तद्धेतुरिति फलितम् । एकत्र तन्निवेशेनापि नोक्तव्यभिचार इत्याह—**अव्यभिचाराभावत्वप्रकारकत्वस्येति** । निर्णये संशये चेत्यत्रान्वयि । **अनियमादिति** । असत्त्वादित्यर्थः । व्यभिचारवान्निति निश्चये व्यभिचारवान्न वेति संशये चाऽव्यभिचाराभावत्वप्रकारकत्वस्याऽसत्त्वादिति भावः । एकत्र निश्चयसंशययोरन्यत्र । **तन्निवेशेनैवेति** । यदभावत्वप्रकारकत्वनिवेशेनैवेत्यर्थः । एवकारेणोभयत्र तन्निवेशव्यावृत्तिः । **तन्निश्चयाजन्ये** । अव्यभिचारनिश्चयाजन्ये । व्याप्तिनिश्चये अव्यभिचारज्ञाने । **व्यभिचारवारणसम्भवादिति** । वारणप्रकारस्तूक्त एव । व्यभिचारत्वावच्छिन्नप्रकारताशालिज्ञानत्वेनैवाऽव्यभिचारज्ञानं प्रतिविरोधितयाऽव्यभिचारज्ञानाभावत्वप्रकारकत्वस्य यत्संशये यद्व्यतिरेकनिश्चये चाऽनियमादिति भावः ।

अथाऽत्र यज्ज्ञानप्रतिबध्यत्वमात्रस्यैव हेतुत्वं कथं नोक्तं किं विशेष्यीभूतयद्व्यतिरेकनिश्चयप्रतिबध्यत्वनिवेशेन । न चानुमितौ व्यभिचारः, वह्निनिश्चयाऽजन्यायामनुमितौ वह्निनिश्चयप्रतिबध्यत्वसत्त्वादिति वाच्यम् । मिश्रमते अनुमितिशाब्दबोधप्रतिबन्धके समानाकारकसिद्धिशाब्दबोधादौ स्वप्रतिबन्धकयज्ज्ञानत्वव्यापकयदभावत्वप्रकारताकत्वविरहादेवादोषादिति चेन्न । यादृशस्थले सिद्धिर्न जाता तत्रानुमितौ बाधमादाय व्यभिचारवारणाय संशयत्वोपादानात् । अथवा यत्र सामानाधिकरण्येन समूहालम्बनात्मकसिद्धिबाधनियमः, तत्र सामानाधिकरण्येनानुमितौ व्यभिचारः, तत्र सामानाधिकरण्येन बाधनिश्चयस्याऽविरोधित्वेऽपि सिद्धेर्विरोधित्वात् । एवं व्याप्तिप्रमात्वयोः संशये यदभावत्वप्रकारकत्वनियमेऽपि तन्निश्चयस्याऽतथात्वात्साधनाप्रसिद्धिश्च स्यादिति ध्येयम् ।

अत्र संशयपदं संशयसामान्यपरमवश्यं वाच्यम् । अन्यथा समूहालम्बनरूपघटाभावादिनिश्चयात्मकव्याप्त्यादिसंशयप्रतिबध्यस्य घटादिज्ञानस्य व्याप्तिनिश्चयाऽजन्यत्वात्

व्यभिचारापत्तेः। एवं संशये यद्धर्मावच्छिन्नविशेष्यतानिरूपकत्वमपि देयम्। अन्यथा निर्धर्मितावच्छेदक-'विभिन्नधर्मितावच्छेदकक'-ज्ञानस्याऽप्रतिबन्धकतया यत्संशयत्व-व्यापकप्रतिबन्धकत्वाप्रसिद्ध्या साधनाऽप्रसिद्धेः।

न चैवम् अव्यभिचारनिश्चये व्यभिचारवारणायोपात्तस्य यदभावत्वप्रकारकत्व-विशेषणस्य वैयर्थ्यं सर्वासामेवाऽव्यभिचारनिश्चयनिरूपितप्रतिबन्धकत्वानाम् अव्यभि-चारि न वा व्यभिचारि न वेत्यादिसंशयवृत्तिविभिन्नरूपावच्छिन्नानां चालनीन्यायेन तादृशसंशयत्वाव्यापकत्वादिति वाच्यम्। स्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धक-तावच्छेदकत्वस्वसामानाधिकरण्योभयसम्बन्धेन ज्ञानीयविषयिताविशिष्टयद्रूपावच्छिन्न-विषयित्वरूपसंशयत्वविशिष्टप्रतिबन्धकत्वस्य विवक्षितत्वात्। संशयत्ववै० व्यापकता-सम्बन्धेन। न च यदभावत्वप्रकारतानैयत्यविशेषणसार्थक्यार्थम् एतादृशविवक्षाऽ-नुचितेति वाच्यम्। धूमो वह्निव्याप्यो न वा वह्निमानाधेयत्वाभाववान् वा इत्याकारक-संशयसाधारणैकप्रतिबन्धकत्वाभावेनाऽनुमित्यादिप्रतिबन्धकतानामपि तादृशसंशयत्वाऽ-व्यापकत्वेन दृष्टान्ताऽसिद्ध्यादिवारणायैवैतादृशविवक्षाया आवश्यकत्वात्।

स्वप्रतिबन्धकत्वं संशयेऽवश्यं वक्तव्यम्। अन्यथोक्तरीत्या संशयत्वव्यापकयदभावत्व-प्रकारकत्वाऽप्रसिद्ध्या दृष्टान्तासिद्ध्यादिः स्यात्।

केचित्तु व्याप्तिमद्भेदकोटिकसंशये प्रतिबन्धकत्वास्वीकारपक्षे तदन्तर्भावेण यद-भावत्वप्रकारकत्वनैयत्यविरहेण दृष्टान्ताऽसिद्धिरतस्तन्निवेश इत्याहुः। तादृशसंशय-स्वीकारे तत्र प्रतिबन्धकत्वाऽस्वीकारस्यानुभवविरोधात्। प्रतिबन्धकत्वास्वीकारेऽपि पक्षधर्मत्वाभावविषयकव्याप्तिमद्भेदकोटिकसंशये प्रतिबन्धकतासत्त्वेन तत्र च यदभाव-त्वप्रकारकत्वनैयत्यविरहेण तद्दोषतादवस्थ्याच्च।

अव्यभिचारनिश्चये व्यभिचारवारणाय यत्संशयत्वव्यापकतानिवशः, अन्यथाऽव्यभि-चारवान्न वेति संशयान्तर्भावेण सत्संशयत्वसामानाधिकरण्यस्य यदभावत्वप्रकारकत्वे सत्त्वात्तद्दोषतादवस्थ्यात्।

व्यभिचारसंशयप्रतिबध्यत्वे सति अव्यभिचारनिश्चयः स्वप्रतिबन्धकव्यभिचार-संशयत्वव्यापकव्यभिचाराभावत्वप्रकारताकेऽव्यभिचारनिश्चये व्यभिचारनिश्चयाजन्ये व्यभिचारवारणाय यद्व्यतिरेकनिश्चयप्रतिबध्यत्वोपादानमिति तूक्तप्रायम्।

अत्र निश्चयत्वावच्छिन्नत्वं 'प्रतिबन्धकतायां' न स्वरूपसम्बन्धविशेषः, अनुमितिं प्रति व्याप्त्यभावनिश्चयत्वेन प्रवृत्तिं प्रति प्रमात्वाभावनिश्चयत्वेन प्रतिबन्धकत्वे व्याप्ति-संशयादौ अतिरिक्तप्रतिबन्धकताकल्पनप्रसङ्गभयेन व्याप्त्यभावादिज्ञानत्वेन प्रतिबन्ध-कताकल्पनात् निश्चयत्वे प्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकत्वविरहेण निश्चयत्वव्यापकत्वमेव प्रतिबन्धकतायां निवेशनीयम्। वस्तुतो यद्व्यतिरेकनिश्चयप्रति-बध्यत्वमात्रमेव सम्यगिति बोध्यम्।

तथा च स्वप्रतिबन्धकयत्संशयत्वव्यापकयदभावत्वप्रकारताकत्वे सति यद्धर्मा-वच्छिन्नविशेष्यकयत्संशयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यत्वे सति यद्व्यतिरेक-निश्चयप्रतिबध्यत्वमेको हेतुः पर्यवसितः।

यद्यपि प्रमेयत्वादिना व्याप्त्यभावावगाहिनि पक्षधर्मत्वाभावत्वाद्यवच्छिन्नविषयकज्ञानेऽनुमितिप्रतिबन्धके व्याप्त्यभावत्वादिप्रकारकत्वाभावाद् दृष्टान्ताऽसिद्ध्यादिवारणाय यदभावावगाहिताप्रयुक्तप्रतिबन्धकताशालिसंशयादौ यदभावत्वप्रकारकतानैयत्यं विवक्षणीयम्, तथा च व्यभिचारसंशयप्रतिबध्येऽव्यभिचारनिश्चये व्यभिचारनिश्चयाजन्ये यद्व्यतिरेकनिश्चयोपादानव्यावृत्त्यसङ्गतिः, अव्यभिचारनिश्चयं प्रति प्रतिबन्धकताया व्यभिचाराभावावगाहित्वाऽप्रयुक्ततया यत्पदेन व्यभिचारोपादानाऽसम्भवात् ।

एवं स्वप्रतिबन्धकयद्व्यतिरेकनिश्चयत्वव्यापकयदभावत्वप्रकारताकत्वे सति यत्संशयप्रतिबध्यत्वं द्वितीयहेतुः पर्यवसितो वोध्यः । इदानीमुक्तव्याप्तौ हेतुभेदेन यदभावावगाहिताप्रयुक्तत्वरूपविशेषणप्रवेशाप्रवेशौ सिद्धान्तयिष्यन् सामान्यतस्तत्प्रवेशं प्रदर्श्य यद्व्यतिरेकनिश्चयोपादानस्य वैयर्थ्यमाशङ्कते—यद्यपीति । पक्षधर्मत्वाभावत्वाद्यवच्छिन्नविषयकज्ञाने पक्षधर्मत्वाभावप्रकारकनिश्चये, प्रमेयवान् धूमः पर्वतादित्याकारके इति यावत् । यद्यपीदं ज्ञानं च निरुक्तव्याप्त्यभावसंशयलक्षणाक्रान्तं, तथापि व्याप्तित्वावच्छिन्नाप्रकारकत्वगर्भव्याप्त्यभावप्रकारकत्वरूपयथाश्रुतनिश्चयत्वाक्रान्तमस्त्येवेति ध्येयम् । अनुमितिप्रतिबन्धके पक्षधर्मत्वाभावावगाहितयेत्यादिः । व्याप्त्यभावत्वादिप्रकारकत्वाभावादिति । अनेन संशये निश्चये वा यदभावत्वप्रकारकत्वं नास्तीति सूचितम् । दृष्टान्ताऽसिद्ध्यादिवारणायेति । आदिना स्वरूपासिद्धिपरिग्रहः । तथा चाऽनुमितौ व्याप्तिनिश्चयजन्यत्वसत्त्वेऽपि व्याप्त्यभावत्वप्रकारकत्वस्य व्याप्तिव्यतिरेकनिश्चये विरहेण तादृशनिश्चयनिष्ठप्रतिबन्धकताकप्रतिबध्यत्वविरहाद् दृष्टान्तासिद्धिरिति भावः । एवं प्रमेयत्वेन प्रामाण्यावगाहिनि कृत्यसाध्यत्वादिनिश्चये "प्रमेयवत् 'निःश्रेयससाधनं' ज्ञानं कृत्यसाध्यमित्याकारके" प्रवृत्तिप्रतिबन्धके प्रामाण्याभावत्वप्रकारकप्रामाण्यव्यतिरेकनिश्चयप्रतिबध्यत्वाभावात्स्वरूपासिद्धिश्चेत्यपि वोध्यम् । विवक्षणीयमिति । तथा च यदभावावगाहिताप्रयुक्तप्रतिबन्धकताशालिसंशये तादृशनिश्चये वा यदभावत्वप्रकारकत्वं निवेशनीयमित्यर्थः । उक्त-प्रमेयवान् धूमः पर्वताऽवृत्तिरित्याकारकनिश्चयनिष्ठायानुमितिप्रतिबन्धकता सा न व्याप्त्यभावावगाहिताप्रयुक्तेति तादृशसंशयादौ यदभावत्वप्रकारकत्वविरहेण तादृशसंशयादेर्यत्संशयपदेन धर्तुमशक्यत्वेऽपि व्याप्तिसंशयमादाय न दृष्टान्तासिद्ध्याद्यवकाशः । एवं सति यद्व्यतिरेकनिश्चयपदोपादानस्य वैयर्थ्यं दुर्वारमेवेत्याह—तथा चेति । यदभावावगाहिताप्रयुक्तप्रतिबन्धकताशालिसंशये यदभावत्वप्रकारकत्वविवक्षणे चेत्यर्थः । अव्यभिचारनिश्चये इति । अव्यभिचारग्रहे इत्यर्थः । यद्व्यतिरेकनिश्चयोपादानव्यावृत्त्यसङ्गतिरिति । यद्व्यतिरेकनिश्चयानुपादानेऽव्यभिचारग्रहे व्यभिचारसंशयप्रतिबध्यत्वरूपहेतोः सत्त्वेन तत्र व्यभिचारनिश्चयजन्यत्वरूपसाध्यविरहेण व्यभिचारः—'तदुपादाने तु व्यभिचारव्यतिरेकनिश्चयप्रतिबध्यत्वविरहेण न व्यभिचार' इति पूर्वमुक्तम्, इदानीं 'संशयनिष्ठप्रतिबन्धकतायां यदभावावगाहिताप्रयुक्तत्वनिवेशे' तद्व्यावृत्त्यसङ्गतिरित्यर्थः । यदभावावगाहिताप्रयुक्तत्वनिवेशेनैवं व्यभिचारवारणादिति भावः ।

तथापि यद्व्यतिरेकनिश्चये यदभावत्वप्रकारकत्वनियतत्वनिवेशपक्षे एव प्रतिबन्धकतायां यदभावावगाहिताप्रयुक्तत्वं निवेशनीयं, न तु संशये तद्विशेषणपक्षे, अनुमित्यादिप्रतिबन्धकव्याप्त्यादिसंशये व्याप्त्यभावत्वाप्रकारकत्वायोगेन दृष्टान्ताऽसिद्ध्याद्यनवकाशात् । तथा च सति व्यभिचारावगाहिताप्रयुक्तानुमितिप्रतिबन्धकतावति व्यभिचारसंशये व्यभिचाराभावत्वप्रकारतानैयत्येनैव यत्पदेन व्यभिचारोपादानसम्भवात् व्यतिरेकनिश्चयोपादानव्यावृत्तिः शक्यते सङ्गमयितुम् ।

---

उक्तव्यभिचारं वारयति—अव्यभिचारनिश्चयं प्रतीति । अव्यभिचारज्ञानं प्रतीत्यर्थः । प्रतिबन्धकताया इति । व्यभिचारसंशयस्येत्यादिः । व्यभिचाराभावावगाहित्वाप्रयुक्तत्वादिति । तत्प्रतिबन्धकताया व्यभिचारावगाहिताप्रयुक्तत्वादेवेति भावः । यत्पदेनेति । यस्य संशय इत्यत्र यत्पदेनेत्यर्थः । व्यभिचारोपादानाऽसम्भवादिति । तथा च व्यभिचारसंशयनिष्ठव्याप्तिग्रहप्रतिबन्धकतायां व्यभिचाराभावावगाहिताप्रयुक्तत्वविरहेण विशिष्टप्रतिबन्धकतानिरूपितप्रतिबध्यत्वरूपहेतुविरहेणोक्तव्यभिचाराभावाद् व्यर्थमेव यद्व्यतिरेकनिश्चयपदमिति भावः ।

यदभावावगाहिताप्रयुक्तत्वं यद्व्यतिरेकनिश्चयनिष्ठप्रतिबन्धकतायामेव निवेशनीयम्, एवं च व्यतिरेकनिश्चयोपादानमपि सार्थकमित्याशयेन समाधत्ते—तथापीति । एवकारव्यवच्छेद्यं स्पष्टयति—न त्विति । तद्विशेषणपक्षे यदभावत्वप्रकारकत्वनिवेशे पक्षे । प्रयोजनाभावादिति शेषः । यत्संशये तद्विशेषणपक्षे संशयप्रतिबन्धकतायां यदभावावगाहिताप्रयुक्तत्वनिवेशाभावेऽपि दृष्टान्ताऽसिद्ध्यादिकं परिहरति—अनुमित्यादिप्रतिबन्धकेति । आदिना प्रवृत्तिपरिग्रहः । व्याप्त्यादिसंशये इति । आदिना इष्टसाधनताज्ञानधर्मिकप्रामाण्यसंशयपरिग्रहः । व्याप्त्यभावत्वाऽप्रकारकत्वायोगेनेति । नञ्द्वयमवधारणार्थम् । व्याप्त्यभावत्वप्रकारकत्वेनैवेत्यर्थः । इदमुपलक्षणम् । प्रामाण्याभावत्वप्रकारकत्वनियमेनेत्यपि बोध्यम् । दृष्टान्ताऽसिद्ध्याद्यनवकाशादिति । आदिना स्वरूपासिद्धिपरिग्रहः । तथा चाऽनुमितिप्रतिबन्धकव्याप्तिसंशये व्याप्त्यभावत्वप्रकारकत्वनियमेन तत्प्रतिबध्यत्वस्य व्याप्तिनिश्चयजन्यानुमितौ सत्त्वेन न दृष्टान्ताऽसिद्धिः । एवं प्रवृत्तिप्रतिबन्धकेष्टसाधनताज्ञानधर्मिकप्रामाण्यसंशये प्रामाण्याभावत्वप्रकारकत्वनियमेन तत्प्रतिबध्यत्वस्य इष्टसाधनताज्ञानधर्मिकप्रामाण्यनिश्चयजन्यप्रवृत्तौ सत्त्वेन नापि स्वरूपासिद्धिरिति भावः । तथा च सतीति । संशयप्रतिबन्धकतायां यदभावावगाहिताप्रयुक्तत्वाऽनिवेशे सतीत्यर्थः । व्यभिचारावगाहिताप्रयुक्तेति । इदं च प्रतिबन्धकताविशेषणम् । अनेन च व्यभिचारसंशयनिष्ठप्रतिबन्धकतायां 'यद्व्यभिचारा'भावावगाहिताप्रयुक्तत्वं नास्तीति सूचितम् । अनुमितिप्रतिबन्धकतावतीति । व्याप्तिज्ञानप्रतिबन्धकतावतीत्यर्थः । व्यभिचाराभावत्वप्रकारकतानैयत्येनैवेति । व्यभिचाराभावत्वप्रकारकत्वनियमेनेत्यर्थः । एवकारेण यत्संशयनिष्ठप्रतिबन्धकतायां यदभावावगाहिताप्रयुक्तत्वनिवेशव्यावृत्तिः । यत्पदेनेति । यस्य संशय इत्यत्र यत्पदेनेत्यर्थः । तथा चाऽव्यभिचारज्ञानप्रतिबन्धकव्यभिचारसंशये व्यभिचाराभावत्वप्रकारकत्वनियमेन तत्प्रतिबध्यत्वस्या-

ऽव्यभिचारनिश्चयाजन्येऽव्यभिचारज्ञाने सत्त्वेन व्यभिचारः स्यादतो यद्व्यतिरेकनिश्चयोपादानं, तदुपादाने तु व्यभिचारव्यतिरेकनिश्चयप्रतिबध्यत्वविरहान्न व्यभिचार इति समुदितार्थः।

अयम्भावः—पूर्वं प्रमेयत्वेन व्याप्त्यभावावगाहि पक्षधर्मत्वाभावविषयकनिश्चयमादाय दृष्टान्ताऽसिद्धिः प्रदर्शिता, परन्तु प्रमेयवान्धूमः पर्वताऽवृत्तिरिति ज्ञाने व्याप्तिनिश्चयत्वं न तु व्याप्तिसंशयत्वं, संशयलक्षणानाक्रान्तत्वात्। पक्षधर्मत्वसंशयस्य प्रतिबन्धकत्वाभावेन न दृष्टान्ताऽसिद्धिसम्भवः, तन्मते व्याप्तिसंशयस्यैव प्रतिबन्धकत्वात्। तथा चोक्तदृष्टान्तासिद्धिपरिहारार्थं यद्व्यतिरेकनिश्चये एव यदभावत्वप्रकारकत्वनिवेशिते तन्निष्ठप्रतिबन्धकतायामेव यदभावावगाहित्वं निवेशनीयम्, अन्यथोक्तव्यभिचारतादवस्थ्यात्। न तु संशयनिष्ठप्रतिबन्धकतायां यदभावावगाहित्वं निवेशनीयं, प्रयोजनाभावात्। एवं च यद्व्यतिरेकनिश्चयानुपादाने व्यभिचाराभावत्वप्रकारकव्यभिचारसंशयप्रतिबध्ये व्यभिचारनिश्चयाजन्येऽव्यभिचारग्रहे व्यभिचारः स्यादतस्तदुपात्तम्। तथा च व्यभिचारव्यतिरेकनिश्चयप्रतिबध्यत्वविरहान्न व्यभिचारः। न च व्यभिचारसंशये व्यभिचारावगाहित्वप्रयुक्तमेव प्रतिबन्धकत्वं, न तु व्यभिचाराभावावगाहित्वप्रयुक्तमिति यदभावावगाहित्वप्रयुक्तत्वविरहान्न व्यभिचार इति वाच्यम्। संशयप्रतिबन्धकतायां यदभावावगाहिताप्रयुक्तत्वस्यानिवेशादिति ध्येयम्।

इदमत्रावधेयम्—संशये यदभावत्वप्रकारकत्वनिवेशपक्षे तत्प्रतिबन्धकतायां यदभावावगाहिताप्रयुक्तत्वनिवेशेऽपि यद्व्यतिरेकनिश्चयोपादानं सार्थकीकर्त्तुं शक्यते, तथा हि—व्यभिचाराभावकालीनधूमत्वावच्छिन्नधर्मिकव्यभिचारसंशयप्रतिबध्येऽव्यभिचारनिश्चये व्यभिचारवारणाय यद्व्यतिरेकनिश्चयोपादानात्। अन्यथा तादृशसंशयीयधर्मितावच्छेदकतात्मकव्यभिचाराभावविषयिताया अपि तादृशप्रतिबन्धकताप्रयोजकत्वाद् व्यभिचारापत्तेः। किञ्च व्यभिचाराऽभाववान्न वेति संशयनिष्ठप्रतिबन्धकतायाः व्यभिचाराभावाभावत्वावच्छिन्नविषयिताप्रयुक्ततया तदन्तःपाति व्यभिचाराभावत्वावच्छिन्न-विषयिताया अपि प्रयोजकत्वात्तादृशसंशयप्रतिबध्येऽव्यभिचारग्रहे व्यभिचारवारणार्थमपि यद्व्यतिरेकनिश्चयोपादानव्यावृत्तिसम्भवे कथमुक्तं तद्व्यावृत्तिर्न सम्भवतीति विभावनीयम्।

अथ यथा प्रमेयत्वेन व्याप्त्यभावावगाहि पक्षधर्मताविरहवत्वेन हेत्ववगाहिनि अनुमितिप्रतिबन्धके व्याप्त्यभावत्वाप्रकारकत्वेन दृष्टान्तासिद्धिवारणार्थं यदभावावगाहिताप्रयुक्त-स्वप्रतिबन्धकताशालिनि यद्व्यतिरेकनिश्चये यदभावत्वप्रकारकत्वं निवेश्यते—तथाऽनुमितिप्रतिबन्धकपक्षधर्मत्वाभावनिश्चयात्मके प्रमेयत्वघटत्वादिना व्याप्तेः संशये व्याप्त्यभावत्वप्रकारकत्वाभावाद् दृष्टान्तासिद्धिवारणाय एतत्कल्पेऽपि प्रतिबन्धकतायां यदभावावगाहिताप्रयुक्तत्वमपि निवेश्यमिति कथं यद्व्यतिरेकनिश्चयपदव्यावृत्तिसङ्गतिरिति चेन्न। यत्संशयपदेन यद्रूपावच्छिन्नप्रकारकसंशयनिवेशादेव तद्वारणादिति। तथा च यद्रूपावच्छिन्नसंशयत्वव्यापकं यदभावत्वप्रकारकत्वमिति फलितम्। एवं च यद्व्यतिरेकनिश्चयव्यावृत्तिसङ्गतिः। यद्व्यतिरेकनिश्चयपदेन यद्व्यतिरेकत्वावच्छिन्नप्रकारता-

कनिश्चयविवक्षणे तु निश्चये यदभावत्वप्रकारकत्वनैयत्यनिवेशेऽप्यव्यभिचारविशिष्टबुद्धौ व्यभिचारवारणाऽसम्भवः इति यद्व्यतिरेकनिश्चये यदभावत्वप्रकारकत्वनैयत्यनिवेशकल्पे एव यदभावावगाहिताप्रयुक्तनिवेशनमिति ।

अथैतत्कल्पे पक्षधर्मताविरहत्वेन व्याप्त्यभावावगाहि धूमः पर्वतवृत्तित्वाभाववानिति व्याप्त्यभावावगाहिताप्रयुक्तानुमितिप्रतिबन्धकनिश्चये व्याप्त्यभावत्वप्रकारकत्वविरहाद् यदभावावगाहिताप्रयुक्तत्वनिवेशेऽपि न दृष्टान्तासिद्धिवारणम् । न च यदभावावगाहिताप्रयुक्तत्वपदेन यन्निष्ठप्रतियोगित्वसम्बन्धावच्छिन्नप्रकारतानिरूपिताऽभावनिष्ठप्रकारताप्रयुक्तत्वमेव विवक्षणीयम्, उक्तनिश्चयीयप्रतिबन्धकतायां व्याप्तिनिष्ठप्रकारतानिरूपिताभावनिष्ठप्रकारताप्रयुक्तत्वविरहादेव न दोष इति वाच्यम् । पक्षधर्मतात्वेन व्याप्तिमवगाह्योक्तनिश्चयमादाय तद्दोषस्यैव सत्त्वात् । न च यद्रूपावच्छिन्नप्रकारतानिरूपिताभावनिष्ठप्रकारताप्रयुक्तत्वविवक्षया तद्वारणीय इति वाच्यम् । तथा सन्निवेशे तु अव्यभिचारनिश्चयेऽव्यभिचारत्वावच्छिन्नविषयतानिरूपिताऽभावप्रकारताप्रयुक्तप्रतिबन्धकत्वाऽसत्त्वात्, निरुक्तप्रतिबन्धकताको योऽव्यभिचाराभाववानिति निश्चयः तत्राऽव्यभिचाराभावत्वप्रकारतानियतत्वसत्त्वादव्यभिचारनिश्चयाऽजन्येऽव्यभिचारनिश्चये व्यभिचारापत्तेरतो यथाश्रुतयदभावावगाहिताप्रयुक्तत्वस्यैव निवेशनीयतया प्रागुक्तदोषवारणाऽसम्भवादिति चेन्मैवम् । यदभावावगाहिताप्रयुक्तस्वप्रतिबन्धकयद्व्यतिरेकनिश्चये भ्रमभिन्नत्वस्यैव निवेशनीयत्वात् । तदर्थश्च मुख्यविशेष्यताभिन्ना स्वव्यधिकरणप्रकारावच्छिन्ना या या विशेष्यता तदनिरूपकत्वं, धूमो वह्निव्याप्यत्वाभाववानिति व्याप्तिव्यतिरेकनिश्चयस्य मुख्यविशेष्यीभूतधूमांशे भ्रमतयाऽनुमितिप्रतिबन्धकीभूतभ्रमभिन्नव्याप्तिव्यतिरेकनिश्चयाप्रसिद्ध्या दृष्टान्तासिद्धिवारणाय मुख्यविशेष्यताभिन्नघटिततदर्थानुसरणम् । तथा च पथवृत्तित्वाभावत्वादिना व्याप्त्यभावावगाहिनिश्चये निरुक्तभ्रमभिन्नत्वविरहान्न तमादाय दृष्टान्तासिद्धिः ।

न च तथापि वह्न्यभाववन्निरूपितसंयोगसम्बन्धावच्छिन्नवृत्तित्वाभावरूपं वह्न्यभावव्याप्यत्वादिना वह्निव्याप्त्यवगाहि वह्निव्याप्तिव्यतिरेकावगाहिताप्रयुक्तानुमितिप्रतिबन्धकताशालिनि निरुक्तभ्रमभिन्ने पर्वतो वह्न्यभावव्याप्यवानिति निश्चये वह्निव्याप्त्यभावत्वप्रकारकत्वविरहात्तद्दोषतादवस्थ्यमिति वाच्यम् । यदभावावगाहिताप्रयुक्तत्वमित्यत्रावगाहितायां विशेषणताविशेषसम्बन्धावच्छिन्नत्वं निवेशादेव तद्वारणसम्भवात् ।

अथ घटादिव्यतिरेकनिश्चयप्रतिबध्ये घटादिविशिष्टबुद्धौ घटादिनिश्चयाजन्ये व्यभिचारवारणाय यत्संशयप्रतिबध्यत्वं निवेशितं तन्न सङ्गच्छते । घटवदवृत्तित्वेन घटाभावावगाहिनि घटाभावावगाहिताप्रयुक्तस्वप्रतिबन्धकताशालिनि च घटवदवृत्तिमद्भूतलमिति निश्चये घटाभावत्वप्रकारकत्वनियमविरहादेव व्यभिचारवारणसम्भवाद्यत्संशयप्रतिबध्यत्वनिवेशो व्यर्थः । न च गगनादिनिश्चयाजन्ये गगनादिव्यतिरेकनिश्चयप्रतिबध्ये गगनादिविशिष्टबुद्धौ व्यभिचारवारणाय तन्निवेशस्यावश्यकत्वं तत्र गगनादिमदवृत्तित्वेन गगनाभावावगाहिनिश्चयस्य प्रागुक्तभ्रमभिन्नत्वविरहादेव तादृशनिश्चय-

यदभावत्वाप्रकारकज्ञाननिष्ठयदभावावगाहिताप्रयुक्तप्रतिबन्धकताकान्यत्वे सति यत्संशयव्यतिरेकनिश्चयसामान्यप्रतिबध्यत्वं वा हेतुः, अव्यभिचाराभावत्वानवच्छिन्न-

मादाय व्यभिचारवारणाऽसम्भवादिति वाच्यम्। प्रमेयवान् गगनाभाववान् प्रमेयवांश्च देश इति प्रमेयत्वेन गगनाभावावगाहिनि व्यावर्त्तकधर्मदर्शनविधया गगनाभावावगाहिताप्रयुक्तस्वप्रतिबन्धकताशालिनि केवलप्रमेयवान् देश इति निश्चये गगनाभावत्व-प्रकारकत्व-'नैयत्य'विरहेणैव तत्रापि व्यभिचारवारणसम्भवादिति चेन्न। अनुमितिं प्रति व्याप्तिसंशयव्याप्तिव्यतिरेकनिश्चयस्येव व्याप्यभावावच्छेदकत्वेन गृहीतधर्मवत्तानिश्चयस्यापि तुल्ययुक्त्या प्रतिबन्धकतया प्रमेयवान् व्याप्त्यभाववान् इति निश्चयकालीनं यद्व्याप्त्यभावावगाहिताप्रयुक्तस्वप्रतिबन्धकताशालिव्याप्त्यभावत्वप्रकारकत्वशून्यप्रमेयत्वेन व्याप्त्यभावावगाहिप्रमेयवांश्चेति निश्चयात्मकज्ञानं तदादाय दृष्टान्तासिद्धिवारणाय निरुक्तस्वप्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वनिवेशस्यावश्यकतया तत एव व्यावर्त्तकधर्मदर्शनविधया प्रतिबन्धकत्ववारणसम्भवात्, गगनादिनिश्चयाजन्ये गगनादि-व्यतिरेकनिश्चयप्रतिबध्ये गगनादिविशिष्टबुद्धौ व्यभिचारवारणाय तत्संशयप्रतिबध्यत्व-निवेशस्यावश्यकत्वात्। न च व्याप्त्यभावावच्छेदकतया हीनधर्मवत्तानिश्चयस्याऽनुमिति-प्रतिबन्धकत्वस्वीकारे तुल्ययुक्त्या व्याप्यवृत्तिधर्मवत्तानिश्चयस्यापि प्रतिबन्धकत्वं स्वीकरणीयं, तथा च ज्ञानवैशिष्ट्याद्यनवच्छिन्नत्वनिवेशाद् व्यावर्त्तकधर्मदर्शनप्रतिबन्धकता-मादाय दृष्टान्ताऽसिद्धिवारणेऽपि व्याप्यावृत्तित्वेन व्याप्त्यभावावगाहिनिश्चयमादाय दृष्टान्तासिद्धितादवस्थ्यमिति वाच्यम्। तद्वदवृत्तिधर्मवत्तानिश्चयस्यापि निश्चयविशिष्ट-निश्चयत्वेनैव प्रतिबन्धकत्वं न तु निरूप्यनिरूपकभावापन्नविषयताशालिनिश्चयत्वेने-त्युक्तविशेषणेन तस्यापि वारणसम्भवात्। अथवा यदभावावगाहितायाम् अभावत्वा-वच्छिन्नावच्छेदकत्वनिरूपितत्वनिवेशेन तद्वारणसम्भवादिति निपुणतरं विभावनीयम्।

अपरे तु संशयपदवैयर्थ्यभिया स्वप्रतिबन्धकतायां यदभावावगाहिताप्रयुक्तत्वपदेन यन्निष्ठानुयोगितानिरूपितप्रतियोगितावच्छेदकावच्छिन्नावगाहिताप्रयुक्तत्वमेव विवक्षणीयम्। नातस्तद्वदवृत्तिमानिति ज्ञानीयावगाहितामादाय संशयपदवैयर्थ्यापत्तिः। न च तदभाववत्ताबुद्धिम्प्रति तद्व्यापकाभाववत्तानिश्चयस्यापि प्रतिबन्धकतया घटादिव्यापका-भावत्वेन घटाभावावगाहिज्ञानमादाय तद्दोषतादवस्थ्यम्, उक्तज्ञानस्य भ्रमभिन्नत्वविर-हेणापि प्रमेयत्वेन घटाभावावगाहिप्रमेयवान् घटादिव्यापकाभाववांश्चेति समूहालम्बन-ज्ञानमादाय तद्दोषतादवस्थ्यापत्तिरिति वाच्यम्। गगनादिव्यतिरेकनिश्चयमादाय गगन-वत्ताबुद्धौ व्यभिचारवारणायैव तद्दलसार्थक्यात्। न चाऽत्र भ्रमभिन्नतादृशज्ञानान्तर-प्रसिद्धिरित्याहुः।

प्रमेयत्वेन व्याप्त्यभावावगाहिपक्षधर्मत्वाभावत्वावच्छिन्नविषयकेऽनुमितिप्रति-बन्धकज्ञाने व्याप्त्यभावत्वप्रकारकत्वाभावाद् दृष्टान्तासिद्धिवारणाय निश्चयनिष्ठप्रति-बन्धकतायां यदभावावगाहिताप्रयुक्तत्वं निवेशितम्, संशयप्रतिबन्धकतायां यदभावाव-गाहिताप्रयुक्तत्वनिवेशनं दृष्टान्तासिद्ध्याद्यवारकतया निष्प्रयोजनमित्याशयेन संशये यद-

व्यभिचारविषयिताप्रयुक्तप्रतिबन्धकताकव्याप्तिनिश्चये सत्यन्ताभावादव्यभिचारनिश्चयत्वावच्छिन्नाजन्यत्वेऽपि न व्यभिचारः ।

भावत्वप्रकारकत्वनिवेशपक्षे संशयप्रतिबन्धकतायां न तन्निवेशितम्, अतो व्यभिचारसंशयप्रतिवध्ये व्याप्तिनिश्चये व्यभिचारवारणाय व्यतिरेकनिश्चयोपादानव्यावृत्तिरिति न सङ्गच्छते। संशये यदभावत्वप्रकारकत्वनिवेशकल्पे तद्व्यक्तित्वेन व्याप्यवगाहि तद्व्यक्त्यभावत्वेन व्याप्त्यभावावगाहिव्याप्तिसंशयात्मकपक्षधर्मत्वाभावत्वावच्छिन्नविषयकनिश्चये पक्षधर्मत्वाभावावगाहितयाऽनुमितिप्रतिबन्धके व्याप्त्यभावत्वप्रकारकत्वाभावाद् दृष्टान्तासिद्धिवारणायाऽवश्यं संशयप्रतिबन्धकतायां यदभावावगाहिताप्रयुक्तत्वं निवेशनीयम्, तथा च यद्व्यतिरेकनिश्चयोपादानं व्यर्थम्—व्यभिचारसंशयनिष्ठप्रतिबन्धकतायां व्यभिचाराभावावगाहिताप्रयुक्तत्वविरहेण व्यभिचारसंशयप्रतिबध्ये व्याप्तिग्रहे व्यभिचाराभावादित्याशङ्कया प्रकारान्तरेण यदभावत्वप्रकारकत्वनिवेशस्वरसलभ्यविवक्षितहेतुं दर्शयन् हेतुघटकव्यतिरेकनिश्चयपदव्यावृत्तिं सङ्गमयितुमाह—यदभावत्वाप्रकारकेति ।

कालीशङ्करकृतस्तु व्यभिचारतद्वद्भेदकोटिकसंशये अव्यभिचारग्रहप्रतिबन्धके न व्यभिचाराभावत्वप्रकारकत्वनैयत्यमिति दृष्टान्तासिद्धितादवस्थ्यं प्रतिबन्धकतायां संशयत्वघटकयद्भावीयविषयिताप्रयुक्तत्वनिवेशेऽपि कथं व्यतिरेकनिश्चयपदव्यावृत्तिसङ्गतिरिति चेद्—तादृशसंशयानभ्युपगमात्, अभ्युपगमे तु यदभावत्वाप्रकारकेति प्राहुः ।

यदभावत्वाऽप्रकारकज्ञाननिष्ठेति । अवगाहिताविशेषणम् । यदभावत्वानवच्छिन्नेति तदर्थः । यदभावत्वप्रकारकत्वविशेषणेन वारणीयव्यभिचारं सत्यन्तेनोद्धरति—अव्यभिचाराभावत्वानवच्छिन्नेति । व्यभिचारत्वावच्छिन्नेति यावत् । व्यभिचारविषयिताप्रयुक्तेति । व्यभिचाराभावाभावविषयिता प्रयुक्तीति यावत् । सत्यन्ताभावादिति । अव्यभिचाराभावत्वानवच्छिन्नव्यभिचारीभावाभावविषयिताप्रयुक्तप्रतिबन्धकताकत्वस्यैव व्याप्तिग्रहे सत्त्वेन तादृशप्रतिबन्धताकानन्यत्वरूपसत्यन्ताभावादित्यर्थः । तथा च सत्यन्तविरहेण विशिष्टहेतोरप्यभावादिति यावत् । न व्यभिचार इति । व्यभिचारनिश्चयसाधारण्यानुरोधेनाऽव्यभिचाराभावनिश्चयस्यापि व्यभिचारत्वावच्छिन्नविषयित्वेनैव प्रतिबन्धकतया अव्यभिचारव्यतिरेकनिश्चयनिष्ठप्रतिबन्धकतायाम् अव्यभिचाराभावत्वानवच्छिन्नविषयित्वावच्छिन्नत्व-अव्यभिचाराभावावगाहिताप्रयुक्तत्वयोः सत्त्वादिति ध्येयम् ।

न च यदभावत्वप्रकारकज्ञाननिष्ठयदभावावगाहिताप्रयुक्तप्रतिबन्धकताकत्वे सतीत्येव कथं नोक्तं किमभावद्वयोपादानेति वाच्यम् । उक्तव्यभिचारतादवस्थ्यात् । अव्यभिचारव्यतिरेकनिश्चयस्यापि व्याप्तिज्ञाने प्रतिबन्धकत्वात् । यदभावत्वाप्रकारकज्ञाननिष्ठत्वानुक्तौ दृष्टान्ताऽसिद्धिः, व्याप्त्यभावत्वेन व्याप्त्यभावावगाहिताप्रयुक्तप्रतिबन्धकताकत्वस्यैवानुमितौ सत्त्वेन तत्र सत्यन्तदलविरहेण यत्पदेन व्याप्तेर्धर्तुमशक्यत्वाद् यदभावत्वाप्रकारकज्ञाननिष्ठप्रतिबन्धकताकान्यत्वमात्रनिवेशेऽपि 'यदभावाव-

व्यभिचारसंशयमात्रप्रतिबध्यस्य व्याप्तिनिश्चयस्य व्यभिचाराभावत्वानवच्छिन्न-व्यभिचाराभावविषयिताप्रयुक्तप्रतिबन्धकताकान्यत्वं तत्प्रतिबन्धकतायां व्यभिचाराभाव-विषयित्वाप्रयुक्तत्वादेवाऽक्षतमिति व्यतिरेकनिश्चयोपादानसार्थक्यम्। व्यभिचाराभाव-त्वानवच्छिन्नतदभावविषयिताप्रयुक्तत्वं च तदभावव्यक्तित्वावच्छिन्नाभावज्ञानप्रतिबन्ध-कतायामेव प्रसिद्धम्।

गाहिताप्रयुक्तत्वाऽनिवेशे' दृष्टान्ताऽसिद्धिः, व्याप्त्यभावत्वाप्रकारकप्रमेयत्वेन व्याप्त्य-भावावगाहि पक्षधर्मत्वाभावविषयक—प्रमेयवान् धूमः पर्वतावृत्तिरिति ज्ञानप्रतिबन्ध-कताकत्वस्यैवानुमितौ सत्त्वात्तत्र सत्यन्तदलविरहेण यत्पदेन व्याप्तेर्धर्त्तुमशक्यत्वात्।

इदमत्रावधेयम्—घटव्यतिरेकनिश्चयसामान्यप्रतिबध्ये घटवत्तानिश्चयाऽजन्ये घटवत्ताग्रहे व्यभिचारवारणाय यत्संशयोपादानम्। तत्रापि घटपटोभयवत्ताज्ञाने घटवत्ताज्ञानाऽजन्ये घटवान्न वा पटाभाववांश्चेत्यादि पटाभावनिश्चयात्मकघटसंशय-प्रतिबध्ये[1] घटव्यतिरेकनिश्चयप्रतिबध्ये व्यभिचारवारणाय सामान्यपदम्। तथा च समूहालम्बनानात्मकघटसंशयप्रतिबध्यत्वविरहान्न व्यभिचारः। यद्व्यतिरेकनिश्चयपदं सार्थकयति—व्यभिचारसंशयमात्रेति। मात्रपदेन व्यभिचारव्यतिरेकनिश्चयस्य व्यवच्छेदः। व्याप्तिनिश्चये सत्यन्तदलसत्त्वं प्रकटयति—व्यभिचाराभावत्वानवच्छिन्नेति। व्यभिचाराभावनिष्ठतद्व्यक्तित्वावच्छिन्नेति यावत्। तादृशी या व्यभिचाराभावविषयिता तत्प्रयुक्ता या प्रतिबन्धकता तन्निरूपकान्यत्वमित्यर्थः। अस्याऽक्षतमित्यनेनाऽन्वयः। अक्षतत्वे हेतुमाह—तत्प्रतिबन्धकतायामिति। व्याप्तिज्ञाननिरूपित-'व्यभिचारसंशय-निष्ठ'-प्रतिबन्धकतायामित्यर्थः। व्यभिचाराभावविषयित्वाप्रयुक्तत्वादेवेति। एवकारेण व्यभिचाराभावत्वानवच्छिन्नत्वस्य व्यवच्छेदः। तेन तादृशप्रतिबन्धकताया व्यभिचारा-भावत्वानवच्छिन्नव्यभिचारविषयिताप्रयुक्तत्वेऽपि न क्षतिः। व्यतिरेकनिश्चयोपादान-सार्थक्यमिति। व्यभिचारसंशयसामान्यप्रतिबध्ये व्यभिचारनिश्चयाऽजन्ये व्याप्तिग्रहे व्यभिचारवारणाय व्यतिरेकनिश्चयोपादानमिति भावः। तथा च व्यभिचारव्यतिरेक-निश्चयप्रतिबध्यत्वविरहान्न दोषः। अत्रापि व्यभिचारसंशयसामान्यप्रतिबध्ये घटाभाव-कारकनिश्चयात्मकव्यभिचारव्यतिरेकनिश्चयप्रतिबध्ये व्यभिचारनिश्चयाजन्ये घट-ज्ञानात्मकव्याप्तिग्रहे व्यभिचारवारणाय सामान्यपदम्। तथा च समूहालम्बनानात्मक-व्यभिचारव्यतिरेकनिश्चयाऽप्रतिबध्यत्वान्न व्यभिचारः। ननु प्रतिबन्धकतायां व्यभि-चाराभावत्वानवच्छिन्नव्यभिचाराभावविषयिताप्रयुक्तत्वं नाऽप्रसिद्धमित्याशयेन प्रसिद्धिं करोति—व्यभिचाराभावत्वानवच्छिन्नेति। तदभावविषयिताप्रयुक्तत्वं चेति। व्यभि-चाराभावविषयिताप्रयुक्तत्वं चेत्यर्थः। तदभावेति। व्यभिचाराभावेत्यर्थः। तद्व्यक्तिपदेन व्यभिचाराभावव्यक्तिमादाय तद्व्यक्तिमानिति ज्ञाननिष्ठा या तद्व्यक्त्यभाववानिति ज्ञाननिरूपिताप्रतिबन्धकता तस्यामेवेत्यर्थः। एवकारेण व्याप्तिज्ञाननिरूपितप्रतिबन्ध-

१. घटाभावत्वाप्रकारकज्ञाननिष्ठघटाभावावगाहिताप्रयुक्तप्रतिबन्धकताकान्यत्वरूप-सत्यन्तदलसत्त्वमपि घटपटोभयवत्ताज्ञाने बोध्यम्।

स्वप्रतिबन्धकतानवच्छेदकयदभावत्वानवच्छिन्नयदभावविषयितासामान्यकत्वे सतीति वा वक्तव्यमित्याहुः ।

कताया व्यवच्छेदः । तथा च तादृशज्ञाननिष्ठा या प्रतिबन्धकता सा तद्व्यक्तित्वावच्छिन्नव्यभिचाराभावविषयिताप्रयुक्ता, न तु व्यभिचाराभावत्वावच्छिन्नविषयिताप्रयुक्तेति सर्वमवदातम् ।

तथा च यदभावत्वानवच्छिन्नयदभावविषयिताप्रयुक्तप्रतिबन्धकताकं यद्यत्तत्तद्भेदकूटवत्वे सति यत्संशयत्व-यद्व्यतिरेकनिश्चयत्वव्यापकप्रतिबध्यत्वं हेतुः । व्याप्त्यभावत्वाप्रकारकतद्व्यक्तित्वेन व्याप्त्यभावप्रकारकज्ञाननिष्ठव्याप्त्यभावावगाहिताप्रयुक्तप्रतिबन्धकताकं तत्तादृशतद्व्यक्त्यभाववानिति ज्ञानं तदन्यत्वस्य व्याप्तिसंशय-व्याप्तिव्यतिरेकनिश्चयप्रतिबध्यत्वस्य चानुमितौ सत्त्वान्न दृष्टान्तासिद्धिः । एवं प्रमात्वाभावत्वाप्रकारकतद्व्यक्तित्वेन प्रमात्वाभावप्रकारकज्ञाननिष्ठप्रमात्वाभावविषयिताप्रयुक्तप्रतिबन्धकताकं प्रमात्वाभावव्यक्तित्वावच्छिन्नाभावज्ञानं तद्भिन्नत्वस्य प्रमात्वसंशय-प्रमात्वव्यतिरेकनिश्चयप्रतिबध्यत्वस्य च प्रवृत्तौ सत्त्वान्न स्वरूपासिद्धिः ।

अथाऽभावांशे व्याप्तित्वेन घटावगाहि अभावत्वेन व्याप्त्यभावावगाहि व्याप्तिमान्न वेत्याकारकव्याप्त्यभावत्वाप्रकारकज्ञाननिष्ठयदभावावगाहिताप्रयुक्तस्वप्रतिबन्धकताकान्यत्वविरहेणाऽसिद्धितादवस्थ्यमिति चेन्न । यदभावावगाहितापदेन यन्निरूपितप्रतियोगितावच्छेदकावच्छिन्नावगाहिताया विवक्षणीयतया पूर्वोक्तदोषवारणसम्भवादिति ।

ननु व्याप्तिमद्भेदाभावस्य व्याप्तिस्वरूपत्वे व्याप्त्यभावत्वाप्रकारकव्याप्तिमान् व्याप्तिमद्भेदवान्वेत्याकारकसंशयनिष्ठव्याप्तिनिरूपितप्रतियोगितावच्छेदकीभूतव्याप्तिमद्भेदत्वावच्छिन्नावगाहिताप्रयुक्तप्रतिबन्धकतान्यत्वविरहेणानुमितेर्दृष्टान्तत्वमनुपपन्नमतः कल्पान्तरमाह—स्वप्रतिबन्धकतावच्छेदकेति । इदं च विषयिताविशेषणम् । स्वपदं प्रतिबध्यत्वेनाभिमतपरम् । तथा च व्याप्तिज्ञानप्रतिबन्धकतानवच्छेदकत्वस्य अव्यभिचाराभावत्वानवच्छिन्न-'अव्यभिचाराभावरूप'-व्यभिचारविषयितासामान्ये विरहेण तादृशविषयितासामान्यकत्वविरहेण व्याप्तिज्ञानप्रतिबन्धकतावच्छेदकाऽव्यभिचाराभावत्वानवच्छिन्नव्यभिचारविषयितासामान्यकव्याप्तिनिश्चये सत्यन्ताभावादव्यभिचारनिश्चयत्वावच्छिन्नाजन्यत्वेऽपि न व्यभिचारः । अत एव स्वप्रतिबन्धकतानवच्छेदत्वं विषयिताविशेषणम् । अन्यथा स्वकालीनाऽव्यभिचाराभावत्वानवच्छिन्नव्यभिचारविषयितासामान्यकत्वरूपसत्यन्तदलस्य अव्यभिचारसंशय-अव्यभिचारव्यतिरेकनिश्चयप्रतिबध्यत्वस्य च सत्त्वाद् व्यभिचारतादवस्थ्यादिति ध्येयम् । अत एव च सामान्यपदं व्यापकत्वार्थकम् । अन्यथा व्याप्तिज्ञानप्रतिबन्धकतानवच्छेदकत्वस्य अव्यभिचाराभावत्वानवच्छिन्न-'तद्व्यक्तित्वेन' अव्यभिचाराभावावगाहिज्ञानीयविषयितायां सत्त्वेन तादृशविषयिताकत्वरूपसत्यन्तदलस्य व्याप्तिज्ञाने सत्त्वेन तद्दोषतादवस्थ्यादतः स्वप्रतिबन्धकतावच्छेदकत्वाभावे तादृशविषयितात्वसामानाधिकरण्यमुपेक्ष्य तादृशविषयितात्वव्यापकबोधनाय तत् । तदुपादाने तु तादृशविषयितासामान्यान्तर्गतव्यभिचारत्वावच्छिन्नविषयितायां व्याप्ति-

ज्ञानप्रतिबन्धकतानवच्छेदकत्वविरहेण स्वपदेन व्याप्तिज्ञानस्य धर्तुमशक्यतया सत्यन्ताभावान्न व्यभिचारः ।

अथ तादृशविषयिताव्यापकस्वप्रतिबन्धकत्वाभावकत्वमेव कथं नोक्तं किमवच्छेदकत्वानुसरणेनेति चेन्न । व्याप्त्यभावत्वानवच्छिन्नव्याप्त्यभावविषयितायाः सामान्यान्तर्गतायाः तद्व्यक्तित्वेन व्याप्त्यभावविषयकपक्षवृत्तित्वाभावनिश्चयेऽपि सत्त्वेन तत्रानुमितिप्रतिबन्धकत्वाभावविरहेण स्वपदेनानुमितेर्धर्त्तुमशक्यतया दृष्टान्तासिद्धिः स्यात् । निवेशे तु तद्व्यक्तित्वेन व्याप्त्यभावविषयितायाः अनुमितिप्रतिबन्धकतानवच्छेदकत्वात्स्वपदेनानुमितेर्धर्त्तव्यतया नोक्तदोष इति ध्येयम् ।

व्याप्त्यभावत्वावच्छिन्नव्याप्त्यभावविषयिताया अपि यदभावविषयितासामान्यान्तर्गततया अनुमितिप्रतिबन्धकतावच्छेदकत्वेन स्वपदेनानुमितेरुपादानाऽसम्भवाद् दृष्टान्तासिद्धिरतो यदभावत्वानवच्छिन्नत्वोपादानम् ।

व्याप्त्यभावत्वानवच्छिन्नपक्षधर्मत्वाभावविषयिताया अपि यदभावत्वानवच्छिन्नविषयितासामान्यान्तर्गततया अनुमितिप्रतिबन्धकतावच्छेदकत्वेन तद्दोषतादवस्थ्यमतो यदभावनिवेशः । तथा च तद्व्यक्तित्वेन व्याप्त्यभावविषयिताया एव धर्त्तव्यतया न दोषः । ईदृशरीत्यैव पूर्वोक्तदृष्टान्तासिद्धिवारणं बोध्यम् । नञ्द्वयनिवेशव्यावृत्तिः पूर्ववत् । यत्संशययद्व्यतिरेकनिश्चयोश्च तथैव ।

एवं च यदभावत्वानवच्छिन्नयदभावविषयितात्वव्यापकस्वप्रतिबन्धकतावच्छेदकत्वाभावकत्वे सति यत्संशयत्व-यद्व्यतिरेकनिश्चयत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यत्वं हेतुः ।

व्याप्त्यभावत्वानवच्छिन्न-'तद्व्यक्तित्वेन' व्याप्त्यभावविषयितात्वव्यापकाऽनुमितिप्रतिबन्धकतावच्छेदकत्वाभावैकत्वस्य व्याप्तिसंशयव्याप्तिव्यतिरेकनिश्चयप्रतिबध्यत्वस्य चाऽनुमितौ सत्त्वान्न दृष्टान्तासिद्धिः । एवं प्रमात्वाभावत्वानवच्छिन्न-'तद्व्यक्तित्वेन' प्रमात्वाभावविषयितात्वव्यापकप्रवृत्तिप्रतिबन्धकतावच्छेदकत्वाभावकत्वस्य प्रमात्वसंशय-प्रमात्वव्यतिरेकनिश्चयप्रतिबध्यत्वस्य च प्रवृत्तौ सत्त्वान्न स्वरूपासिद्धिः ।

अथात्र यत्संशयप्रतिबध्यत्वनिवेशो व्यर्थः, घटादिव्यतिरेकनिश्चयप्रतिबध्येऽपि घटविशिष्टज्ञाने घटाभावत्वानवच्छिन्नघटाभावविषयितासामान्यान्तर्गतायाः तद्व्यक्तिमान् घटाभाववानिति निश्चयकालीनतद्व्यक्तिमानिति निश्चयीयतद्व्यक्तित्वावच्छिन्नविषयिताया घटवत्ताधीप्रतिबन्धकतानवच्छेदकत्वविरहेण सत्यन्ताभावेनैव व्यभिचाराप्रसक्तेः । एवं व्यभिचारसंशयप्रतिबध्येऽपि व्याप्तिज्ञाने व्यभिचाराभावत्वानवच्छिन्नव्यभिचारविषयितासामान्यान्तर्गताया अभाववान् व्यभिचारवानिति निश्चयकालीनाऽभाववानिति निश्चयीयाऽभावत्वावच्छिन्नविषयितायाः व्याप्तिधीप्रतिबन्धकतानवच्छेदकत्वविरहेण सत्यन्ताभावेन व्यभिचाराऽप्रसक्त्या यद्व्यतिरेकनिश्चयप्रतिबध्यत्वदलं च व्यर्थम् ।

न च स्वप्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वनिवेशान्नैष दोषदोष इति वाच्यम् । ज्ञानवैशिष्ट्यानवच्छिन्नत्वं निवेश्य व्यभिचारं सम्पाद्य पुनर्व्यभिचारवारणाय

दलान्तरनिवेशनस्य प्रक्षालनाद्धीति न्यायेनाऽयुक्तत्वात् । एवमपि प्रतियोगितासम्बन्धेन घटाभावांशे घटत्वेन पदार्थान्तरावगाहिभ्रमीयघटाभावविषयिताया व्यभिचारत्वेनाऽव्यभिचारवदवृत्तित्वेन वा व्यभिचाराभावावगाहि भ्रमीयव्यभिचाराभावविषयितायास्तादृशविषयितासामान्यान्तर्गतायाः ( स्व ) घटवत्ताज्ञानव्याप्तिज्ञानप्रतिवन्धकतानवच्छेदकत्वविरहेण सत्यन्ताभावेन व्यभिचाराप्रसक्त्या तद्वैयर्थ्यस्य दुर्वारत्वात् । न च यदभावत्वानवच्छिन्नयदभावविषयितायां भ्रमान्यवृत्तित्वं निवेशनीयमिति वाच्यम् । तथापि घटवदवृत्तित्वेन घटाभावावगाहि घटवदवृत्तिमानिति निश्चयीयघटाभावविषयितायास्तादृशविषयितासामान्यान्तर्गतायाः घटज्ञानप्रतिबन्धकतानवच्छेदकत्वविरहेण यत्संशयप्रतिवध्यत्वदलवैयर्थ्यस्य दुर्वारत्वात् । यदि च पक्षधर्मताविरहत्वेन व्याप्त्यभावावगाहिज्ञानवारणाय प्रतिवन्धकतायां तदवच्छेदकविषयितायां वा भ्रमावृत्तित्वं प्रवेश्यते, तथा च घटवत्ताप्रमायां व्यभिचारः, तत्र घटवदवृत्तिमानिति ज्ञानस्य भ्रमात्मकस्यापि सम्भवेन तादृशघटाभावविषयिताया भ्रमावृत्तिप्रतिबन्धकतानवच्छेदकत्वेन सत्यन्तार्थसत्त्वात्, तादृशप्रतिवन्धकतायाः कामिनीजिज्ञासादौ प्रसिद्धेरिति संशयपदमित्युच्यते— तदा प्रमात्मकाऽव्यभिचारनिश्चये व्यभिचारो दुर्वार एव, अव्यभिचाराभावत्वानवच्छिन्नव्यभिचारविषयितासामान्यस्य भ्रममात्रवृत्तिप्रतिवन्धकतावच्छेदकत्वात्, एवं भ्रमान्यवृत्तित्वरूपतद्विशेषणेऽपि अथ यदभावविषयितापदेन यन्निरूपितप्रतियोगितावच्छेदकावच्छिन्नविषयिता विवक्षणीया—घटवदवृत्तित्वावच्छिन्नविषयितायाः घटनिरूपितप्रतियोगितावच्छेदकावच्छिन्नत्वाभावेन स्वप्रतिवन्धकतानवच्छेदकतादृशविषयिताकत्वं घटवत्ताज्ञानस्याऽक्षतमिति तत्र व्यभिचारवारणाय यत्संशय इत्यादेः सार्थक्यम् । न चैवं दृष्टान्ताऽसिद्धिः, व्याप्त्यभावत्वानवच्छिन्नविषयितायां व्याप्तिनिरूपितप्रतियोगितावच्छेदकावच्छिन्नत्वाभावादिति वाच्यम् । आधेयत्वाभावत्वस्यापि हेतुव्यापकसाध्यसामानाधिकरण्यरूपव्याप्तिनिरूपितप्रतियोगितावच्छेदकतया तदवच्छिन्नविषयिताया व्याप्त्यभावत्वानवच्छिन्नत्वेन स्वप्रतिवन्धकतानवच्छेदकतादृशविषयिताकत्वेनानुमितेर्दृष्टान्तत्वसम्भवादिति चेन्न । द्रव्याभावत्वस्यापि घटनिरूपितप्रतियोगितावच्छेदकतया घटवदवृत्तिद्रव्याभाववानिति ज्ञानीयद्रव्याभावत्वावच्छिन्नविषयिताया घटाभावत्वानवच्छिन्नत्वेन घटनिरूपितप्रतियोगितावच्छेदकावच्छिन्नत्वेन च तादृश्याः प्रतिबन्धकतावच्छेदकतया घटवत्ताज्ञानप्रतिबन्धकतानवच्छेदकतादृशविषयिताकत्वाभावेन व्यभिचाराऽप्रसक्त्या संशयपदसार्थक्याऽसम्भवात् । न च यदभावत्वानवच्छिन्नयदभावविषयितायां तद्वदवृत्तित्वानवच्छिन्नत्वमपि निवेशनीयं, तथा च घटवदवृत्तिद्रव्याभाववानिति ज्ञानमादाय न दोष इति वाच्यम् । तद्वदवृत्तित्वानवच्छिन्नत्वमधिकं निवेश्य घटवत्ताज्ञाने व्यभिचारं सम्पाद्य तद्वारणाय यत्संशयेत्यादिदलसार्थक्यस्य प्रक्षालनाद्धीत्यादि न्यायेनायुक्तस्यानुपदमेवोक्तत्वात् । न च दृष्टान्तासिद्धिवारणाय तद्वदवृत्तित्वानवच्छिन्नत्वनिवेश आवश्यकः, अन्यथा व्याप्त्यभावत्वानवच्छिन्नव्याप्तिमदवृत्तित्वावच्छिन्नव्याप्त्यभावविषयिताया अनुमितिप्रतिबन्धकतावच्छेदकतया स्वप्रतिबन्धकतानवच्छेदकतादृशविषयिताकत्वाभावेनानुमितेर्दृष्टान्तत्वासम्भवादिति वाच्यम् । अनुमितौ व्याप्तिमदवृत्तिधर्म-

दीधितिकृतस्तु अन्योन्याभावादिगर्भव्याप्तिबुद्धौ अत्यन्ताभावादिगर्भव्यभिचारधियो विरोधित्वमस्वीकुर्वन्तो मणिमन्त्रादिवद्व्यभिचारज्ञानस्य प्रतिबन्धकत्वं नानुमन्यन्ते— अपि तु ग्राह्याभावावगाहित्वेनैवेति न तेषां व्यभिचारसंशयस्य व्याप्तिनिश्चयप्रतिबन्धकतेति यथाश्रुतमेव साधु ।

---

वत्ताज्ञानस्य प्रतिबन्धकत्वे मानाभावात् । अन्यथा तन्निवेशस्यावश्यकतया व्यावृत्तिसङ्गतिरिति ध्येयम् ।

अत्र कालीशङ्करकृतः—व्याप्त्यंशे तद्घटकपदार्थांशे वा भ्रमात्मकस्य व्याप्त्यभाववत्ताज्ञानस्य व्याप्त्यभावत्वानवच्छिन्नस्वप्रतिबन्धकतावच्छेदकविषयिताकतया दृष्टान्तासिद्धिर्दुर्वारैवेत्यतः स्वप्रतिबन्धकतावच्छेदकतानवच्छेदक-यदभावत्वानवच्छिन्नविषयितानिष्ठयन्निरूपितप्रतियोगितावच्छेदकावच्छिन्नत्वसामान्यकत्वस्य सत्यन्तेन विवक्षणादेव सामञ्जस्यात् । तथा चाऽव्यभिचाराभावत्वानवच्छिन्नविषयितानिष्ठस्य अव्यभिचारनिरूपितप्रतियोगितावच्छेदकीभूतव्यभिचारत्वावच्छिन्नत्वस्याऽव्यभिचारग्रहप्रतिबन्धकतावच्छेदकतया सत्यन्तविरहान्न व्याप्तिग्रहे व्यभिचारः । अव्यभिचाराभावत्वानवच्छिन्ना या पूर्वक्षणवृत्तित्वविशिष्टाव्यभिचाराभावत्वावच्छिन्नविषयिता तन्निष्ठस्याऽव्यभिचारनिरूपितप्रतियोगितावच्छेदकीभूतपूर्वक्षणवृत्तित्वविशिष्टस्याऽव्यभिचारस्याभावत्वावच्छिन्नत्वस्याऽव्यभिचारधीप्रतिबन्धकतावच्छेदकतानवच्छेदकतया व्यभिचारतादवस्थ्यमतः सामान्यपदम् । तथा च सति निरुक्तप्रतियोगितावच्छेदकावच्छिन्नत्वसामान्यान्तर्गतव्यभिचारविषयितानिष्ठव्यभिचारत्वावच्छिन्नत्वस्याऽतथात्वान्न व्यभिचारः । घटाभावत्वानवच्छिन्नविषयितानिष्ठस्य घटनिरूपितप्रतियोगितावच्छेदकीभूततत्तद्व्यक्त्यभावत्वावच्छिन्नत्वस्य घटविशिष्टधीप्रतिबन्धकतावच्छेदकतानवच्छेदकतया घटविशिष्टज्ञाने व्यभिचारवारणाय यत्संशयप्रतिबध्यत्वोपादानम् । व्याप्त्यभावत्वानवच्छिन्नविषयितानिष्ठस्य व्याप्तिनिरूपितप्रतियोगितावच्छेदकीभूततत्तद्व्यक्त्यभावत्वावच्छिन्नत्वस्यानुमितिप्रतिबन्धकतावच्छेदकतानवच्छेदकतया न दृष्टान्ताऽसिद्धिः । यदभावत्वानवच्छिन्नत्वं च यदभावत्वविषयतानिरूपितत्वम्, भ्रमप्रमासाधारणयदभावत्वविषयतात्वेन वास्तववदभावत्वविषयताया निरूपकतया न तदसङ्ग्रहः । स्वप्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वमपि निवेशनीयम्, तेन द्रव्याभाववान् घटाभाववानिति निश्चयकालीनद्रव्याभाववद् भूतलमिति निश्चयीयघटाभावत्वानवच्छिन्नविषयितानिष्ठस्य घटनिरूपितप्रतियोगितावच्छेदकीभूतद्रव्यत्वाभावत्वावच्छिन्नत्वस्य घटविशिष्टधीप्रतिबन्धकतावच्छेदकतावच्छेदकत्वेऽपि न व्यभिचार इति प्राहुरित्यन्यत्र विस्तरः ।

दीधितिकृतस्त्विति । ग्राह्याभावावगाहित्वेनैवेति । प्रतिबन्धकत्वमिति पूर्वेणान्वयि । एवकारेण मणिमन्त्रादिन्यायेन प्रतिबन्धकत्वस्य व्यवच्छेदः । इति शेषः । तेषां दीधितिकृतां, मते इति शेषः । व्याप्तिनिश्चयप्रतिबन्धकतेति । ग्राह्यसंशयस्याऽप्रतिबन्धकत्वादिति शेषः । तेषामयमाशयः—व्यभिचारस्य व्याप्तिसमसङ्ख्यकत्वेन समानाकारकस्यैव व्यभिचार-

**( चि० म० )—तन्निश्चयस्तद्धेतुरनुमितौ व्याप्तेरिवेति वाच्यम्, तत्सन्देहे सति अर्थसन्देहेनाऽर्थाऽनिश्चयादेवाऽप्रवृत्तेस्तत्र तयोरप्रतिबन्धकत्वादिति चेन्न ।**

---

तन्निश्चय इति । तद्व्यतिरेकज्ञानमात्रस्य प्रतिबन्धकत्वे तत्संशयात्कार्यानुत्पत्तेस्तन्निश्चयत्वेनैव तद्धेतुत्वात् । प्रवृत्तीति प्रकृताभिप्रायम्, यत्प्रतिबन्धकौ इत्यर्थः । तत्सन्देहे सति । क्लृप्तकारणसद्भावे यत्सत्त्वे कार्यानुत्पादः अनापत्त्या तस्यैव प्रतिबन्धकत्वं कल्प्यते, न चेह तथा ।

---

निश्चयस्य व्याप्तिज्ञानप्रतिबन्धकत्वं न त्वसमानाकारकव्यभिचारनिश्चयस्य । एवं च व्यभिचारज्ञानस्य मणिमन्त्रादिन्यायेन न प्रतिबन्धकत्वं, गौरवात्; किन्तु ग्राह्याभावावगाहित्वेनैव लाघवादिति । **यथाश्रुतमेव साध्विति** । यद्व्यतिरेकज्ञानत्वेन प्रतिबन्धकत्वमेवेत्यर्थः । एवकारेण यदभावत्वप्रकारकत्वनैयत्यविशेषणस्य यदभावावगाहिताप्रयुक्तत्वविशेषणस्य च व्यवच्छेदः । तथा च ग्राह्यसंशयस्याऽप्रतिबन्धकतयाऽव्यभिचारज्ञानत्वव्यापकत्वं व्याप्तिज्ञानप्रतिबन्धकतायां नास्ति अव्यभिचारव्यतिरेकज्ञानत्वस्य । व्यभिचारव्यतिरेकसंशयेऽपि सत्त्वात्तत्र च व्याप्तिज्ञानप्रतिबन्धकत्वविरहेण व्याप्तिनिश्चये व्यभिचारविरहाद् यदभावत्वप्रकारकत्वनैयत्यविशेषणं—'तन्मूलक'-यदभावावगाहिताप्रयुक्तत्वविशेषणं च व्यर्थमेवेति भावः ।

तन्निश्चयस्तद्धेतुरिति मूलम् । अत्र तज्ज्ञानं तद्धेतुरित्येव कथन्नोक्तमित्यत आह मूले—तत्सन्देहे सतीति । प्रामाण्यसन्देहे सतीत्यर्थः । प्रमा न वेति संशये सतीति भावः । अत्र प्रमात्वव्यतिरेकज्ञानमपि पाक्षिकम् । तस्य प्रतिबन्धकत्वेन प्रामाण्यनिश्चयाभावादिति यावत् । अर्थसन्देहेन इष्टसाधनत्वसंशयेन । इष्टसाधनत्वसंशयं प्रति इदमिष्टसाधनमिति ज्ञानं प्रमा न वेति संशयस्य हेतुत्वादिति भावः । **अर्थानिश्चयादेवेति** । इष्टसाधनत्वनिश्चयाभावादेवेत्यर्थः । एवकारेण प्रामाण्यसंशयप्रामाण्यव्यतिरेकनिश्चययोर्व्यवच्छेदः । तत्र प्रवृत्तौ । तयोः प्रामाण्यसंशयप्रामाण्यव्यतिरेकनिश्चययोः । **अप्रतिबन्धकत्वादिति** ।

उक्तव्याप्तौ यद्व्यतिरेकज्ञानत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यतावत् यत् तत्तन्निश्चयजन्यमिति व्याप्तौ, अनुकूलतर्कं यद्व्यतिरेकज्ञानप्रतिबध्यत्वमस्तु तन्निश्चयजन्यत्वं मास्तु तद् ज्ञानजन्यत्वं वाऽस्तु इति शङ्कानिवारकं तर्कम् उपदिशति आह । तद्व्यतिरेकेतीति । तथा च तद्व्यतिरेकज्ञानप्रतिबध्यत्वं यस्य तस्य यदि तज्ज्ञानजन्यत्वं स्यात्तदा 'प्रतिबन्धकीभूतात्' तत्संशयादपि कार्योत्पत्तिः स्यादित्याकारकस्तर्कः । अत्र संशयजन्यत्वमापाद्यम् । तज्ज्ञानजन्यत्वमापादकम् । प्रवृत्तिः न प्रामाण्यज्ञानजन्या प्रामाण्यसंशयाजन्यत्वादित्यापाद्याभावेनापादकाभावसिद्धिर्बोध्या । यद्वा यद्व्यतिरेकज्ञानसामान्यप्रतिबध्यत्वे यदि [illegible] व्यभिचारः स्यात्तदा यत्संशयप्रयुक्ता-

उक्तव्याप्तावनुकूलतर्कमुपदर्शयति—'तद्वचतिरेकेति'। मात्रपदं कृत्स्नार्थकम्। तद्धेतुत्वात् तद्धेतुत्वौचित्यात्। अन्यथा संशये स्वरूपयोग्यताकल्पने गौरवादित्याशयः। इदमापाततः। कारणतावच्छेदकलाघवानुरोधेन फलानुपधायकसाधारणस्वरूपयोग्यताकल्पनेऽपि क्षतिविरहात् उक्तयुक्त्या निश्चयत्वेन हेतुतासिद्धेरसम्भवदुक्तिकत्वाच्च। विशेषतः प्रवृत्तेर्व्याप्तावन्तर्भावेऽनुमितेर्दृष्टान्तत्वासङ्गतिरिति विशेषतस्तदन्तर्भावो नाभिप्रेतः अपि तु यत्त्वतत्त्वमात्रेणेत्याह—प्रवृत्तीति।

ननु प्रामाण्यसंशयदशायां अर्थानिश्चयादेव प्रवृत्त्यभावनिर्वाहात्प्रामाण्याभावज्ञानस्य कारणीभूताभावप्रतियोगित्वासिद्धेरुक्तानुमानं स्वरूपासिद्धचा दुष्टमिति मूलोक्तं न

---

नुत्पादप्रतियोगिवृत्तिः न स्यादिति तर्को बोध्यः। कृत्स्नार्थकमिति। साकल्यार्थकमित्यर्थः। यद्वचतिरेकज्ञानसामान्यमित्यर्थः। सामान्यपदानुपादाने समूहालम्बनरूपघटाभावादिनिश्चयात्मकव्याप्तिव्यतिरेकज्ञानप्रतिबध्यत्वस्य घटादिज्ञाने सत्त्वेन तत्र व्याप्तिनिश्चयजन्यत्वविरहाद् व्यभिचारापत्तेरिति भावः। दीधितौ—प्रतिबन्धकत्वे स्थिते इति शेषः। तत्संशयादिति। तन्निश्चयस्तद्धेतुरित्यत्र तज्ज्ञानं तद्धेतुरित्युक्तौ तत्संशयस्यापि ग्रहणात्तस्य च यद्वचतिरेकज्ञानरूपतया प्रतिबन्धकत्वादिति भावः। कार्यानुत्पत्तेरिति। फलितार्थमिदम्। तन्निश्चयत्वेनैवेति। एवकारेण तज्ज्ञानत्वव्यावृत्तिः। अन्यथा तज्ज्ञानत्वेन हेतुत्वे, संशये प्रतिबन्धकीभूतव्याप्त्यादिसंशये। स्वरूपयोग्यताकल्पने जनकतावच्छेदकविषयिताकल्पने। स्वाभिप्रेतमाह—इदमापातत इति। इदं निश्चयजन्यत्वम्, आपातत उक्तमित्यर्थः। कारणतावच्छेदकलाघवानुरोधेनेति। निश्चयत्वेन कारणत्वे संशयान्यत्वज्ञानत्वयोर्विशेष्यविशेषणाभावे विनिगमनाविरहेण कारणतावच्छेदकगौरवं तदपेक्षया ज्ञानत्वस्य कारणतावच्छेदकत्वे लाघवादिति भावः। परन्तु ज्ञानत्वेन कारणत्वे कारणतावच्छेदककोटौ अप्रामाण्यनिश्चयानास्कन्दितत्वम्, निश्चयत्वेन कारणत्वे तु अप्रामाण्यज्ञानानास्कन्दितत्वं निवेशनीयमिति तु विभावनीयम्। उक्तयुक्त्या लाघवानुरोधेन। असम्भवदुक्तिकत्वाच्चेति। निश्चयत्वेन कारणत्वस्येत्यादिः। अपि तु यत्त्वतत्त्वमात्रेणेति। तथा च प्रवृत्तिः प्रामाण्यनिश्चयजन्या प्रामाण्यव्यतिरेकज्ञानत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यतावत्त्वात्, या यद्वचतिरेकज्ञानत्वव्यापकप्रतिबन्धकतानिरूपितप्रतिबध्यतावती सा तन्निश्चयजन्या यथाऽनुमितिरिति सामान्यव्याप्तौ तात्पर्यम्। माध्यमिकशङ्कां निराकरोति तटस्थः मूले—तत्सन्देहे सति इष्टसाधनतानिश्चयधर्मिकप्रामाण्यसन्देहे सति। अर्थसन्देहेनेति। तदनन्तरमिष्टसाधनतासन्देहेनेत्यर्थः। अर्थनिश्चयोत्तरमर्थनिश्चयधर्मिकप्रामाण्यसंशयस्याऽर्थसंशयहेतुत्वादिति भावः। अर्थानिश्चयादेवेति। इदमिष्टसाधनमेवेत्यवधारणात्मकनिश्चयाभावादेवेत्यर्थः। पूर्वोत्पन्ननिश्चयस्तु नावधारणात्मक इति भावः। अप्रवृत्तेः प्रवृत्तिविरहात्, प्रवृत्तावधारणात्मकनिश्चयस्यैव हेतुत्वादिति भावः। तत्र प्रवृत्तौ, तयोः प्रामाण्यसंशयप्रामाण्यव्यतिरेकनिश्चययोः। अप्रतिबन्धकत्वादिति। तथा च स्वरूपासिद्धिरिति भावः।

सङ्गच्छते, प्रवृत्तौ अर्थनिश्चयस्येव प्रामाण्याभावज्ञानाभावस्यापि कारणताग्राहकनियतान्वयव्यतिरेकसत्त्वेन कारणताया दुरपह्नवत्वादित्याशङ्कां निराकरोति—क्लृप्तेत्यादिना। तस्य प्रतिबन्धकत्वं=तदभावस्यानन्यथासिद्धत्वं कल्प्यते—न चेह तथेति। प्रकृते क्लृप्ताऽपरसकलकारणसत्त्वे प्रामाण्यसंशयादिसत्त्वे प्रवृत्त्यनुत्पाद इति नेत्यर्थः। प्रामाण्यसंशयाद्यभावेऽपि विनाऽर्थनिश्चयमप्रवृत्तेस्तद्धेतुताया आवश्यकत्वात्, प्रामाण्यसंशयवशायां च तदसत्त्वेनाऽप्रवृत्तेरितरसकलकारणाऽसम्पत्तेरिति भावः। तथा च नियतान्वयव्यतिरेकेऽपि प्रामाण्याभावज्ञानाभावस्यान्यथासिद्धत्वमेवेति न तज्ज्ञानस्य कारणीभूताभावप्रतियोगित्वरूपं प्रतिबन्धकत्वं शङ्कास्पदमपीति भावः।

अथार्थनिश्चयकाले तद्द्वितीयक्षणे वा यत्र प्रामाण्यसंशयस्तत्र तादृशार्थनिश्चयद्वितीयक्षणे तत्तृतीयक्षणे वा प्रवृत्त्यापत्तिवारणाय प्रामाण्यसंशयस्य प्रतिबन्धकत्वमावश्यक-

---

प्रवृत्तिं प्रति अर्थनिश्चयस्येव प्रामाण्याभावज्ञानाभावस्यापि कारणतया तत्प्रतियोगिभूताऽप्रामाण्याभावज्ञानप्रतिबध्यत्वस्य वृत्तौ सत्त्वान्न स्वरूपासिद्धिरित्याशङ्क्य निषेधति—नन्विति। प्रामाण्यसंशयदशायामिति। इष्टसाधनताज्ञानधर्मिकप्रामाण्याऽनिश्चयदशायामिति यावत्। अर्थानिश्चयादेव इष्टसाधनत्वानिश्चयादेव, अर्थः फलसाधनता, एवकारेण प्रामाण्यसंशयव्यवच्छेदः। कारणीभूताभावप्रतियोगित्वासिद्धेरिति। प्रतिबन्धकत्वासिद्धेरित्यर्थः। उक्तानुमानं प्रवृत्तिः प्रामाण्यनिश्चयजन्या प्रामाण्यव्यतिरेकज्ञानप्रतिबध्यत्वादित्यनुमानं, स्वरूपासिद्धया पक्षे प्रवृत्तौ तादृशहेत्वभावेन। दुरपह्नवत्वादिति। विनिगमकाभावादिति शेषः। निराकरोतीति। अन्वयव्यतिरेकसत्त्वेऽपि प्रामाण्याभावज्ञानाभावस्याऽन्यथासिद्धत्वसम्पादनेनेत्यादिः। दीधितौ—क्लृप्तकारणसद्भावे इति। क्लृप्तयावत्कारणसत्त्वे इत्यर्थः। प्रतिबन्धकाभावस्तु तदा न क्लृप्त इति भावः। भावरूपयावत्कारणसत्त्वे इति वा। यावत्पदाद्दण्डाभावदशायां रासभसत्त्वे कार्यानुत्पादेऽपि न रासभस्य दण्डाभावस्य वा प्रतिबन्धकता। यत्सत्त्वे अर्थसंशयसत्त्वे, तस्यैव अर्थसंशयस्यैव, एवकारेण प्रामाण्यसंशयस्य व्यवच्छेदः। तद्धेतुतायाः अर्थनिश्चयहेतुतायाः, तदसत्त्वेन अर्थनिश्चयाऽसत्त्वेन, प्रामाण्यसंशयस्य अर्थसंशयसम्पादकत्वेनार्थनिश्चयविरहप्रयोजकत्वादिति भावः। तथा च प्रवृत्तौ इष्टसाधनताज्ञानधर्मिकप्रामाण्यनिश्चयस्याऽकारणत्वेन प्रमातत्त्वावधारणं व्यर्थमेवेति शङ्का तटस्थस्येति भावः। इतरसकलकारणाऽसम्पत्तेरिति। अर्थनिश्चयविरहप्रयुक्तेत्यादिः। तथा च अर्थनिश्चयस्य कारणत्वे च, तज्ज्ञानस्य प्रामाण्याभावज्ञानस्य, तथा च स्वरूपासिद्धिर्निष्प्रत्यूहैवेति भावः।

प्रामाण्याभावज्ञानस्य प्रतिबन्धकत्वं द्रढयितुं तद्व्यापकस्य प्रामाण्यसंशयस्य प्रामाण्यव्यतिरेकनिश्चयस्य च प्रतिबन्धकत्वमावश्यकमित्याशङ्कते—अथेति। अर्थनिश्चयकाले इष्टसाधनत्वनिश्चयकाले, प्रामाण्यसंशयसामग्र्याः। अर्थनिश्चयविरोधित्वे त्वाह—द्वितीयक्षणे वेति। प्रामाण्यसंशयः। प्रामाण्यव्यतिरेकनिश्चयश्चेत्यपि बोध्यम्। प्रवृत्त्यापत्तिवारणेति। तथा च प्रमाणतत्त्वज्ञानमिष्टसाधनम्, तादृशज्ञान-

न च प्रयोजकीभूताभावप्रतियोगित्वमेव वाच्यम् ।

---

मिति चेन्न । अगृहीताऽप्रामाण्यकार्थनिश्चयत्वेन हेतुतयैव निर्वाहात्, गौरवेणाऽप्रामाण्यज्ञानाभावस्य पृथक् कारणत्वाऽकल्पनात् । मूले स्वरूपासिद्धिप्रदर्शनं दृष्टान्तासिद्धेरप्युपलक्षणं बोध्यम् । प्रमात्वाभावग्रहाभावस्य प्रवृत्तिकारणत्वाभावेऽपि न स्वरूपासिद्धिः, अन्यविधप्रतिबन्धकताया एव विवक्षणीयत्वादित्याशङ्क्य निराचष्टे—न चेति ।

यद्यपि प्रयोजकत्वमिदं न नियतपूर्ववर्त्तित्वरूपं, व्याप्त्यभावसंशयद्वितीयक्षणे व्याप्तिनिश्चयोत्पत्तौ तृतीयक्षणेऽनुमित्युत्पत्त्या व्याप्त्यभावग्रहाभावस्यानुमित्यप्रयोजकत्वेन

---

धर्मिकप्रामाण्यसंशयश्च समूहालम्बनरूपं तत्र द्वितीयक्षणे यत्र क्रमेण तौ तत्र तृतीयक्षणे प्रवृत्त्यापत्तिवारणायेत्यर्थः । न च कार्यसहभावेनार्थनिश्चयस्य हेतुत्वोपगमान्नेयमापत्तिरिति वाच्यम् । तथा सति यत्र प्रथममर्थनिश्चयस्ततो द्वितीयक्षणे कुतश्चित्प्रतिबन्धकवशान्न प्रवृत्त्युत्पत्तिः, तत्र तृतीयक्षणे प्रवृत्त्यभावापत्तेरिति ध्येयम् । प्रामाण्यसंशयस्य प्रामाण्यव्यतिरेकज्ञानस्य चेत्यपि बोध्यम् । आवश्यकमिति । तथा च न स्वरूपासिद्धिरिति भावः । आशङ्कां निराकरोति—अगृहीताप्रामाण्यकेति । अप्रामाण्यज्ञानानास्कन्दितेत्यर्थः । अप्रामाण्यज्ञानाभावस्य प्रामाण्याभावज्ञानाभावस्य । कारणत्वाकल्पनादिति । तथा च स्वरूपासिद्धिस्तदवस्थैवेति भावः । दृष्टान्तासिद्धेरप्युपलक्षणमिति । व्याप्तिविरहज्ञानस्यानुमितिप्रतिबन्धकत्वे मानाभावादिति भावः । प्रतिबन्धकत्वस्य कारणीभूताभावप्रतियोगित्वरूपत्वे एव स्वरूपासिद्धिः, प्रामाण्याभावज्ञानाभावस्याकारणत्वेन प्रामाण्याभावज्ञाने कारणीभूताभावप्रतियोगित्वविरहात् । किन्तु प्रतिबन्धकत्वस्य प्रयोजकीभूताभावप्रतियोगित्वरूपत्वे न स्वरूपासिद्धिः, प्रामाण्याभावज्ञानाभावस्याकारणत्वेऽपि प्रयोजकत्वेऽपि तावत्, प्रामाण्याभावज्ञानाभावविशिष्टार्थनिश्चयस्य प्रवृत्तिहेतुत्वादित्याशयवानाह—प्रमात्वाभावग्रहाभावस्येति । अन्यविधप्रतिबन्धकताया एवेति । प्रयोजकीभूताभावप्रतियोगित्वरूपाया इत्यर्थः । एवकारेण कारणीभूताभावप्रतियोगित्वरूपाया व्यवच्छेदः ।

ननु प्रयोजकीभूताभावप्रतियोगित्वरूपप्रतिबन्धकतानिवेशेऽपि दृष्टान्तासिद्धिर्दुर्वारैव, व्याप्तिव्यतिरेकसंशयस्य ग्राह्यसंशयतया व्याप्तिज्ञानाऽविरोधित्वात्, अन्यथोक्तरीत्या व्याप्तिनिश्चये व्यभिचारापत्तेः । एवं च व्याप्तिव्यतिरेकसंशयाभावस्यानुमितिप्रयोजकता दुर्घटत्वम् । नियतपूर्ववर्त्तित्वरूपप्रयोजकताविवक्षणे व्याप्तिव्यतिरेकसंशयस्य व्याप्तिज्ञानाऽप्रतिबन्धकत्वेऽपि व्याप्तिनिश्चयजन्यानुमितौ व्याप्तिव्यतिरेकसंशयाभावस्य नियतपूर्ववर्त्तित्वस्याक्षततया दृष्टान्तासिद्धिर्वारयितुं शक्यते, परन्तु व्याप्तिव्यतिरेकसंशयाभावस्य नियतपूर्ववर्त्तित्वमेव नास्तीत्याशङ्कते—यद्यपीत्यादिना । अनुमित्यप्रयोजकत्वेनेति । अनुमितिपूर्वक्षणे व्याप्त्यभावसंशयाभावस्याऽसत्त्वेनानुमितिनियतपूर्ववर्त्तित्वासिद्धेरिति भावः । ग्राह्यसंशयस्य व्याप्तिव्यतिरेकसंशयस्य, तदभावस्य व्याप्तिव्यतिरेकसंशयाभावस्य । तद्दोषतादवस्थ्यादिति । दृष्टान्तासिद्धितादवस्थ्यादित्यर्थः । व्याप्तिव्यतिरेकसंशयस्य प्रयोजकीभूताभावप्रतियोगित्वाभावादिति

दृष्टान्तासिद्धेः। नापि जनकजनकत्वं, ग्राह्यसंशयस्याऽप्रतिबन्धकत्वेन तदभावस्यानुमितिजनकव्याप्तिनिश्चयाऽजनकत्वेन तद्दोषतादवस्थ्यात्। तथापि जनकतावच्छेदककोटिप्रविष्टत्वमेव तत्, व्याप्तिसंशयभेदस्य निश्चयत्वघटकतयाऽनुमितिजनकतावच्छेदकत्वात्। व्याप्तिसंशयस्यानुमितिप्रतिबन्धकत्वान्न दृष्टान्तासिद्धिः। उक्तयुक्त्याऽगृहीताप्रामाण्यकत्वस्यार्थनिश्चयनिष्ठप्रवृत्तिहेतुतावच्छेदकताया आवश्यकत्वान्न स्वरूपासिद्धिः।

अथवा यन्निश्चयविरहविशिष्टस्य यद्धर्मिकयद्व्यतिरेकज्ञानस्याभावो यद्विशेष्यकयत्प्रकारकयज्जातीयकार्यनियताव्यवहितपूर्ववर्त्ती तद्धर्मिकतन्निश्चयस्तद्विशेष्यकतत्प्रकारकतज्जातीयकार्यजनक इति समुदायार्थः। व्याप्त्यभावसंशयद्वितीयक्षणोत्पन्नव्याप्तिनिश्चया-

---

भावः। तथापीति। तत् प्रयोजकत्वम्, व्याप्तिसंशयभेदस्य व्याप्त्यभावसंशयभेदस्येत्यपि बोध्यम्। न दृष्टान्तासिद्धिरिति। व्याप्तिनिश्चयोऽनुमितिहेतुः—व्याप्तिनिश्चयत्वं च व्याप्तिसंशयान्यज्ञानत्वम्, विनिगमकाभावेन व्याप्त्यभावसंशयान्यज्ञानत्वं च। एवं च व्याप्तिसंशयभेदवत् व्याप्त्यभावसंशयभेदस्यापि अनुमितिकारणतावच्छेदकतया प्रयोजकीभूताभावप्रतियोगित्वरूपं प्रतिबन्धकत्वं व्याप्तिव्यतिरेकसंशयस्याऽक्षतमिति न दृष्टान्तासिद्धिरिति भावः। स्वरूपासिद्धिं परिहरति—उक्तयुक्त्येति। लाघवेनेत्यर्थः। अगृहीताप्रामाण्यकत्वस्येति। अप्रामाण्यज्ञानानास्कन्दितत्वस्येत्यर्थः। प्रामाण्यव्यतिरेकज्ञानाभावविशिष्टस्येति यावत्। अर्थनिश्चयनिष्ठेति। इष्टसाधनतानिश्चयनिष्ठेत्यर्थः। अस्य प्रवृत्तिहेतुतायामन्वयः। न च व्याप्तिव्यतिरेकज्ञानसामान्यस्य प्रतिबन्धकत्वमसिद्धम्, विरोधावगाहिव्याप्तिव्यतिरेकज्ञानस्यैव प्रतिबन्धकत्वादिति वाच्यम्। विरोधावगाहित्वस्यापि व्याप्तौ निवेशनीयत्वादिति दिक्।

प्रामाण्यसंशयदशायाम् अर्थानिश्चयादेव प्रवृत्त्यनिर्वाहात्प्रामाण्याभावज्ञानभावस्याकारणत्वेन प्रामाण्याभावज्ञानस्य प्रतिबन्धकत्वासिद्ध्या प्रवृत्तिः प्रामाण्यनिश्चयजन्या प्रामाण्यव्यतिरेकज्ञानप्रतिबध्यत्वादित्यनुमानं स्वरूपासिद्धमतः कारणीभूताभावप्रतियोगित्वरूपप्रतिबन्धकत्वानिवेशेऽपि प्रयोजकीभूताभावप्रतियोगित्वरूपप्रतिबन्धकत्वं निवेशितम्, अत्र प्रयोजकत्वमनन्यथासिद्धत्वागर्भं नियतपूर्ववर्त्तित्वमेवेत्याशयेनाह—अथवेति। यन्निश्चयविरहविशिष्टस्य व्याप्तिनिश्चयविरहविशिष्टस्य, यद्धर्मिकयद्व्यतिरेकज्ञानस्याभावः। धूमधर्मिकव्याप्तिव्यतिरेकज्ञानस्याभावः। यद्विशेष्यकयत्प्रकारकयज्जातीयकार्यनियताव्यवहितपूर्ववर्त्तीति। पर्वतविशेष्यकवह्निप्रकारकानुमित्यव्यवहितपूर्ववर्त्तीत्यर्थः। तद्धर्मिकतन्निश्चयः धूमधर्मिकव्याप्तिनिश्चयः। तद्विशेष्यकतत्प्रकारकतज्जातीयकार्यजनक इति। पर्वतविशेष्यकवह्निप्रकारकानुमितिजनक इत्यर्थः। प्रकृते च प्रमाणतत्त्वज्ञानधर्मिकनिःश्रेयससाधनत्वप्रकारकनिश्चयविरहविशिष्टस्य तादृशनिश्चयधर्मिकप्रामाण्यव्यतिरेकज्ञानस्याभावः प्रमाणतत्त्वज्ञानधर्मिक-'शास्त्राधीन'प्रवृत्त्यव्यवहितपूर्ववर्त्ती तादृशनिश्चयधर्मिकप्रामाण्यनिश्चयः तादृशप्रवृत्तिजनक इति पर्यवसन्नम्।

तथा च यद्विशेष्यकयत्प्रकारकयज्जातीयं यत्कार्यं स्वनियताव्यवहितपूर्ववर्त्तियन्निश्चयविरहविशिष्टयद्धर्मिकयद्व्यतिरेकज्ञानाभावकं तत् 'कार्यं' तद्धर्मिकतन्निश्चयत्वा-

यत्र तदनन्तरक्षणेऽनुमितिः तत्र तत्पूर्वक्षणे विशेषणाभावाद्विशिष्टाभावोऽक्षत एवेति न दृष्टान्तासिद्धिः ।

एतेनाऽप्रामाण्यग्रहाभावस्य कारणतावच्छेदकत्वोपगमे विशेष्यविशेषणभावे विनि-

---

वच्छिन्नजनकतानिरूपितजन्यतावदिति भावः । यन्निश्चयविरहविशिष्टेत्यस्य फलमाह—व्याप्त्यभावसंशयेति । तदनन्तरक्षणे व्याप्तिनिश्चयानन्तरक्षणे, तत्पूर्वक्षणे अनुमितिपूर्वक्षणे, विशेषणाभावात् 'व्याप्ति'यन्निश्चयविरहरूपविशेषणाभावात्, विशिष्टाभावः यन्निश्चयविरहविशिष्टधूमधर्मिकव्याप्तिव्यतिरेकज्ञानस्याभावः । न दृष्टान्तासिद्धिरिति । नोक्तदृष्टान्तासिद्धिरित्यर्थः । अत्र यद्व्यतिरेकज्ञाने यद्धर्मिकत्वानिवेशेऽन्यधर्मिकाऽप्रामाण्यज्ञानसत्त्वेऽपि प्रवृत्त्युत्पत्त्या प्रामाण्यव्यतिरेकज्ञानाभावस्य प्रवृत्त्यव्यवहितपूर्वमसत्त्वात्स्वरूपासिद्ध्यापत्तेः । तद्धर्मिकतन्निश्चयस्यैवोद्देश्यत्वात्तद्धारणम् । पटादिनिश्चयाजन्यघटादिज्ञानाव्यवहितपूर्वमपि कदाचित्पटनिश्चयविरहविशिष्टपटव्यतिरेकज्ञानाभावसत्त्वाद् व्यभिचारवारणाय नियतत्वनिवेशः । यत्किञ्चिद् घटादिव्यक्तिमादाय तद्व्यक्तिनियताव्यवहितपूर्वं व्याप्तिनिश्चयविरहविशिष्टव्याप्तिव्यतिरेकज्ञानाभावसत्त्वाद् व्याप्तिनिश्चयाजन्यतद्व्यक्तौ व्यभिचारवारणाय—जातीयेति । अवच्छेदावच्छेदेन हेतुमत्तालाभाय । तथा च घटज्ञानत्वावच्छेदेन घटज्ञाननियताव्यवहितपूर्ववर्त्तित्वस्य व्याप्तिव्यतिरेकाभावे विरहेण हेतोरप्यभावसत्त्वान्न व्यभिचारः । धूमधर्मिकव्याप्तिनिश्चयाजन्याऽन्यलिङ्गकानुमितौ व्यभिचाराद् धूमलिङ्गकानुमितेर्दृष्टान्तता बोध्या । प्रमाणतत्त्वज्ञानविशेष्यकेष्टसाधनत्वप्रकारकज्ञानधर्मिकप्रामाण्यनिश्चयविरहविशिष्टेष्टसाधनत्वप्रकारकज्ञानधर्मिकाऽप्रामाण्यज्ञानस्याभावो 'ग्रन्थश्रवण'प्रवृत्त्यव्यवहितपूर्ववर्तीति प्रवृत्तिसामान्यं तादृशाभावजन्यमनुमितिवदिति फलितम् ।

अयमाशयः—यत्रादौ अर्थनिश्चयः 'अर्थनिश्चयधर्मिकेष्टसाधनत्वप्रकारकज्ञानं' ततस्तादृशज्ञानधर्मिकाऽप्रामाण्यज्ञानं ततः प्रवृत्तिर्न भवति, एवं यत्र केवलम् 'अर्थनिश्चयविरहविशिष्टम्' अप्रामाण्य'प्रामाण्यव्यतिरेक'ज्ञानं वर्तते तत्रापि प्रवृत्तिर्न भवति। यत्रार्थनिश्चयधर्मिकाऽप्रामाण्यज्ञानं ततोऽर्थनिश्चयस्तत्र प्रवृत्तिर्भवति । यत्र अर्थनिश्चयः प्रामाण्यनिश्चयश्च तत्र यत्र केवलम् अर्थनिश्चयः तत्रापि प्रवृत्तिर्भवति । सर्वत्रैवाऽर्थनिश्चयविरहविशिष्टस्य प्रामाण्यव्यतिरेकज्ञानस्य योऽभावस्तत्सत्त्वासत्त्वाभ्यामन्वयव्यतिरेकसम्भवः । एवं यत्रादौ व्याप्तिनिश्चयः ततो व्याप्तिव्यतिरेकज्ञानं ततो नानुमितिः, एवं यत्र केवलं 'व्याप्तिनिश्चयविरहविशिष्टं' व्याप्तिव्यतिरेकज्ञानं तत्राप्यनुमितिर्न भवति । यत्र च व्याप्तिनिश्चयः व्याप्तिव्यतिरेकज्ञानाभावश्च वर्तते तत्र, यत्र केवलं व्याप्तिनिश्चयः तत्रापि अनुमितिर्भवति, तथा च व्याप्तिनिश्चयविरहविशिष्टव्याप्तिव्यतिरेकज्ञानस्याभावोऽनुमित्यव्यवहितपूर्ववर्तीति न दृष्टान्तासिद्धिः । एवं च प्रवृत्तिः स्वविषयीभूतार्थनिश्चयधर्मिकप्रामाण्यनिश्चयजन्या अर्थनिश्चयविरहविशिष्टं यदप्रामाण्यज्ञानं तदभावजन्यत्वात्, यत्कार्यं यन्निश्चयविरहविशिष्टयद्व्यतिरेकस्याभावजन्यं तत्कार्यं तन्निश्चयजन्यमित्यनुमानप्रयोगो बोध्यः ।

अप्रयोजकत्वात् = यत्तदर्थयोरननुगमाच्चेति भावः ।

---

गमनाविरहात्तस्य कारणत्वमप्यनपवादमिति कारणीभूताभावप्रतियोगित्वघटितहेतुरपि अविकल इति प्रयोजकताघटितसाधनानुसरणशङ्कायां असङ्गतिरिति दूषणमनवकाशम् ।

अप्रयोजकत्वादिति । प्रामाण्यव्यतिरेकज्ञानाभावस्याऽर्थनिश्चयनिष्ठकारणतावच्छेदकतया अर्थसंशयकारणाभावतयाऽर्थनिश्चयसम्पादकत्वेन वा प्रवृत्तावपेक्षणीयत्वेन तत एवातिप्रसङ्गभङ्गे प्रामाण्यनिश्चयस्य प्रवृत्तिहेतुत्वास्वीकारेऽनिष्टप्रसङ्गरूपविपक्षबाधकाभावादित्यर्थः । अप्रयोजकत्वं च कारणीभूताभावप्रतियोगित्वरूपप्रतिबन्धकताया

---

एतेन यन्निश्चयविरहविशिष्टयद्व्यतिरेकज्ञानस्याभावो यन्नियतपूर्ववर्तीति निवेशेन । अगृहीताप्रामाण्यकार्थनिश्चयस्य कारणत्वाकल्पनेनेति यावत् । अप्रामाण्यग्रहाभावस्य अप्रामाण्यज्ञानानास्कन्दित्वस्य । कारणतेति । अर्थनिश्चयनिष्ठेत्यादिः । विशेष्यविशेषणभावे अप्रामाण्यज्ञानाभाव-अर्थनिश्चययोर्विशेष्यविशेषणभावे, तस्य अप्रामाण्यज्ञानाभावस्य, प्रामाण्यव्यतिरेकज्ञानाभावस्य, अनपवादं प्राप्तम् । हेतुरपीति । प्रामाण्यव्यतिरेकज्ञानप्रतिबन्धकत्वरूपहेतुरपीत्यर्थः । अपिना प्रयोजकीभूताभावप्रतियोगित्वपरिग्रहः । अविकल इति । सिद्ध इति भावः । इति अतः । प्रयोजकताघटितेति । प्रयोजकीभूताभावप्रतियोगित्वघटितेत्यर्थः । साधनानुसरणशङ्कायां इति । हेत्वनुसरणशङ्कायां इत्यर्थः । न च प्रयोजकीभूताभावेत्यादिनेति शेषः । असङ्गतिरिति । कारणीभूताभावप्रतियोगित्वरूपप्रतिबन्धकत्वस्यैव समावेशादिति भावः । अनवकाशमिति । अगृहीताप्रामाण्यकार्थनिश्चयस्य कारणत्वाकल्पनादिति भावः । यन्निश्चयविरहविशिष्टस्य यद्व्यतिरेकज्ञानस्याभावो यन्नियतपूर्ववर्ती तन्निश्चयस्तज्जन्य इत्यस्यैव कल्पनादिति भावः ।

प्रामाण्यसंशयस्य प्रामाण्यव्यतिरेकनिश्चयस्य प्रवृत्तिं प्रति कारणीभूताभावप्रतियोगित्वरूपं प्रतिबन्धकत्वं न सम्भवति । अर्थनिश्चयेन तदभावस्याऽन्यथासिद्धत्वादित्युपपाद्य प्रयोजकीभूताभावप्रतियोगित्वरूपं प्रतिबन्धकत्वमपि निराकरोति दीधितौ— अप्रयोजकत्वादिति । प्रामाण्यव्यतिरेकज्ञानप्रतिबध्यत्वमस्तु प्रामाण्यनिश्चयजन्यत्वं मास्तु इति व्यभिचारशङ्कानिराकरणानुकूलतर्काभावादित्यर्थः । प्रवृत्तिर्यदि प्रामाण्यनिश्चयजन्या न स्यात् तदा प्रामाण्यव्यतिरेकज्ञानप्रतिबध्या न स्यादित्यनुकूलतर्के इष्टापत्तिः, कारणीभूताभावप्रतियोगित्वस्यान्मविधस्य वा प्रतिबन्धकत्वस्य प्रामाण्यव्यतिरेकज्ञानेऽसत्त्वादिति भावः । तदेवाह—प्रामाण्यव्यतिरेकज्ञानाभावस्येति । अप्रामाण्यज्ञानानास्कन्दितार्थनिश्चयस्य कारणतयेत्यादिः । अर्थनिश्चयनिष्ठकारणतावच्छेदकतयेति । ननु विनिगमकाभावादर्थनिश्चयविशिष्टप्रामाण्यव्यतिरेकज्ञानाभावस्यैव हेतुत्वमस्तु अत आह—अर्थसंशयकारणाभावतयेति । अर्थसंशयस्य कारणं प्रामाण्यसंशयस्तदभावतयेत्यर्थः । अर्थसंशयसामग्र्यभावतयेति यावत् । अर्थनिश्चयसम्पादकत्वेन वेति । प्रामाण्यव्यतिरेकज्ञानाभावस्येति पूर्वेणान्वयः । तत एवेति । अर्थनिश्चयसम्पादकत्वादेवेत्यर्थः । अतिप्रसङ्गभङ्गे—प्रामाण्यसंशयात्प्रवृत्त्यापत्तिवारणे । अनिष्टप्रसङ्गरूपेति ।

( चि० म० ) प्रामाण्यसंशयानन्तरमिदमित्थमेवेत्यवधारणस्य निष्कम्प-प्रवृत्त्यङ्गस्य प्रामाण्यनिश्चयाधीनत्वात् ।

---

अभ्युपेत्य समाधत्ते—प्रामाण्येति । तथा च कारणत्वाभावेऽप्यवश्यमपेक्षणीयत्वमिति भावः ।

---

हेतुघटकत्वपक्षेऽपि बोध्यम् । अनुमाने दूषणान्तरमाह—यत्तदर्थयोरिति । तथा च यत्पदेन प्रामाण्योपादाने दृष्टान्तासिद्धिः, व्याप्त्युपादाने च स्वरूपासिद्धिः ।

ननु प्रामाण्याभावज्ञानाभावस्योक्तयुक्त्याऽर्थनिश्चयनिष्ठकारणतावच्छेदकत्वं, विनिगमनाविरहभयेन स्वतन्त्रकारणत्वं वाऽवश्यं स्वीकर्त्तव्यम्, तथा च प्रामाण्यनिश्चयस्यैव

---

प्रामाण्यनिश्चयाजन्यत्वरूपेत्यर्थः । विपक्षबाधकाभावादिति । विपक्षबाधकतर्काभावादित्यर्थः । यत्संशयव्यतिरेकनिश्चयौ यत्प्रयोजकीभूताभावप्रतियोगिनौ तन्निश्चयस्तद्धेतुरिति व्याप्तिरप्रयोजिकेति पर्यवसन्नम् । अत्र प्रामाण्यनिश्चयस्य प्रवृत्तिहेतुत्वासिद्धेः प्रामाण्यसंशयस्य ग्राह्यसंशयतया प्रामाण्यनिश्चयेऽप्रतिबन्धकत्वाच्च प्रयोजकत्वघटितहेतोरसिद्धिरपि द्रष्टव्येति कश्चित् । पक्षेऽपीति । प्रामाण्यव्यतिरेकज्ञानाभावस्यार्थनिश्चयेनान्यथासिद्धतयाऽकारणत्वेन प्रामाण्यव्यतिरेकज्ञाने कारणीभूताभावप्रतियोगित्वरूपप्रतिबन्धकत्वविरहादिति भावः ।

ननु निरुपधिसहचारग्रह एवाऽनुकूलस्तर्क इत्यत आह—अनुमाने इति । व्याप्तौ इत्यर्थः । यो यद्व्यतिरेकज्ञानप्रतिबध्यतावान् स तज्जन्य इति व्याप्तौ इति भावः । यत्तदर्थयोरिति । तत्रावच्छेदकसाधारणनियतपूर्ववर्त्तित्वरूपप्रयोजकत्वस्यैवोक्तत्वात्तच्चाऽत्रास्त्येवाऽप्रामाण्यज्ञानानास्कन्दितार्थनिश्चयस्यैव हेतुत्वादिति अप्रयोजकत्वदोषविरहेण सामान्यव्याप्तौ दोषान्तरमप्याह—यत्तदर्थयोरिति । अस्मद्गुरुपादाः । प्रवृत्तिः प्रामाण्यनिश्चयजन्या प्रामाण्यव्यतिरेकज्ञानप्रतिबध्यत्वादिति विशेषानुमाने अनुकूलतर्काभाव इति भावः । केचित्तु विशेषव्याप्तौ दोषमाह—अप्रयोजकत्वादिति । सामान्यव्याप्तौ दोषमाह—यत्तदर्थयोरितीत्याहुः ।

माध्यमिकस्तटस्थमतं निराकरोति मूले—प्रामाण्यसंशयानन्तरमिति । प्रमाणतत्त्वज्ञानमिष्टसाधनमिति ज्ञानं प्रमा न वेति संशयानन्तरमित्यर्थः । निष्कम्पप्रवृत्त्यङ्गस्य सफलप्रवृत्तिजनकस्य । प्रामाण्यनिश्चयाधीनत्वादिति । प्रामाण्यनिश्चयस्य स्वतः परतो वाऽसम्भवात्पूर्वपक्षसङ्गतिरिति ध्येयम् ।

प्रामाण्याभावज्ञानाभावस्य अप्रामाण्यज्ञानानास्कन्दितत्वस्येति यावत्, उक्तयुक्त्या अर्थनिश्चयकाले तद्द्वितीयक्षणे वा यत्र प्रामाण्यसंशयस्ततः प्रवृत्त्यापत्तिवारणायेत्यर्थः । विनिगमनाविरहभयेनेति । विशेष्यविशेषणभावे विनिगमनाविरहभयेनेत्यर्थः । कारणतावच्छेदकगौरवाच्चेत्यपि बोध्यम् । तथा च प्रामाण्याभावज्ञानाभावस्य कारणत्वे च । प्रामाण्यनिश्चयस्यैवेति । एवकारेण प्रामाण्याभावज्ञानाभावस्य व्यावृत्तिः । हेतुविधयैव

हेतुता युक्तेति हेतुविधयैव प्रामाण्यनिश्चयापेक्षासम्भवात्, अर्थनिश्चयसम्पादकतया तदपेक्षाभिधानं 'प्रामाण्यसंशयानन्तरमि'त्यादिना मणिकृतो न युक्तमित्यत आह— अभ्युपेत्येति। परेण व्यवस्थाप्यमानं प्रामाण्यनिश्चयस्य प्रवृत्त्यहेतुत्वमभ्युपेत्यैवेत्यर्थः। समाधत्ते = प्रामाण्यनिश्चयापेक्षां व्युत्पादयति।

अथवा प्रवृत्तौ प्रामाण्यनिश्चयानपेक्षायामपि नन्वित्याद्याक्षेपकर्त्तुरभिप्रेतया प्रमात्वस्य प्रमाणतत्त्वघटकतया तदवधारणे प्रमात्वावधारणापेक्षयैवोद्देश्यसिद्धेः, प्रवृत्तौ प्रामाण्यनिश्चयस्य परम्परयाऽपेक्षणीयत्वव्यवस्थापनमयुक्तमित्याशङ्क्याह—अभ्युपेत्येति। प्रवृत्तौ प्रामाण्यनिश्चयापेक्षयैव तदसम्भवेन शास्त्रस्य निःश्रेयसोपयोगित्वानिर्वाह इत्येव

---

हेतुत्वेनैव। अर्थनिश्चयसम्पादकताव्यवच्छेदकः एवकारः। तदपेक्षाभिधानं प्रामाण्यनिश्चयापेक्षाभिधानम्। व्युत्पादयतीति। यद्यपि न्यायसिद्धान्ते प्रामाण्यनिश्चयः कारणमेव तथापि अर्थनिश्चयेन प्रामाण्यनिश्चयस्यान्यथासिद्धत्वं स्वीकर्तुं मतमभ्युपेत्यैव 'अकारणत्वेऽपि' अपेक्षणीयत्वं दर्शयतीत्यर्थः। दीधितौ—तथा च तादृशावधारणस्य निश्चयाधीनत्वे च। कारणत्वाभावे प्रामाण्यनिश्चयस्येत्यादिः। अवश्यापेक्षणीयत्वमिति। प्रवृत्तौ इत्यादिः।

तत्कारणत्वासिद्धौ प्रामाण्यनिश्चयस्य कारणत्वासिद्धौ। नोद्देश्यसिद्धिः न शास्त्रस्य निःश्रेयसानुपयोगित्वसिद्धिः। तथा च अर्थनिश्चये प्रामाण्यनिश्चयस्यापेक्षितत्वे च। कारणसम्पादकतया अर्थनिश्चयसम्पादकतया। तादृशापेक्षायामपि प्रामाण्यनिश्चयापेक्षायामपि। तदसम्भवे प्रामाण्यनिश्चयासम्भवे। आक्षेपसङ्गतेरिति। तथा च प्रामाण्यनिश्चयद्वारविरहेण कथं शास्त्रस्य निःश्रेयसरूपफलसम्बन्धित्वमिति मूलाक्षेपोऽर्थः।

'ननु प्रमाणादीनां तत्त्वं प्रतिपादयच्छास्त्रं निःश्रेयसेन सम्बध्यते इति न युक्तमि'त्यादिना माध्यमिकाक्षेपमन्यथा बुद्ध्वा प्रमाणतत्त्वज्ञानमिष्टसाधनमिति ज्ञाने प्रामाण्यनिश्चयद्वारा शास्त्रं निःश्रेयसोपयोगीत्याशयं बुद्ध्वा कृतायाः अथ किं प्रामाण्यज्ञानेनेति शङ्कायाः स्वाभिप्रायप्रकटनेनैव निरसितुं शक्यत्वात्, तत्प्रकटनमेव किमिति न कृतमित्याशङ्क्याह—अथवेति। नन्वित्याद्याक्षेपकर्त्तुः माध्यमिकस्य। प्रमात्वावधारणापेक्षयैवेति। एवकारेण प्रामाण्यनिश्चयापेक्षाया व्यवच्छेदः। तदवधारणे प्रमाणतत्त्वावधारणे। प्रमातत्त्वावधारणापेक्षयैवेति। उद्देश्यसिद्धेः। स्वतः परतो वा न सम्भवः इत्युद्देश्यम्। शास्त्रस्य न निःश्रेयसोपयोगित्वमिति च। एवकारव्यवच्छेद्यमाह— प्रवृत्तौ इति। अयुक्तमिति। प्रमाणतत्त्वावधारणस्यैव प्रमातत्त्वावधारणापेक्षया उद्देश्यसिद्धिरिति भावः। प्रामाण्यनिश्चयापेक्षयैवेति। एवकारेण प्रमात्वावधारणापेक्षाव्यवच्छेदः। तदसम्भवेन प्रामाण्यनिश्चयासम्भवेन। स्वीकृत्यैवेति। तथा च मदभिप्रायमबुद्ध्वा त्वया अथ किमित्याशङ्कनेऽपि मदभिप्रायाप्रकाशनेऽपि न क्षतिः। त्वदभिप्रेतस्य प्रकृतावपेक्षणीयस्य प्रमात्वनिश्चयस्य स्वतः परतो वाऽसम्भवादेवमप्याक्षेपसङ्गतेरिति।

स्वाभिप्रेतमिति स्वीकृत्यैवेत्यर्थः। इदमित्थमेवेत्यर्थनिश्चये प्रामाण्यनिश्चयापेक्षायामपि प्रवृत्तौ तत्कारणत्वासिद्धौ नोद्देश्यसिद्धिरित्याशङ्कां निराकुरुते—तथा चेति। अवश्यापेक्षणीयत्वं कारणसम्पादकतया। तादृशापेक्षायामपि तदसम्भवे शास्त्रश्रवणे प्रवृत्त्यनुत्पत्त्या शास्त्रस्य निष्फलत्वेनाऽऽक्षेपसङ्गतेरिति भावः।

ज्ञानसामग्रीतः प्रमात्वप्रयोजिका सामग्रीभिन्ना। एवं ज्ञानग्राहकसामग्री न प्रमात्वग्राहिका। ज्ञानसामग्री च इन्द्रियपरामर्शादिकम्। यदि तन्मात्रप्रयोज्यं प्रमात्वं स्यात्तदा सकलज्ञानानां प्रमात्वं स्यात्, इष्टापत्तौ अप्रमात्मकज्ञानानां किं लोपः स्यात्। अतो ज्ञानोत्पादकसामग्रीतोऽतिरिक्तापि सामग्री प्रमात्वप्रयोजिका वाच्या। इदमेव प्रमात्वसम्बन्धे 'प्रमात्वोत्पत्तौ' परतस्त्वम्। तथा च ज्ञानोत्पादकसामग्र्यतिरिक्तसामग्रीप्रयोज्यत्वं परतस्त्वम्। एवं च यत्र ज्ञानोत्पादकसामग्र्यतिरिक्तसामग्री तत्र ज्ञाने प्रमात्वम्। यत्र तदतिरिक्ता सामग्री नास्ति तत्र ज्ञाने न प्रमात्वसम्बन्धः। अतो भ्रमात्मकज्ञानानां न विलोपः। सा च सामग्री गुणः। प्रमां प्रति गुणस्य कारणत्वम्। दोषोऽप्रमाया जनकः प्रमायास्तु गुणो भवेदित्युक्तत्वात्। गुणास्तु—

'प्रत्यक्षे तु विशेष्येण विशेषणवता समम्।
सन्निकर्षो गुणस्तु स्यात् अथ त्वनुमितौ गुणः॥
पक्षे साध्यविशिष्टे तु परामर्शो गुणो भवेत्।
शक्ये सादृश्यबुद्धिस्तु भवेदुपमितौ गुणः॥
शाब्दबोधे योग्यतायास्तात्पर्यस्याथवा प्रमा।
गुणः स्यादित्युक्तम्··· ··· ··· ··· ··· ···'॥

प्रमात्ववदप्रमात्वसम्बन्धः 'अप्रमात्वोत्पत्तिरपि' परतः। भ्रमस्य दोषजन्यत्वात्। दोषोऽप्रमाया जनक इत्युक्तेः। दोषास्त्वनन्ताः—'पित्तदूरत्वादिरूपो दोषो नानाविधो मतः' इत्युक्तत्वात्।

एवमेव ज्ञानविषयकज्ञानसामग्रीतो न प्रमात्वज्ञानम्। किन्तु ज्ञानस्य यया सामग्र्या ज्ञानं भवति तदन्यसामग्र्या एव प्रमात्वज्ञानं भवति। यथा प्रत्यक्षप्रमाणेन घटज्ञानं भवति एवं मनःसंयुक्तसमवायेन घटज्ञानस्य ज्ञानं जायते, इन्द्रियेन चक्षुरादिना अयं घट इति ज्ञानं जायते, मनसा घटज्ञानस्य ज्ञानं 'घटमहं जानामी'ति ज्ञानं भवति, इदं च ज्ञानं व्यवसायविषयविषयकम्, अत एवानुव्यवसाय इत्युच्यते। तथा च व्यवसायविषयीभूतघटादिरपि अनुव्यवसायस्य विषयः, एवमात्मा, व्यवसायश्च तथा। अत एवानुव्यवसायः त्रिपुटीगोचर इत्युच्यते। अनुव्यवसाये करणं मनः घटज्ञानेन मनसः स्वसंयुक्तसमवायः सम्बन्धः। स्वसंयुक्तात्मसमवेतसमवायेन ज्ञानत्वस्य संयोगेनात्मनः, स्वसंयुक्तसमवायेनात्मत्वस्य भानं भवति। घटेन सह मनसोऽलौकिकसम्बन्धोऽस्ति, स च सम्बन्धो ज्ञानलक्षणो व्यवसायात्मकः स्वसंयुक्तात्मसमवेतज्ञानविषयतात्मकः। प्रमात्वज्ञानं तु अनुमित्यात्मकं यथा जलज्ञानं प्रमा सफलप्रवृत्तिजनकत्वाद्यन्नैवं तन्नैवं यथाऽप्रमेति। अत्र जलज्ञानग्राहकसामग्री 'जलमहं जानामी'त्यनुव्य-

( चि० म० ) ननु स्वत एवास्तु तन्निरूपणम् ।

---

स्वतः—स्वस्मात्, स्वकीयात् ।

---

ननु स्वत एवेति मीमांसकत्रयस्यैव प्रत्यवस्थानं, न तु गुरोरेव मिश्रभट्टयोरेव वा, मतत्रयसाधारणविप्रतिपत्तेरग्रे दर्शनीयत्वात्, 'अनुव्यवसायेनाऽनुमित्या स्वप्रकाशेन वा

---

वसायसामग्री, प्रमात्वग्राहकसामग्री तु अनुमानं 'परामर्शादिकम्', तच्चानुव्यवसाय-सामग्रीतो भिन्नतया परम्, अतः प्रमात्वग्रहः परतोऽनुव्यवसायसामग्रीभिन्नसामग्रीतो भवति । तथा च स्वाश्रयज्ञानग्राहकसामग्रीग्राह्यत्वं स्वतोग्राह्यत्वं स्वतो ग्राह्यत्वम् । यथा ज्ञानत्वघटत्वादिषु । तादृशसामग्रीभिन्नसामग्रीग्राह्यत्वं परतो ग्राह्यत्वं यथा प्रमात्वे ।

यद्यपि न्यायमतेऽपि साध्यवत्पक्षोऽपि अनुमितिविषयः, पक्षश्चात्र जलज्ञानं, अतोऽनुमानमपि ज्ञानग्राहकसामग्रीजातम्, एवं च प्रमात्वस्य स्वतोग्राह्यत्वं दुर्वारं, ज्ञान-ग्राहकसामग्री ग्राह्यत्वात् । तथापि ज्ञानग्राहक-यावत्सामग्री ग्राह्यत्वं तत् । ज्ञानज्ञानस्य यत उत्पत्तिः सैव ज्ञानग्राहकसामग्री अनुव्यवसाय( ज्ञानज्ञान )स्य सामग्री मनः-सामग्री मनःसंयोगाऽलौकिकसम्बन्धादिकं, तादृशसामग्रीतः प्रमात्वस्याऽग्रहाद् ज्ञान-ग्राहकयावत्सामग्रीग्राह्यत्वाभावात्परतोग्राह्यत्वं प्रमात्वस्य । ज्ञानग्राहकसामग्रीसमु-दायात्प्रमात्वग्रह एव स्वतः प्रामाण्यग्रहः, परन्तु मतेऽस्मिन् ज्ञानत्ववत्प्रमात्वविशिष्ट-स्यैव ज्ञानस्य ज्ञानं भवति, न तु केवलं ज्ञानत्वविशिष्टस्य । परतः प्रामाण्यग्रहवादिमते तादृशसामग्रीतः केवलं ज्ञानत्वविशिष्टज्ञानस्य ज्ञानं भवति, न तु प्रमात्वस्यापि, किन्तू-क्तानुमानादेव प्रमात्वग्रहो भवतीति तत्त्वम् ।

एतावता प्रबन्धेन प्रवृत्तौ प्रामाण्यनिश्चयस्याऽपेक्षिततया तस्य स्वतः परतो वा-ऽसम्भवात्प्रामाण्यनिश्चयानुपपत्तिस्तदवस्थैवेति माध्यमिकमतं दर्शितम् । इदानीं माध्य-मिकमतं मीमांसकद्वारा निराकर्त्तुं मीमांसकमतमुत्थापयति मूले—नन्विति । तन्निरूपणं प्रमात्वनिरूपणम्, प्रमात्वविषयकज्ञानानुकूलो व्यापारः । इदं ज्ञानं प्रमा इति शब्द-प्रयोगरूपः । प्रमात्वव्यवहार इत्यर्थः । स्वत एवास्तु इति । प्रामाण्याश्रयपरमत्र स्वशब्दः । तथा च प्रामाण्याश्रयव्यवसायादेवास्तु इत्यर्थः । स्वतस्त्वं च 'प्रामाण्याश्रय'-व्यवसायोत्पादकसामग्रीप्रयोज्यत्वम् । एवकारेण स्वतोऽसम्भवस्य व्यवच्छेदः । तथा चात्राऽयोगव्यवच्छेद एवकारार्थः । प्रमात्वव्यवहारे प्रमात्वाश्रयव्यवसायनिष्ठप्रयोजक-तानिरूपितप्रयोज्यत्वस्याऽयोगव्यावृत्तिरिति भावः । तथा च प्रमात्वाश्रय'व्यवसाय'-निष्ठप्रयोजकतानिरूपितप्रयोज्यता, 'भावाभाववान्' प्रामाण्यव्यवहार इति बोधः ।

नन्विति । मीमांसकत्रयस्यैव गुरुमिश्रभट्टानामेव, प्रत्यवस्थानं मतप्रदर्शनमिति यावत् । एवकारव्यवच्छेद्यमाह—न तु गुरोरेवेति । प्रत्यवस्थानमित्यनुवर्त्तते । एवं मिश्रभट्टयोरेव वेत्यत्रापि बोध्यम् । मतत्रयसाधारणेति । गुरुमिश्रभट्टमतसाधारणेत्यर्थः । विप्रतिपत्तेः । 'स्वतोग्राह्यत्व'संशयजनकवाक्यस्य । मतत्रयसाधारणेत्यस्य विप्रति-

गृह्यते' इत्यादिना मतत्रयसाधारणस्वतस्त्वस्य व्यवस्थापनीयत्वाच्च । एवं च स्वपदस्य प्रामाण्याश्रयमात्रपरत्वे तदीयमात्रपरत्वे वा न मतत्रयसाधारण्यम् । अतस्तदुभयपरतया व्याचष्टे—स्वत इति । स्वस्मादिति । प्रामाण्याश्रयव्यवसायादित्यर्थः । तन्निरूपणमिति मूलस्य च प्रामाण्यव्यवहार इत्यर्थः । तावता च व्यवसायस्यैव स्वप्रामाण्यविषयकत्वलाभः । तावतैव व्यवहर्तव्यज्ञानविषया प्रामाण्यव्यवहारहेतुतायाः स्वस्य निर्वाहात् ।

पत्तिघटकसंशयेऽन्वयः । अग्रे—तथाहीत्यादिना । दर्शनीयत्वादिति । विशेष्ये तद्धर्मवत्त्वं च व्यवसायस्य अनुव्यवसायेन अनुमित्या स्वप्रकाशेन वा गृह्यते इत्यादिना मूले वक्ष्यमाणत्वादित्यर्थः । अस्यार्थः—विशेष्ये ज्ञानप्रामाण्ये, तद्धर्मवत्त्वं च ज्ञानग्राहकसामग्रीग्राह्यत्वं च, 'ज्ञानस्य' व्यवसायस्य, यो ग्रहः अनुव्यवसायः ज्ञाततालिङ्गकानुमितिश्च तज्जनिका या सामग्री तज्जन्यग्रहविषयत्वमिति । मतत्रयसाधारणस्वत्वस्य गुरुमिश्रभट्टमतत्रयसाधारणस्वतोग्राह्यत्वस्य, एवं च मीमांसकत्रयस्यैव प्रत्यवस्थाने च। स्वपदस्येति । स्वपदस्य अर्थाश्चत्वारः—जातिः, धनम्, आत्मा आत्मीयश्च । प्रकृते आत्मा आत्मीयश्चेत्यर्थद्वयम् । अत्र च स्वपदमात्मपरम् । आत्मा च प्रामाण्याश्रय एव । तदेवाह—प्रामाण्याश्रयमात्रपरत्वे इति । व्यवसायमात्रपरत्वे इत्यर्थः । मात्रपदेनाऽनुव्यवसाय-ज्ञाततालिङ्गकानुमित्योर्व्यवच्छेदः, तयोः प्रामाण्याश्रयत्वाभावाद् । तदीयमात्रपरत्वे चेति । प्रामाण्याश्रयव्यवसायप्रयोज्यमात्रपरत्वे इत्यर्थः । व्यवसायप्रयोज्योऽनुव्यवसायः ज्ञाततालिङ्गकानुमितिश्चेति भावः । मात्रपदेन व्यवसायस्य व्यवच्छेदः । न मतत्रयसाधारण्यमिति । आदौ मिश्रभट्टमतस्य द्वितीये च गुरुमतस्याऽसङ्ग्रह इति भावः । अतः मतत्रयसाधारण्याय । तदुभयपरतया स्वपरतया स्वकीयपरतया च, स्वपदमिति शेषः । स्वत इति मूले । स्वपदमात्रपरं प्रकृते चात्मा प्रामाण्याश्रय एव ।

तथा च स्वपदे प्रामाण्याश्रयपरम् । पञ्चम्यर्थो जन्यत्वम् । तस्य प्रामाण्यव्यवहारेऽन्वयः । व्यवहारः शब्दप्रयोगः, स च प्रकृते घटज्ञानं प्रमा इत्याकारकः । व्यवहारं प्रति व्यवहर्तव्यज्ञानं कारणम् । व्यवहर्त्तव्यं प्रमात्वम् । तद्विषयकज्ञानं च गुरुमते प्रमात्वाश्रयव्यवसाय एव, स एव स्वपदार्थः । पञ्चम्यर्थजन्यत्वस्य व्यवहारेऽन्वयात्प्रमात्वाश्रय'व्यवसायजन्यः प्रामाण्यव्यवहारः' इति बोधः । तथा च गुरुमते प्रमात्वाश्रयव्यवसायजन्यः प्रमात्वव्यवहार इति बोधः । यद्वा पञ्चम्यर्थोऽभेदः निरूपणं चाऽवगाहनं प्रमेति यावत् । तथा च प्रामाण्याश्रय'व्यवसाय' एव स्वनिष्ठप्रामाण्यविषयकनिश्चय इत्यर्थः । तावता चेति । निरूपणपदस्य प्रामाण्यव्यवहारपरतया चेत्यर्थः । व्यवसायस्यैवेति । एवकारेणोऽनुव्यवसायज्ञाततालिङ्गकानुमित्योर्व्यवच्छेदः । तावतैव व्यवसायस्यैव प्रामाण्यविषयकत्वात्, स्वस्य व्यवसायस्य । निर्वाहादिति । व्यवसायस्य प्रामाण्याऽविषयकत्वे प्रामाण्यव्यवहारहेतुता न निर्वहेत्, तस्य व्यवहर्तव्यः 'प्रमात्व'-विषयकत्वामात्रादिति भावः । एतच्च व्यवसायस्य विषयकत्वं च । गुरुमतानुसारेणेति । मिश्रभट्टमते प्रामाण्यविषयकत्वमनुव्यवसायज्ञाततालिङ्गकानुमित्योरित्यग्रे व्यक्तीभविष्यति ।

स्वप्रकाशतया तेनैव तत्प्रामाण्यं गृह्यते इति गुरवः।

---

एतच्च गुरुमतानुसारेण। मिश्रभट्टयोरनुसारेणाह–स्वकीयादिति। स्वप्रयोज्यादित्यर्थः। मिश्रमते व्यवसायप्रयोज्योऽनुव्यवसाय एव तत्प्रयोज्यतया विवक्षितः। भट्टमते च व्यवसायजन्यज्ञाततारूपहेतुजन्यानुमितिरेवेति मतद्वयोपसङ्ग्रहः।

केचित्तु तन्निरूपणं=प्रामाण्यग्रहः। स्वस्मात्=व्यवसायात्। व्यवसायप्रयोज्य इति यावत्। स च मिश्रमतेऽनुव्यवसायरूपः, भट्टमते ज्ञाततालिङ्गकानुमितिरूपः। गुरुमतानुसारेणाह—स्वकीयादिति। स्वोत्पत्तिप्रयोजककारणसमुदायादित्यर्थः। एतावता स्वसामग्रीजन्यत्वेन स्वस्यैव स्वप्रामाण्यग्रहरूपता लभ्यते इति व्याचक्रुः। तच्चिन्त्यम्। तथा सति तत्र 'स्वप्रकाशतया' इत्यादिना प्रथमतो गुरुमतविवरणस्याऽयुक्ततापातात्।

स्वप्रकाशतया व्यवसायस्य स्वविषयकतया। तेनैव तत्प्रामाण्यं गृह्यते इति। तस्यैव

---

स्वकीयादिति। तथा च मिश्रभट्टमते स्वपदमात्मीयपरमिति भावः। स्वप्रयोज्यादिति। स्वं प्रमात्वाश्रयो व्यवसायः। ज्ञाततारूपहेतुजन्यानुमितिरेवेति। तत्प्रयोज्यतया विवक्षितेति लिङ्गव्यत्यासेनान्वयः। मतद्वयोपसङ्ग्रह इति। तथा च मतद्वयेऽपि प्रमात्वाश्रयव्यवसायजन्योऽनुव्यवसायः अनुमितिर्वा तज्जन्यः प्रामाण्यव्यवहार इति बोधः।

स्वस्मादिति मिश्रभट्टमतानुसारेण स्वकीयादिति गुरुमतानुसारेणोक्तमिति केषाञ्चिन्मतमुपन्यस्यति—केचित्त्विति। निरूपणपदार्थोऽवगाहनम्, प्रामाण्यनिश्चय इति यावत्। अत एवोक्तं प्रामाण्यग्रह इति। प्रामाण्यविषयकग्रह इत्यर्थः। स्वस्मादिति। स्वपदं 'प्रामाण्याश्रय'व्यवसायपरम्। प्रयोज्यत्वं पञ्चम्यर्थः। तथा च व्यवसायप्रयोज्यः प्रामाण्यग्रह इति बोधः। स च प्रामाण्यग्रहश्च, गुरुमते व्यवसायरूप एवेत्यत उक्तं मिश्रमते इति स्वकीयादित्यस्य स्वप्रयोज्यत्वं नार्थः। गुरुमतसङ्ग्रहानुपपत्तेः। अतस्तदर्थमाह—स्वोत्पत्तिप्रयोजकेति। स्वं प्रमात्वाश्रयव्यवसायः, तज्जनको यः कारणसमुदायः तज्जन्य इत्यर्थः। इत्थं च तादृशसमुदायजन्यः प्रामाण्यग्रह इति बोधः। स्वोत्पत्तिप्रयोजककारणसमुदायजन्यग्रहश्च व्यवसाय एवेत्याह—एतावतेति। स्वसामग्रीजन्यत्वेन स्वोत्पत्तिप्रयोजकसामग्रीजन्यत्वेन। स्वं व्यवसायः, स्वस्यैव व्यवसायस्यैव। स्वप्रामाण्यग्रहरूपतेति। 'स्वपदग्राह्य'व्यवसायनिष्ठप्रामाण्यविषयकग्रहरूपतेत्यर्थः। लभ्यते इति। तथा च स्वकीयादिति गुरुमतानुसारेणैवोक्तमिति भावः। तच्चिन्त्यमित्यनेन सूचितमस्वरसं स्वयमाह—तथा सतीति। स्वस्मादित्यस्य मिश्रभट्टमतानुसारेण स्वकीयादित्यस्य च गुरुमतानुसारेण व्याख्याने सतीत्यर्थः। अयुक्ततापातादिति। इदानीं मिश्रभट्टमतयोरेव प्राथम्यादिति भावः।

दीधितौ—तत्र मतत्रये, स्वविषयकतया—स्वं व्यवसायः, स्वविषयकत्वमेव ज्ञानस्य स्वप्रकाशत्वम्। गुरुमते ज्ञानमात्रस्य मितिमातृमेया एतास्त्रितयविषयकत्वम्। तन्मते चक्षुःसंयोगाद्यनन्तरं घटमहं जानामीति प्रत्यक्षस्यैवोत्पत्तेः। तेनैव तत्प्रामाण्यं गृह्यते इति। तेनैव व्यवसायेनैव, तत्प्रामाण्यं व्यवसायनिष्ठप्रामाण्यं, न तु अनुव्यवसायेनाऽनुमित्या वा इति भावः। गृह्यते विषयीक्रियते। तथा च व्यवसायस्य स्वप्रकाशतया

  

**प्राथमिकज्ञानग्रहत्वात्सर्वेषामेव मीमांसकानां प्राथमिकज्ञानग्राह्यतायाः स्वतो ग्राह्यतारूपत्वादिति भावः ।**

तेनैव तद्गतप्रामाण्यस्य ग्रहात् सिद्धं स्वतोग्राह्यत्वं प्रमात्वस्य । न च ज्ञानस्य स्वप्रकाशत्वे मानाभावः । ज्ञानस्य तद्गतप्रामाण्यस्य वा ज्ञानान्तरग्राह्यत्वे तादृशज्ञानान्तरस्य तद्गतप्रामाण्यस्य वा ग्रहार्थं ज्ञानान्तरापेक्षायामनवस्था स्यादतः स्वप्रकाशरूपताया आवश्यकत्वात् ।

**इदमत्रावधेयम्**—घटादिज्ञानाद् घटादेः प्रकाशो भवति, अनुव्यवसायाच्च घटादेर्विषयस्य, व्यवसायस्य आत्मनश्च प्रकाशो भवति । परन्तु त्रिपुटीप्रकाशेऽपि स्वस्य अनुव्यवसायस्य प्रकाशो न भवति, अनुव्यवसायगोचरानुव्यवसायेन प्रकाशो भवति, स च घटज्ञानमहं जानामीत्याकारकः । परन्तु द्वितीयानुव्यवसायोऽप्रकाशित एव । तस्य च प्रकाशस्तृतीयानुव्यवसायेन । स च घटज्ञानस्य ज्ञानमहं जानामीत्याकारकः ।

परन्तु न्यायनये घटादिव्यवहारे घटादिज्ञानस्य प्रकाशोऽपेक्षणीयः । एवं घटादिज्ञानव्यवहारेऽनुव्यवसायोऽपेक्षणीयः । न तु अनुव्यवसायप्रकाशोऽपेक्षणीयः । तत्सिद्धं यस्य व्यवहार इष्टः तस्यैव ज्ञानमपेक्षणीयम् । विषयस्य प्रकाशकं यद् ज्ञानं तदप्रकाशितं प्रकाशितं वा भवतु । यदि प्रकाशितज्ञानमेव प्रकाशकं स्यात्तदाऽनवस्था स्यात् । तथाहि—न्यायनये प्रकाशकं ज्ञानान्तरं तस्यापि प्रकाशकं ज्ञानान्तरमिति तस्य तस्येत्यनवस्था स्यात्, अतो विषयप्रकाशे ज्ञानप्रकाशो नापेक्षणीयः । किन्तु स्वव्यवहारे—यथा घटादिव्यवहारे घटादिप्रकाशार्थं घटज्ञानमपेक्षणीयम् । अप्रकाशितज्ञानादेव घटादिव्यवहारो भवति । यथा घटज्ञानविरहेऽपि जलाऽऽहरणादिकार्यं घटः करोति । तत्सिद्धं स्वकार्ये स्वप्रकाशं नापेक्षते किन्तु स्वव्यवहारे एवेति नानवस्था । तथा च न्यायनये कस्यापि ज्ञानस्य स्वप्रकाशरूपता नास्तीति ध्येयम् । प्रकृतमनुसरामः—**तस्यैव व्यवसायस्यैव**, गुरुमते इति शेषः । एवकारेणानुव्यवसायानुमित्योर्व्यवच्छेदः । **प्राथमिकेति** । इदं च ज्ञानग्रहे विशेषणम् । तथा च प्राथमिको यो ज्ञानग्रहः 'स्वात्मको ग्रहः' तद्रूपत्वादित्यर्थः । स्वस्यैव स्वविषयकग्रहरूपत्वादिति भावः । **सर्वेषामेव मीमांसकानामिति** । गुरुमिश्रभट्टानामित्यर्थः । **प्राथमिकज्ञानग्राह्यताया इति** । प्राथमिको यो ज्ञानग्रहः गुरुमते व्यवसायः, मिश्रमते अनुव्यवसायः, भट्टमते ज्ञाततालिङ्गकानुमितिः, तद्विषयताया इत्यर्थः । ज्ञानग्राहकसामग्रीजन्यग्रहविषयताया इति यावत् । **स्वतोग्राह्यतारूपत्वादिति** । प्राथमिकज्ञानग्रहे मतभेदेऽपि ज्ञानग्राहकसामग्रीजन्यग्रहविषयतायाः स्वतोग्राह्यतारूपत्वे मतैक्यादिति भावः ।

शुक्तौ रजतावगाहि इदं रजतमिति भ्रमस्थले ज्ञानद्वयम् । इदमिति प्रत्यक्षम् । रजतमिति स्मरणम् । तयोश्च द्वयोर्यथार्थत्वात् भ्रमात्मकज्ञानमेव नास्ति । सामान्यतः पुरोवर्तिपदार्थप्रत्यक्षस्य रजतस्मृतेश्च भेदज्ञानं 'रजतार्थिनः' प्रवृत्तौ प्रतिबन्धकम्, तयोर्भेदज्ञानाभावः प्रतिबन्धकाभावविधया तत्र कारणम् । एवं प्रत्यक्षविषयस्य स्मृतिविषयस्य च भेदाभावज्ञानं तत्र कारणम् । सत्यरजतस्थले तु विशिष्ट'रजतत्वविशिष्ट'-

तदनुव्यवसायेनेति मिश्राः ।

तदनुव्यवसायेनेति । तद्विषयकलौकिकमानसेनेत्यर्थः । तत्प्रामाण्यं गृह्यते इत्यनुषज्यते । एवमग्रेऽप्यनुषङ्गो बोध्यः । उपनीतप्रामाण्यस्य न्यायमतेऽपि ज्ञानमानसे भानाल्लौ-

ज्ञानं कारणं प्रवृत्तौ । न तु भेदग्रहाभावः, सत्यरजतस्थले रजतभेदग्रहाऽप्रसिद्धचा तदभावाप्रसिद्धेः । तन्मते अन्यथाख्यात्यनङ्गीकारात् । असंसर्गाग्रहः कारणमित्यपि केचित् । तथा च शुक्तिरजतस्थले भेदाग्रहः असंसर्गाग्रहो वा प्रवृत्तौ कारणम् । सत्यरजतस्थले विशिष्टज्ञानं कारणमिति गुरुमतम्, तन्मते ज्ञानमात्रस्य यथार्थत्वादप्रमात्मकं ज्ञानमेव नास्ति इति या सामग्रीज्ञानं जनयिष्यति सैव सामग्री तादृशज्ञानधर्मिकप्रामाण्यज्ञानमपि जनयिष्यति इत्युत्सर्गः ।

तथा च गुरुमते स्वस्यैव ( व्यवसायस्यैव ) स्वनिष्ठप्रामाण्यविषयकतया स्वात्मकग्रहसामग्रीजन्यग्रहविषयत्वस्य प्रमात्वे सत्त्वेन प्राथमिकज्ञानग्राह्यत्वरूपस्वग्राह्यत्वोपपत्तिः ।

मिश्रमते च चक्षुःसंयोगाद्यनन्तरं यद् घट इति ज्ञानं 'व्यवसायात्मकं' तद्विषयको घटमहं जानामीत्यनुव्यवसायात्मको ग्रहः 'लौकिकमानसप्रत्यक्षरूपः' तद्विषयत्वस्य प्रमात्वे सत्त्वेन तादृशस्वतोग्राह्यत्वोपपत्तिः ।

भट्टमते च ज्ञानमतीन्द्रियम्, 'लौकिकविषयिताशून्यम् । आत्मसमवेतवृत्तिलौकिकविषयतासम्बन्धेन प्रत्यक्षं प्रति धर्मादिवत् तादात्म्येन ज्ञानस्य प्रतिबन्धकत्वात् । तथा च न मिश्रादिमतवदनुव्यवसायेन प्रामाण्यभानम्, किन्तु ज्ञानेन विषये ज्ञाततानामकः कश्चिद्धर्मो जन्यते स च धर्मो ज्ञातो घट इति प्रतीतिसाक्षिको विषयताविशेषः प्रत्यक्षसिद्धः । तथा च ज्ञाततया ज्ञानमनुमीयते अनुमानप्रकारश्च इयं 'घटवृत्ति' ज्ञातता घटत्वप्रकारकघटविशेष्यकज्ञानजन्या घटवृत्तिज्ञाततात्वात् इति । या यद्धर्मावच्छिन्ने यद्वृत्तिज्ञातता सा तत्प्रकारकतद्विशेष्यकज्ञानजन्या पटत्वावच्छिन्नपटवृत्तिज्ञाततावत्, दृष्टान्तेऽपि दृष्टान्तान्तरेण साध्यसिद्धिरित्यग्रे व्यक्तीभविष्यति । तथा च प्राथमिको यो ज्ञानग्रहस्तादृशानुमितिः तद्विषयत्वस्य प्रमात्वे सत्त्वाद् स्वतोग्राह्यत्वोपपत्तिः ।

दीधितौ—तदनुव्यवसायेनेति । तृतीयार्थोऽभेदः । तस्यानुषञ्जनीयतत्प्रामाण्यं गृह्यते इत्यत्र ग्रहधात्वर्थे ज्ञानेऽन्वयः । तदनुव्यवसायेनेत्यत्र तत्प्रामाण्यमित्यत्र च तत्पदेन व्यवसायग्रहणम् । तथा च तदनुव्यवसायाभिन्नग्रहविषयीभूतं तन्निष्ठप्रामाण्यमित्यर्थः । स्वोत्तरवर्त्तिस्वविषयकलौकिकप्रत्यक्षविषयीभूतं स्वनिष्ठप्रामाण्यमिति यावत् । स्वं व्यवसायः, एवम् अत्रानुषङ्गे, अग्रेऽपि 'ज्ञाततालिङ्गकानुमित्या' इत्यत्रापि । अनुषङ्गो बोध्य इति । तत्प्रामाण्यं गृह्यते इत्यस्येति शेषः । लौकिकत्वनिवेशस्य प्रयोजनमाह—उपनीतप्रामाण्यस्येति । प्रमितो घट इति मानसे ज्ञाने ज्ञानलक्षणया भासमानस्य प्रामाण्यस्येत्यर्थः । न्यायमतेऽपीति । तद्वति तत्प्रकारकत्वरूपप्रामाण्ये स्वतोग्राह्यत्वानङ्गीकर्त्तृमतेऽपीत्यर्थः । ज्ञानमानसे उक्ताऽलौकिकमानसज्ञाने । भानादिति । तथा च प्राथमिको यो ज्ञानग्रहः 'प्रमाविषयीभूतो घट इत्याकारकः तद्विषयत्वरूप-स्वतोग्राह्यत्वस्य

किकत्वविशेषणम् । न च ज्ञानांशे लौकिकमानसेऽपि उपनीतप्रामाण्यभानात्तद्विशेषणेनापि न न्यायमताद्विशेष इति वाच्यम्, स्वांशे लौकिकत्वस्यापि विशेषणीयत्वात् । तच्च स्वविषयकज्ञानाजन्यत्वम् ।

स्वाश्रयग्राह्यत्वरूपगुरुमतसिद्धस्वतस्त्वेऽपि स्वविषयकज्ञानाजन्यत्वेन स्वाश्रयो विशेषणीयः । अन्यथा प्रामाण्याश्रयज्ञानेऽपि कदाचिदुपनीतप्रामाण्यभानस्य न्यायमतसिद्धतयातदविशेषापत्तेः ।

---

न्यायमतसाधारणतया तदविशेषापत्तिरिति भावः । लौकिकत्वविशेषणमिति । अत इत्यादिः । तथा च न्यायमते लौकिकमानसे प्रामाण्यस्याऽभानान्न तन्मताविशेषः । प्रमितो घट इति ज्ञानं प्रामाण्यांशेऽलौकिकं घटविषयकांशे लौकिकं, तथा च लौकिकत्वनिवेशेऽपि कथं तज्ज्ञानव्यावृत्तिरित्याशङ्कते—न चेति । ज्ञानांशे घटज्ञानांशे । उपनीतप्रामाण्यभानादिति । ज्ञानलक्षणासन्निकर्षजन्यज्ञानविषयीभूतप्रामाण्यभानादित्यर्थः । तद्विशेषणेनापि लौकिकत्वविशेषणेनापि । न न्यायमताद्विशेष इति । प्रमितो घट इति ज्ञानस्यापि घटज्ञानांशे लौकिकतया घटज्ञानविषयकलौकिकमानसविषयत्वस्य प्रमात्वे सत्त्वात् नाश्रयविषयकलौकिकमानसप्रत्यक्षविषयत्वरूपस्वतोग्राह्यत्वस्य न्यायमतसाधारण्यादिति भावः । स्वाश्रयविषयकलौकिकमानसप्रत्यक्षविषयत्वं हि मिश्रमते स्वतोग्राह्यत्वम्, स्वं प्रमात्वम्, स्वाश्रयो व्यवसायः, तद्विषयकलौकिकमानसप्रत्यक्षम् अनुव्यवसायः तद्विषयत्वं प्रमात्वेऽस्तीति । एवञ्चाऽविशेषं वारयति—स्वांशे इति । प्रमात्वांशे इत्यर्थः । तच्चेति । प्रमात्वांशे लौकिकत्वं चेत्यर्थः । स्वविषयकज्ञानाजन्यत्वमिति । स्वं प्रमात्वम् । प्रमात्वज्ञानस्य ज्ञानलक्षणासन्निकर्षप्रयोज्यतया ज्ञानलक्षणायाश्च चक्षुःसंयुक्तमनःसंयुक्तात्मसमवेतस्मृतिविषयत्वरूपाया पूर्वानुभवाधीनतया प्रमात्वाश्रयज्ञानग्रहस्य प्रमात्वज्ञानाजन्यत्वविरहाद्वारणम् । लौकिकमानसे चाऽनुव्यवसायरूपे न प्रमात्वविषयकज्ञानजन्यम्, अनुव्यवसायस्यैव प्रमात्वविषयकत्वेन स्वस्य स्वजन्यत्वविरहात्सवँ समञ्जसम् ।

स्वाश्रयग्रहत्वव्यापकविषयितानिरूपकत्वोक्तौ स्वविषयकज्ञानाजन्यत्वविशेषणं व्यर्थम् । ज्ञानलक्षणासन्निकर्षप्रयोज्यप्रमात्वविषयितायां स्वाश्रयग्रहत्वव्यापकत्वविरहात्, स्वाश्रयग्रहत्वस्यानुव्यवसाये सत्त्वात् । अतो मानसपदमिति । स्वाश्रयग्रहत्वव्यापकलौकिकविषयितानिरूपकत्वलाभार्थमिति भावः । तथा च नैयायिकमतान्निशेष इति यावत् । एवं च स्वविषयकज्ञानाजन्यं यत्स्वाश्रयविषयकमानसं तद्विषयत्वं स्वतोग्राह्यत्वं पर्यवसन्नम् । स्वाश्रयविषयकं ज्ञानं स्वाश्रयभिन्नं ग्राह्यम् । अन्यथा स्वाश्रयविषयकं यत्स्वाश्रयं तदादाय गुरुमतादविशेषापत्तेः । मिश्रमते स्वाश्रयज्ञानग्राह्यत्वस्य स्वतोग्राह्यत्वरूपत्वेऽपि गुरुमते ज्ञाननिवेशे गौरवमित्याशयेनाह—स्वाश्रयग्राह्यत्वरूपेति । स्वं—प्रमात्वम् । स्वतस्त्वेऽपीति । स्वतोग्राह्यत्वपक्षेऽपीत्यर्थः । अपिना मिश्रमतसिद्धस्वतोग्राह्यत्वसमुच्चयः । अन्यथा स्वविषयकज्ञानाजन्यत्वानिवेशे । प्रामाण्याश्रयज्ञानेऽपीति । प्रमितो घट इति ज्ञानेऽपीत्यर्थः । उपनीतप्रामाण्यभानस्य ज्ञानलक्षणासन्निकर्षप्रयोज्यप्रमात्वभानस्य । तदविशेषापत्तेरिति । न्यायमतादविशेषापत्तेरित्यर्थः ।

ज्ञानस्याऽतीन्द्रियतया ज्ञाततालिङ्गकानुमित्येति भट्टाः ।

---

ज्ञानस्याऽतीन्द्रियतयेति । एतेन भट्टानां ज्ञाततालिङ्गकानुमितेर्मिश्रमतसिद्धानुव्यवसायवत्, प्राथमिकज्ञानग्रहरूपतेति सूचितम् । तेन न्यायमतेऽपि अनुमित्या प्रामाण्यं गृह्यते, परन्तु तन्मते ज्ञाततया अप्रसिद्धतया तल्लिङ्गकानुमित्या ग्राह्यत्वाऽसम्भवः, एवं च ज्ञाततायामेव विवादपर्यवसानम्, न तु स्वतोग्राह्यत्व इति देश्यानवकाशः ।

न च ज्ञाततालिङ्गकानुमितिग्राह्यत्वे ज्ञानातीन्द्रियत्वस्याप्रयोजकतया ज्ञानस्यातीन्द्रियतयेति हेत्वनन्वयः । अनुमित्येत्यस्य सावधारणपरतया तल्लभ्यप्रत्यक्षाग्राह्यत्वे हेत्वन्वयस्य विवक्षितत्वात् ।

---

दीधितौ — ज्ञानस्याऽतीन्द्रियतयेति । निष्ठत्वं षष्ठयर्थः, तस्याऽतीन्द्रियत्वेऽन्वयः । प्रयोज्यत्वं तृतीयार्थः, तस्य ग्राह्यत्वेऽन्वयः । ज्ञाततालिङ्गकानुमित्येति । अस्य तत्प्रामाण्यं गृह्यते इति पूर्वेणान्वयः । अनुमित्येति तृतीयार्थोऽभेदः । तस्य ग्रहधात्वर्थे ज्ञानेऽन्वयः । तथा च ज्ञाननिष्ठातीन्द्रियत्वप्रयोज्या या ज्ञाततालिङ्गकानुमित्यात्मकग्रहविषयता तदाश्रयः प्रमात्वमिति बोधः । ज्ञानस्याऽतीन्द्रियतया प्रत्यक्षासम्भवेन स्वजन्यज्ञाततालिङ्गकानुमितिसामग्री स्वनिष्ठप्रामाण्यनिश्चायिकेति भावः । स्वं ज्ञानम्, एतेन ज्ञानस्यातीन्द्रियत्वकथनेन । ज्ञाततालिङ्गकानुमितेरिति । घटोऽयं घटत्ववति घटत्वप्रकारकज्ञानविषयः घटत्ववति घटत्वप्रकारताशालिज्ञाततावत्त्वादुक्तानुमितेर्वेत्यर्थः । अस्य प्राथमिकज्ञानग्रहरूपतेत्यनेनान्वयः । तेन ज्ञाततालिङ्गकानुमिते प्राथमिकज्ञानग्रहरूपत्वेन । इति देश्यानवकाश इत्यनेनाऽस्यान्वयः । न्यायमतेऽपीति । अपिना भट्टमतस्य समुच्चयः । अनुमित्या इदं ज्ञानं प्रमा सकलप्रवृत्तिजनकत्वादित्याकारिकया, परन्तु अनुमितिग्राह्यत्वेन भट्टमतसाम्येऽपि, तन्मते न्यायमते । ग्राह्यत्वासम्भव इति । प्रमात्वस्येति शेषः । एवं च ज्ञाततालिङ्गकानुमित्या ग्राह्यत्वासम्भवे च । ज्ञाततायामेवेति । एवकारव्यवच्छेद्यमाह—न त्विति । इति देश्यानवकाश इति । इति पूर्वपक्षानवकाश इत्यर्थः । ज्ञानातीन्द्रियत्वेऽपि विवादात् । ज्ञातो घट इति प्रतीतेः घटे ज्ञाननिरूपितविषयत्वावगाहित्वस्वीकारेणैवोपपत्तेः, प्रमाणान्तराभावेन ज्ञातताया अप्रसिद्धत्वेन तल्लिङ्गकज्ञानजन्यत्वप्रकारकानुमितेः सुतरामप्रसिद्धत्वेन तत्र प्रमात्वावगाहित्वासम्भवात् । ज्ञानस्यातीन्द्रियत्वे घटं जानामीत्याकारकज्ञाननिष्ठलौकिकविषयताशालिप्रत्यक्षापलापापत्तेः । आत्मसमवेतवृत्तिलौकिकविषयतासम्बन्धेन मानसं प्रति तादात्म्येन ज्ञानत्वेन प्रतिवध्यप्रतिबन्धकभावान्तरकल्पनापत्तेश्चेति न्यायसिद्धान्तः । ज्ञानातीन्द्रियत्वे विवाद उपलक्षणम् । मीमांसकमते स्वाश्रयज्ञानग्रहत्वव्यापकविषयितानिरूपकत्वं स्वतोग्राह्यत्वम् । तच्च नैयायिकमते न सम्भवति, तादृशग्रहत्वस्य गुरुमते व्यवसाये मिश्रमतेऽनुव्यवसायेऽपि सत्त्वात्तत्र प्रामाण्यविषयिताया अभावात् ।

न चाऽस्त्येव प्रमात्वावगाहित्वम्, तथाहि—गुरुमते अयं घटः घटमहं जानामीत्येव ज्ञानाकारः । तत्र घटपदार्थघटत्वविशिष्टस्याऽऽधेयतया द्वितीयार्थेऽन्वयः, द्वितीयार्थश्च घटत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वम्, तस्य च निरूपकतासम्बन्धेन ज्ञाधात्वर्थ-

( चि० म० ) तथाहि तत्र विप्रतिपत्तयः ।

---

तत्र = मतत्रयसाधारणस्वतस्त्वे । विचाराङ्गसंशयजननीर्विप्रतिपत्तीराह—ज्ञानेत्यादिना ।

---

मूलस्थं तत्रेत्युपादाय व्याचष्टे—मतत्रयसाधारणस्वतस्त्व इति । एतेन प्रथमावधि विप्रतिपत्तित्रयस्य मतत्रयसाधारण्यं मूलस्थतच्छब्दलभ्यमेवेति तदभिधानमनुपयुक्तमेवेति निरस्तम् । तुरीयविप्रतिपत्तेः प्रत्येकमेवेत्यनेन यथा एकमतसिद्धस्वतस्त्वकोटिकत्वमभिहितम्, तथा प्रथमादिविप्रतिपत्तीनां मतद्वयमात्रासिद्धस्वतस्त्वादिकोटिकत्वशङ्कावारणाय युक्तं त्रितयसिद्धस्वतस्त्वकोटिकत्वाभिधानम् । तद्विना न्यूनत्वस्यापरिहारः । तत्रेति । सप्तम्यर्थविषयतायाः संशयजनकवाक्यरूपविप्रतिपत्तिपदार्थैकदेशे संशयेऽन्वयो बोध्यः ।

---

ज्ञानेऽन्वयः । तस्य समवायेनाऽस्मत्पदार्थेऽन्वयः । तथा च घटत्ववन्निष्ठघटत्वप्रकारतानिरूपितविशेष्यतानिरूपकज्ञानवानहमिति बोधः । एवं चैतादृशशाब्दबोधस्य ज्ञानांशे घटत्वनिष्ठप्रकारतानिरूपितघटत्ववन्निष्ठविशेष्यताकत्वरूपप्रमात्वविषयकतया प्रमात्वावगाहित्वमक्षतम् । एवमेव मिश्रमतेऽपीति वाच्यम् । उक्तव्यवसायादौ 'इदं ज्ञानं घटविशेष्यकं—घटत्वप्रकारकम्' इत्याकारकविशृङ्खलविषयितायामेव प्रामाण्याश्रयग्रहत्वव्यापकतास्वीकारात् । घटत्ववद्विशेष्यकत्वावच्छिन्नघटत्वप्रकारकत्ववदिदं ज्ञानमित्याकारकज्ञानीयविलक्षणविषयितायास्तत्राऽस्वीकारात् । एतादृशप्रामाण्यग्रहस्यैव प्रवृत्त्याद्युपयुक्तत्वात् । एवं चोपदर्शितरीत्या प्रामाण्यघटकीभूतसकलपदार्थानां सिद्धावपि तादृशविलक्षणविषयिता तथाविधव्यवसायादौ असिद्धैवेति । अत्र नव्याः—प्रथमानुव्यवसायस्य प्रामाण्यग्राहकत्वे व्यवसायतृतीयक्षणे सर्वानुभवसिद्धतद्धर्मिकप्रामाण्यसंशयानुपपत्तिरित्यगत्या प्रामाण्यप्रत्यक्षं प्रति प्रामाण्यज्ञानत्वेन हेतुत्वं कल्प्यते अतो न प्रामाण्यस्य स्वतस्त्वम् । न च प्रकारित्वविशेष्यत्वादि प्रामाण्यघटकपदार्थानां विशकलितोपस्थितिदशायामपि विशेष्ये विशेषणमिति न्यायेन प्रामाण्योपनीतभानोदयात् कथं प्रामाण्यप्रत्यक्षं प्रति प्रामाण्यज्ञानस्य हेतुतेति वाच्यम् । प्रामाण्यग्रहं विना विशेष्ये विशेषणमिति न्यायेनापि प्रामाण्यप्रत्यक्षानभ्युपगमात् ।

ननु ज्ञानं 'ज्ञाततालिङ्गका'नुमितिग्राह्यमित्यत्राऽतीन्द्रियत्वहेतुरप्रयोजकः, ज्ञानस्यैन्द्रियकत्वेऽपि अनुमितिग्राह्यत्वसम्भवाद्वह्न्यादिवदित्याशङ्कते—न चेति । हेत्वनन्वयः हेतुत्वासम्भवः, अनुमित्येत्यस्य अनुमितिग्राह्यत्वघटकाऽनुमित्येत्यस्य । सावधारणपरतयेति । अनुमित्यैवेत्यर्थकतयेत्यर्थः । अनुमितीतर'प्रत्यक्षा'ग्राह्यत्वे सति अनुमितिग्राह्यत्वमित्यर्थकतयेति यावत् । तल्लभ्येति । अवधारणलभ्येत्यर्थः । तथा च प्रत्यक्षाग्राह्यत्वविशिष्टाऽनुमितिग्राह्यत्वं भट्टमतसिद्धसाध्यमित्यर्थः । तथा च तादृशसाध्येऽतीन्द्रियत्वं प्रयोजकमिति ध्येयम् । एतेन मतत्रयसाधारणस्वतस्त्वकथनेन, तदभिधानं मतत्रयसाधारणस्वतस्त्वे इत्यभिधानं, तद्विना मतत्रयसाधारणस्वतस्त्वकोटिकत्वाभिधानं विना, तथा च मूलस्थतत्पदं मतत्रयबोधनायेति द्योतनाय, तदुक्तं दीधितिकृता—अन्वयो बोध्य इति । मतत्रयसाधारणस्वतस्त्वविषयताशालिसंशयजनकवाक्यानीति बोधः ।

( चि० म० ) ज्ञानप्रामाण्यं तदप्रामाण्याग्राहकयावज्ज्ञानग्राहकसामग्रीग्राह्यं न वा।

अत्र च तात्पर्यवशात् तद्वति तत्प्रकारकत्वरूपप्रकर्षविशिष्टं ज्ञानं प्रशब्दोपसंहितेन माधातुना प्रत्याय्यते भावल्युटा च तादृशज्ञानत्वम्, करणल्युटा

---

विप्रतिपत्तेरुपयोगितां दर्शयितुमाह—विचाराङ्गेति। विचारो जल्पः, विपरीतोद्भावकपरविजिगीषयान्याग्रप्रयोगरूपः, जिज्ञासासम्पादनेन तदङ्गस्य तदुपयोगिनो मध्यस्थसंशयस्य जननीरित्यर्थः।

अत्र च नन्वित्यादिवक्तुर्मीमांसकस्यैव न तथाहीत्यभिधानम्, तथासति विधिकोटिमात्रस्य तदभिधेयतया निषेधाविबोधक न वेत्याभिधानाऽसङ्गतेः। स्वसंशयज्ञापनाय मध्यस्थस्यैव तथाभिधानौचित्यादिति स्वत एवास्तु तन्निरूपणमित्यनन्तरम् इति मीमांसकानां स्वमतपरिग्रहेण नैयायिकेन विचारप्रसक्तिरिति पूरणीयम्। तथा च ग्रन्थकृत एवोक्तिरियम्। तथा च स एव विचारो विप्रतिपत्त्यभावे न घटत इत्यालोच्य ग्रन्थकृतैव तथाहीत्यादिना विप्रतिपत्तयो दर्शिताः। उत्तरवत्पूर्वपक्षोऽपि परिष्करणीय इत्यवधेयम्।

पक्षे ज्ञानपदोपादानं प्रामाण्यपदस्य प्रमाकरणत्वार्थभ्रमनिरासपरतया सार्थकयिष्यन् तत्पदस्य प्रमात्व-तत्करणत्वोभयार्थकतां व्युत्पादयति—अत्र चेति। अत्र=पक्षबोधके। 'ज्ञान'प्रामाण्यपदे। ज्ञानेति पदं ज्ञानकरणत्वभ्रमनिरासाय, 'तात्पर्यभ्रमविषयता-

---

जिज्ञासासम्पादनेनेति। मध्यस्थसंशयानन्तरं जिज्ञासा मध्यस्थस्य। तदनन्तरं पक्षे साध्यज्ञानमस्याऽसिद्धमिति न्यायप्रयोक्तुर्ज्ञानम्। ततोऽस्य तादृशज्ञानं भवतु इतीच्छा, ततो विचारेच्छा, ततो विचार इति संशयस्योपयोगित्वं बोध्यम्। तदङ्गस्य विचाराङ्गस्य, तदुपयोगिनः विचारोपयोगिनः। नन्वित्यादीति। ननु स्वत एवास्तु तन्निरूपणमित्यादीत्यर्थः। तथासति मीमांसकाभिधाने सति, विधिकोटिमात्रस्य ज्ञानग्राहकसामग्रीग्राह्यत्वस्य, तदभिधेयतया नन्वित्यादिग्रन्थाभिधेयतया, मीमांसकसम्मततयेति यावत्। उत्तरवदिति। उत्तरग्रन्थवदित्यर्थः। पूर्वपक्षोऽपि पूर्वपक्षग्रन्थोऽपि, पूर्वपक्षग्रन्थस्य यथावदनिरूपणे उत्तरग्रन्थस्य यथार्थतोऽज्ञेयत्वेनानुमानादेरनापत्तेरिति भावः। परिष्करणीयः ग्रन्थकृतेति शेषः।

मूले ज्ञानप्रामाण्यं पक्षः। अत्र प्रपूर्वकं माधातोः सकाशाद् भावार्थकल्युट्प्रत्ययः। भावप्रत्ययस्य प्रयोगसाधुत्वमात्रार्थकत्वेन धात्वर्थमात्रस्यैव भानम्। तथा च प्रमैव प्रमाणम्। ततश्च भावार्थकः ष्यञ् प्रत्ययः। तस्य च प्रकृत्यर्थतावच्छेदकबोधकत्वात्, प्रामाण्यशब्देन तद्वति तत्प्रकारकत्वरूपं प्रमात्वं बोध्यते। करणल्युटा च प्रमाकरणत्वमुपस्थाप्येत, तादृशप्रमाकरणत्वनिरासाय ज्ञानपदम्। तथा च ज्ञानवृत्तिप्रमात्वलाभः। ज्ञानपदानुक्तौ प्रामाण्यस्यैव पक्षत्वे अंशतो बाधः स्यात्, प्रमात्वे स्वतोग्राह्यत्वसम्भवेऽपि प्रमाकरणत्वे 'चक्षुरादिनिष्ठे' स्वतोग्राह्यत्वाभावात्। असति बाधके उद्देश्यतावच्छेदकावच्छेदेन विधेयान्वयस्यौत्सर्गिकतया प्रामाण्यावच्छेदकावच्छेदेन ज्ञानवृत्तित्वान्वयातादृशप्रमाकरणत्वस्य व्याप्तिज्ञानादिष्वपि सत्त्वेन तत्र ज्ञानवृत्तित्वसत्त्वे-

तादृशज्ञानकरणत्वं तद्धितान्तेनोपस्थाप्यते। तत्र तत्पदस्य तादृशकरणत्व-निरासाय ज्ञानेति सावधारणम्।

---

वारणाये'त्यन्वयः। तद्वति तत्प्रकारकत्वरूपं याथार्थ्यमिवाऽन्योपि प्रकर्षः प्रशब्दार्थं इति कुतोऽस्यैव लाभ इत्यत आह—तात्पर्यवशादिति। माधातुपूर्वप्रशब्दस्य याथार्थ्यरूपप्रक एवाऽनादितात्पर्यादित्यर्थः।

प्रशब्दस्य वाचकत्वे विवादात्पदत्वं सविवादमिति प्रशब्देत्यभिधानम्। तदुपसन्धानं च तदव्यवहितोत्तरत्वम्। माधातुना ज्ञानत्वविशिष्टार्थकमाधातुना। तद्धितान्तेनेत्यत्र भावल्युटा करणल्युटा चेत्युभयत्र सम्बन्धः। तद्धितश्च भावार्थकः ष्यञ् प्रत्ययः। तस्य प्रकृत्यर्थतावच्छेदकत्वव्युत्पत्तेरिति भावः। तत्र तयोरर्थयोर्मध्ये। ज्ञानपदादेव क तन्निरास इत्यपेक्षायामाह—ज्ञानेति सावधारणमिति। ज्ञानस्यैव यत्प्रामाण्य-मित्यर्थपरम्।

---

ऽपि न बाधः, प्रमाकरणत्वत्वावच्छेदेन ज्ञानवृत्तित्वविरहात्, तथा च ज्ञानवृत्तिप्रमात पक्ष इति ध्येयम्।

आदौ अयं घट इति ज्ञानं तत इदं ज्ञानमप्रमेत्याकारको ज्ञानग्रहः तज्जनकसामग्र्या अपि ज्ञानग्राहकसामग्र्यन्तर्गततया तज्जन्यग्रहस्य 'इदं ज्ञानमप्रमेत्याकारकस्य' याव ग्रहान्तर्गततया तद्विषयत्वस्य प्रमात्वविरहाद् बाधवारणायाऽप्रामाण्याग्राहकेति सामग्री-विशेषणम्। तथा च तादृशसामग्र्या अप्रामाण्याग्राहकत्वविरहान्न दोषः।

ननु अप्रामाण्यं यदि प्रमात्वाभावस्तदा प्रमात्वाभावाऽग्राहिकेत्यर्थः स्यात्, तथासति इदं ज्ञानं भ्रम इत्याकारको यो ज्ञानग्रहस्तज्जनकसामग्र्या अपि प्रमात्वाभावाऽग्राहक-त्वात्तज्जन्यग्रहविषयत्वस्य प्रमात्वे विरहाद् बाधः। यदि चाऽप्रामाण्यं भ्रमः तद भ्रमाग्राहिकेत्यर्थः स्यात्, तथासतीदं ज्ञानं प्रमात्वाभाववदित्याकारको यो ज्ञानग्रह स्तज्जनकसामग्रीजन्यग्रहविषयत्वस्य प्रमात्वे विरहेण बाधस्तदवस्थ इति चेन्न। अप्रामा-ण्यपदस्य प्रामाण्यविरोधित्वार्थकत्वात्। प्रामाण्यविरोधी च प्रमात्वाभावो भ्रमश्चे-त्यदोषः। अत एव वक्ष्यति—अप्रामाण्यं प्रामाण्यविरोधि इति। तथा च प्रामाण्यग्रह विरोध्यग्राहिकेति तदर्थः।

इदं निष्प्रकारकमिति ज्ञाननिष्ठस्य निष्प्रकारकत्ववति निष्प्रकारकत्वरूपप्रमात्वस्य पक्षान्तर्गततया तादृशस्थले साध्याप्रसिद्धिः, इदं निष्प्रकारकमिति ज्ञानस्य यो निष्प्रकारक वानिति ग्रहस्तज्जनकसामग्र्याः अयं घट इति ज्ञाननिष्ठप्रामाण्यविरोधि निष्प्रकारकत्व ग्रहजनकत्वात् प्रामाण्यस्य प्रकारताघटितत्वात्। तथा च प्रामाण्यग्रहविरोध्यग्राहक सामग्र्यप्रसिद्ध्या तज्जन्यग्रहविषयस्वरूपसाध्याप्रसिद्धिरतस्तत्तदिति लुप्तसप्तमीकं पदम् तस्मिन्नित्यर्थः।

तच्च प्रामाण्यविशेषणम्। तत्पदेन प्रमात्वाश्रयग्रहणम्। तथा च प्रमात्वाश्रयवृत्ति प्रामाण्यमित्यर्थः। तथा च निष्प्रकारकमिति ज्ञाननिष्ठप्रामाण्यस्य प्रमात्वाय वृत्तित्व विरहान्नाप्रसिद्धिः।

इच्छादीनामपि तद्वति तत्प्रकारकत्वरूपप्रामाण्याश्रयत्वात्तज्ज्ञानजनकसामग्र्याश्च प्रामाण्याऽग्राहकत्वाद् बाध इत्यतो ज्ञानग्राहिकेत्यत्र ज्ञानपदं ज्ञानत्वविशिष्टार्थकम्। पटादिविषयकज्ञानेन घटादिविषयकज्ञानाय प्रामाण्याग्रहाद् बाध इत्यत स्वाश्रयत्वं ज्ञाने विशेषणीयम्।

ज्ञानग्राहकाऽऽत्मशरीरजन्ययावद्ग्रहविषयत्वमप्रसिद्धम्। आत्मादिजन्ययावद्ग्रहविषयत्वस्य कुत्राप्यसत्त्वात्। समवायेन ज्ञानसामान्यं प्रति तादात्म्येनाऽऽत्मनः कारणत्वात्, अवच्छेदकतासम्बन्धेन ज्ञानं प्रति तादात्म्येन शरीरस्य कारणत्वाच्चेति अप्रसिद्धि तद्दोषवारणाय — सामग्रीति। इदमनुसन्धेयम्—आत्मपदेन यादृशात्मनि अप्रामाण्यग्रहो न जातस्तादृशात्मा ग्राह्यः, शरीरपदेनापि। तेन प्रामाण्यग्राहकत्ववदप्रामाण्यग्राहकत्वस्यापि आत्मनि सत्त्वात् अप्रामाण्याग्राहकत्वविशेषणेनैव तद्वारणसम्भवात्सामग्रीपदं व्यर्थमित्याक्षेपोऽपि समाहितः।

घटज्ञानं प्रमा इत्यनुमितेर्घटत्ववति घटत्वप्रकारकत्वरूपप्रमात्वाश्रय-'घटज्ञान'-विषयकत्वात्, तथा च प्रमाश्रयज्ञानग्रहोऽनुमित्यात्मको ग्रहस्तज्जनकसामग्रीजन्यग्रहविषयत्वस्य प्रमात्वे नैयायिकसम्मततया विधौ सिद्धसाधनम्, निषेधे बाधोऽतो यावत्त्वोपादानम्। तदुपादाने च यावत्सामग्र्यन्तर्गतानुव्यवसायादिसामग्रीग्राह्यत्वस्य नैयायिकैरस्वीकारान्नोक्तदोषावकाशः। न च तथापि यावत्सामग्रीजन्यग्रहाप्रसिद्ध्या साध्याप्रसिद्धिरिति वाच्यम्। यावत्त्वस्य ग्रहविशेषणत्वात्। तथा च स्वाश्रयज्ञानग्राहकसामग्रीजन्यग्रहनिष्ठाभावप्रतियोगित्वं घटत्ववद्विशेष्यकत्वावच्छिन्नत्वविशिष्टघटत्वप्रकारकत्वानवच्छिन्नं न वेति समुदितार्थः।

विशिष्य तद्वति तत्प्रकारकज्ञानत्वस्य पक्षत्वे यदा यद्धर्मप्रकारकज्ञानं प्रामाण्यं पक्षः तदा तद्धर्मप्रकारकज्ञानग्राहकयावत्सामग्रीग्राह्यत्वमेव साधनीयम्, न तु सामान्यतो ज्ञानग्राहकयावत्सामग्रीग्राह्यत्वम्, तद्वति तत्प्रकारकज्ञानस्य तत्तदर्थभेदेन भिन्नत्वात्कस्यापि प्रामाण्यस्य यावज्ज्ञानग्राहकसामग्रीग्राह्यत्वाभावात् अप्रसिद्धिरित्यग्रे व्यक्तीभविष्यति।

तथा च तत्तज्ज्ञानप्रामाण्यं स्वाश्रयतत्तज्ज्ञानवृत्तिप्रामाण्यविरोध्यग्राहिका स्वाश्रयज्ञानत्वविशिष्टविषयकग्रहजनिका या सामग्री तज्जन्यग्रहविषयतावत् ज्ञानमात्रधर्मत्वात्, ज्ञानत्व-ज्ञान-घटविशेष्यकत्व-घटत्वप्रकारकत्ववदित्यनुमानं फलितमिति सङ्क्षेपः। विस्तरस्त्वग्रे।

तत्पदस्य प्रामाण्यपदस्य। **प्रथमत इत्यादिः।** **ज्ञानकरणत्वभ्रमनिरासायेति।** प्रमाकरणत्वभ्रमनिरासायेत्यर्थः। प्रामाण्यपदं प्रमाकरणत्वार्थकमिति भ्रमनिरासायेति यावत्। तदर्थमाह—तात्पर्यभ्रमविषयतावारणायेति। प्रामाण्यपदं प्रमाकरणत्वबोधेच्छयोच्चरितमिति भ्रमीयविशेष्यतावारणायेत्यर्थः। अन्योऽपि प्रकर्ष इति। विशेष्यावृत्त्यप्रकारत्वरूपः। यत्तु अगृहीतग्राहित्वरूपः स इति। तत्र अनुभवधारायां द्वितीयानुभवेऽव्याप्तेः। **अस्यैव लाभ इति।** तद्वति तत्प्रकारकत्वस्यैव लाभ इत्यर्थः। एवकारेण विशेष्यावृत्त्यप्रकारकत्वस्य व्यावृत्तिः। याथार्थ्यरूपप्रकर्षे एवेति। तद्वति तत्प्रकारकत्वरूपे

तच्च न ज्ञानत्वनियतम्, मनःप्रभृतिवृत्तित्वात् । ज्ञानपदेनोत्सर्गतो ज्ञप्तिरेवोपस्थाप्यते ।

---

तच्च प्रमाकरणत्वं च । न ज्ञानत्वनियतमिति । न ज्ञानमात्रवृत्तीत्यर्थः । तथा च प्रमाकरणत्वे समभिव्याहृतज्ञानमात्रवृत्तित्वान्वयानुपपत्त्या प्रामाण्यपदे तत्परत्वभ्रमनिरास इति भावः । गङ्गायां घोष इत्यादौ प्रवाहे घोषाद्यन्वयानुपपत्त्या गङ्गापदे तत्परत्वभ्रमनिरासवदिति भावः । मनःप्रभृतीति । यद्यपि परामर्शादिनिष्ठमनुमित्यादिप्रमाकरणत्वं ज्ञानत्वनियतमेव तथापि विशेष्यतावच्छेदकावच्छेदेन विशेषणान्वयस्यौत्सर्गिकत्वात् प्रमाकरणत्वत्वावच्छेदेन ज्ञानत्वनैयत्यानुपपत्त्या तद्वति तत्प्रकारकज्ञानत्वत्वावच्छेदेन तदन्वयसम्भवेन तत्परतैव गृह्यत इति भावः ।

---

एवेत्यर्थः । एवकारेण विशेष्यावृत्त्यप्रकारकत्वव्यावृत्तिः । अनादितात्पर्यादिति । प्रामाण्यग्रहस्य प्रवर्त्तकतया । प्रवृत्तिजनकज्ञानविषयप्रमात्वस्यैव पक्षत्वं, प्रवृत्तिं प्रति च तद्वति तत्प्रकारकत्वरूपप्रामाण्यग्रहस्य हेतुतया तस्यैव स्वतस्त्वपरतस्त्वविवादात्, तादृशप्रकर्ष एव तात्पर्यादिति भावः । उभयत्रासम्बन्ध इति । तथा च तद्धितान्तेन भावल्युटा तद्वति तत्प्रकारकज्ञानत्वमुपस्थाप्यते, भावप्रत्ययस्य प्रयोगसाधुत्वार्थकत्वेन तत्र धात्वर्थमात्रस्यैव भानात् । तद्धितान्तेन करणल्युटा तद्वति तत्प्रकारकज्ञानकरणत्वमुपस्थाप्यते । तस्य भावार्थकष्यञ्प्रत्ययस्य, तयोरर्थयोर्मध्ये इति प्रमात्व-प्रमाकरणत्वरूपार्थयोर्मध्ये इत्यर्थः । ज्ञानेतीति । ज्ञानस्यैवेति । ज्ञानवृत्त्येवेत्यर्थः । एवकारेण ज्ञानाऽवृत्तिप्रामाण्यस्य व्यवच्छेदः । तथा च ज्ञानपदानुक्तौ प्रामाण्यस्यैव पक्षत्वेऽशंतो बाधः, प्रमात्वे स्वतोग्राह्यत्वसत्त्वेऽपि प्रमाकरणत्वे स्वतोग्राह्यत्वाभावादिति भावः ।

कथं तन्निरास इति । प्रमाकरणत्वनिरास इत्यर्थः । प्रमाकरणत्वस्य व्याप्तिज्ञानादिषु सत्त्वात्, तत्र ज्ञानवृत्तित्वस्याक्षतत्वादिति भावः । न ज्ञानमात्रवृत्तीति । न ज्ञानेतरा वृत्तीत्यर्थः । प्रमाकरणत्वस्य चक्षुरादिष्वपि सत्त्वात् । प्रमाणपदस्य प्रमायां प्रमाणे चोभयत्र शक्तिकल्पने गौरवादेकस्मिन्नेवार्थे शक्तिकल्पनं युक्तम्, तत्र प्रमाणशब्दस्य प्रमाणे एव भूरिशः प्रयोगदर्शनात्तत्र शक्तिः प्रमायां च लक्षणेति सारम् । तथा च ज्ञानमात्रवृत्तित्वस्य प्रामाण्ये अन्वये च । समभिव्याहृतज्ञानमात्रवृत्त्यन्वयानुपपत्त्येति । असति बाधके उद्देश्यतावच्छेदेन विधेयान्वयबलात्प्रमाकरणत्वत्वावच्छेदेन ज्ञानवृत्तित्वान्वयानुपपत्त्येत्यर्थः । तत्परत्वभ्रमनिरास इति । प्रामाण्यपदं प्रमाकरणत्वबोधेच्छयोच्चरितमिति भ्रमनिरास इत्यर्थः । तत्परत्वभ्रमनिरासवदिति । प्रवाहपरत्वभ्रमनिरासवदित्यर्थः । दीधितौ—मनःप्रभृतिवृत्तित्वादिति । प्रमाकरणत्वस्येति शेषः । आदिना चक्षुरादिपरिग्रहः । करणत्वं न जातिः, जातावपि सत्त्वात्, किन्तु आश्रयभेदेन भिन्नमित्याशयेन शङ्कते—यद्यपीति । ज्ञानत्वनियतमेव । ज्ञानमात्रवृत्तिमेव । तथा च ज्ञानपदोपादानेऽपि न प्रमाकरणत्वस्य व्यावृत्तिरिति भावः । समाधत्ते—तथापीति । औत्सर्गिकत्वादिति । असति बाधके उद्देश्यतावच्छेदकव्यापकत्वं विधेये विधेयसंसर्गे वा भासते इत्युत्सर्गः । ज्ञानत्वनैयत्यान्वयानुपपत्त्या । प्रमाकरणत्वत्वावच्छेदेन ज्ञानमात्र-

अथैवं ज्ञानस्यैवेत्यवधारणो व्यर्थः, मनःप्रभृतिनिष्ठज्ञानकरणतायाः परामर्शनिष्ठानुमितिकरणतातो भिन्नतया तत्र ज्ञानवृत्तित्वस्य बाधेन प्रमाकरणतापरत्वभ्रमनिराससम्भवादिति चेत्, सत्यम् । सावधारणमित्यस्याऽन्वयितावच्छेदकावच्छेदेन स्वार्थसम्बन्धान्वयपरमित्यर्थः । तच्च न ज्ञानत्वनियतमित्यस्य तत्त्वं च न ज्ञानवृत्तित्वव्याप्यमित्यर्थ इति न दोषः ।

एतेन ज्ञानप्रामाण्यपदस्य ज्ञानस्यैव यत्प्रामाण्यमित्यर्थपरत्वनिर्णायकाभावान्नोक्तभ्रमनिराससम्भवः, न हि अवच्छेदकावच्छेदेनान्वयपरतावदेतादृशार्थपरताया अपि औत्सर्गिकत्वमित्यपि परास्तम् ।

यत्तु प्रमात्व-प्रमाकरणत्वयोः प्रामाण्यपदार्थत्वव्युत्पादनं तेन रूपेण पक्षत्वमिति प्रदर्शनाय—'ज्ञानकरणत्वस्य निरासायेति' । तस्य व्यावर्तनायेत्यर्थः । तथा च ज्ञानमात्रवृत्तिप्रामाण्यपदार्थत्वेन ज्ञानान्यवृत्तितानवच्छेदकप्रामाण्यपदार्थतावच्छेदकवत्वेन

---

वृत्तित्वान्वयानुपपत्त्या प्रमाकरणत्वत्वव्यापकत्वस्य ज्ञानवृत्तित्वे विरहादिति भावः । तदन्वयसम्भवेन ज्ञानत्वनैयत्यान्वयसम्भवेन, ज्ञानमात्रवृत्तित्वान्वयसम्भवेनेति यावत् । तत्परतैवेति । प्रमात्वपरतैवेत्यर्थः । एवकारेण प्रमाकरणत्वव्यवच्छेदः ।

एवम् उद्देश्यतावच्छेदकव्यापकत्वं विधेये विधेयसंसर्गे वा भासते इति नियमस्वीकारे । अवधारणो व्यर्थ इति । एवकारो व्यर्थ इति भावः । करणतयोरैक्ये ज्ञानवृत्तित्वं निराबाधमेवातो भिन्नतयेति । तत्र मनःप्रभृतिनिष्ठकरणतायाम् । ज्ञानवृत्तित्वस्य बाधेनेति । तथा च प्रमाकरणत्वत्वव्यापकत्वस्य ज्ञानवृत्तित्वे विरहेण इति भावः । प्रमाकरणतापरत्वभ्रमनिराससम्भवादिति । प्रामाण्यपदं प्रमाकरणत्वबोधेच्छयोच्चरितमिति भ्रमनिराससम्भवादित्यर्थः । तथा चावधारणार्थकैवकारोऽव्यर्थ इति भावः । उक्तनियमलाभार्थमेव एवकार इत्याह—सत्यमिति । अन्वयितावच्छेदकावच्छेदेनेति । प्रामाण्यावच्छेदकावच्छेदेनेत्यर्थः । स्वं ज्ञानम्, स्वार्थसम्बन्धान्वयपरं ज्ञानवृत्तित्वव्याप्यपरम् । तदेवाह—तत्त्वं चेति । प्रमाकरणत्वं चेत्यर्थः । विधेये उद्देश्यतावच्छेदकव्यापकत्वभाने उद्देश्यतावच्छेदके विधेयव्याप्यत्वभाने विनिगमनाविरह इति भावः । एतेन ज्ञानवृत्तित्वव्याप्यमित्यर्थकरणेन, अस्य परास्तमित्यनेनान्वयः । नोक्तभ्रमनिराससम्भव इति । न प्रमाकरणत्वभ्रमनिराससम्भव इत्यर्थः । तथा चांऽशतो बाध इति भावः । एतादृशार्थपरताया इति । ज्ञानस्यैव यत्प्रामाण्यमित्यर्थपरताया इत्यर्थः । अपिना उद्देश्यतावच्छेदकव्यापकत्वं विधेये भासते इत्यस्य समुच्चयः ।

स्वमते तद्वति तत्प्रकारकज्ञानत्वस्वरूपप्रमात्वत्वेनैव पक्षता, ज्ञानपदं तु प्रमाकरणत्वशङ्कानिरासार्थम्, ये तु ज्ञानस्य पक्षान्तर्भावे मन्यन्ते तन्मतमुत्थापयति—यत्त्विति । प्रामाण्यपदार्थत्वव्युत्पादनमिति । प्रामाण्यपदेनेत्यादिः । तेन रूपेण प्रामाण्यपदार्थत्वेन रूपेण । ज्ञानकरणत्वनिरासायेति । ज्ञानकरणत्वनिरासाय ज्ञानेति सावधारणमिति दीधितिः । तस्य ज्ञानकरणत्वस्य, तथा च प्रमाकरणत्वस्य व्यावृत्तौ च । ज्ञानमात्रवृत्तिप्रामाण्यपदार्थत्वेनेति । अस्य पक्षत्वादित्यनेनान्वयः । तथा च प्रमाकरणत्वस्य ज्ञान-

पक्षत्वात्, प्रमाकरणत्वत्वरूपप्रामाण्यपदार्थतावच्छेदकस्य च मनःप्रभृतिवृत्तितावच्छेदकत्वान्न प्रमाकरणत्वस्य पक्षान्तर्भाव इति नांशतो बाध इति व्याख्यानम् । तन्न । तथा सति ज्ञानपदस्य करणव्युत्पत्त्या ज्ञानजनकार्थकत्वात्तत्समभिव्याहारेणापि न भ्रमनिरास इत्याशङ्काया असम्भवेन ज्ञानपदस्य ज्ञप्तावेव भूरिप्रयोगदर्शनान्न ज्ञानकरणत्वशङ्केत्यर्थपराया ज्ञप्तिपदेनेत्यग्रिमफक्किकाया अवतारासम्भवात् । ज्ञानपदार्थत्वेन ज्ञाननिवेशे प्रयोजनाभावाज्ज्ञानकरणरूपज्ञानपदार्थमात्रवृत्तितायाः प्रमाकरणत्वे सत्त्वेऽपि अंशतो बाधशङ्कानवकाशेन तादृशफक्किकाया अवतारयितुमशक्यत्वात् । ज्ञानपदार्थत्वेन ज्ञाननिवेशे ज्ञप्तेरेवौत्सर्गिकज्ञानपदाधीनोपस्थितिविषयत्वेऽपि ज्ञानकरणस्य ज्ञानपदार्थतानपायेन अंशतो बाधवारणाऽसम्भवेन ज्ञानपदेनेत्यादेर्दुःसङ्गतापत्तेश्चेति ।

मात्रावृत्तित्वेन पक्षानन्तर्भावान्न बाधः । प्रमाकरणत्वानां भिन्न-भिन्नतया परामर्शनिष्ठकरणत्वस्य न व्यावृत्तिरित्यत आह— ज्ञानान्येति । तथा च प्रमाकरणत्वत्वस्य ज्ञानान्यमनःप्रभृतिनिरूपितवृत्तितावच्छेदकत्वादेव वारणम् । तथा च ज्ञानान्यवृत्तितानवच्छेदके अथ च प्रामाण्यपदार्थतावच्छेदके प्रमात्वत्वमेव, न तु प्रमाकरणत्वम् ।

अत्र च ज्ञानान्यवृत्तितानवच्छेदकत्वानुपादाने प्रमाकरणत्वत्वस्य व्यावृत्तिर्न स्यात्, एवं प्रामाण्यपदार्थतावच्छेदकत्वानुपादानेऽनुमितिकरणत्वत्वव्यावृत्तिर्न स्यात्, तदुपादाने चानुमितिकरणत्वत्वं न प्रामाण्यपदार्थतावच्छेदकं किन्तु प्रमात्वत्वं प्रमाकरणत्वत्वं वेति न दोषः ।

तन्मतं निरस्यति—तन्नेति । तथासति ज्ञानमात्रवृत्तिप्रामाण्यपदार्थत्वेन पक्षत्वे सति । करणव्युत्पत्त्या ज्ञायते अनेनेति व्युत्पत्त्या, तत्समभिव्याहारेणापि ज्ञानपदसमभिव्याहारेणापि, अपिना तदसमभिव्याहारस्य समुच्चयः । न भ्रमनिरास इति । प्रामाण्यपदं प्रमाकरणत्वार्थकमिति भ्रमस्य न निरास इत्यर्थः । इति शङ्काया असम्भवेनेति । प्रामाण्यपदं प्रमाकरणत्वार्थकमिति भ्रमस्याऽसम्भवेनेत्यर्थः । ज्ञानमात्रवृत्तिपदार्थत्वेन पक्षत्वे भ्रमाऽसम्भवादिति भावः । उक्तपक्षबोधकपदे प्रामाण्यपदं द्व्यर्थकम्, ज्ञानपदं तु करणव्युत्पत्त्या ज्ञानकरणरूपैकार्थपरमिति भ्रमस्य शङ्कितुरभावात्, तादृशभ्रमासत्त्वे भूरिप्रयोगमालम्ब्य ज्ञप्तिपरत्वे नाऽग्रिमसमाधानासङ्गतेः, तन्मते ज्ञप्तिरूपार्थान्तिरस्याभावात् । ज्ञानपदेनेत्यग्रिमफक्किकाया इति । ज्ञानपदेनोत्सर्गतो ज्ञप्तिरेवोपस्थाप्यते इति ग्रन्थस्येत्यर्थः । अवताराऽसम्भवादिति । प्रमाकरणत्वभ्रमाभावे समाधानाभाव इति भावः । ननु शक्त्या सकृदर्थद्वयबोधाऽसम्भवेऽपि प्रामाण्यपदस्य प्रामाण्यपदार्थे इव ज्ञानपदस्य ज्ञानपदार्थे लक्षणा उभयद्वयर्थत्वात्, एवं च करणव्युत्पत्त्या ज्ञानकरणत्वपरत्वाऽऽशङ्का भवेत्, तादृशशङ्कापरिहारायाग्रिमफक्किकावतारश्चेत् नात्र लक्षणापीत्याह—ज्ञानपदार्थत्वेनेति । प्रयोजनाभावादिति । प्रयोजनवती हि लक्षणाऽत्र तदभावादित्यर्थः । अंशतो बाधानवकाशेनेति । ज्ञानपदार्थत्वेनाऽनिवेशे ज्ञानत्वेन निवेशादेव तत्करणताया पक्षबहिर्भावादिति भावः । लक्षणोपगमे बाधकमप्याह—ज्ञानपदार्थत्वेनेति । ज्ञप्तेरेवेति । उपस्थितिविषयत्वेऽपि । ज्ञानकरणस्य समुच्चयोऽपिना । अन-

तद्वति तत्प्रकारकज्ञानत्वं तु फलितार्थः। तद्वति तत्प्रकारकज्ञानत्वस्य तत्तदर्थभेदेन भिन्नत्वात्कस्यापि प्रामाण्यस्य च यावज्ज्ञानग्राहकसामग्रीग्राह्यत्वाभावात्, तत्तज्ज्ञानप्रामाण्यं तत्तज्ज्ञानग्राहकयावद्ग्राह्यं न वेति लाभार्थं तत्तज्ज्ञानपरं ज्ञानपदमिति तु तत्त्वम्।

यत्तु मिश्रादिमते अगृहीतज्ञानप्रामाण्यविशेषे बाधवारणाय ज्ञानपदम्।

---

विशिष्य तद्वति तत्प्रकारकज्ञानत्वस्य पक्षत्वे ज्ञाननियतत्वस्य पक्षतावच्छेदकानुप्रवेशो व्यर्थं इत्याशङ्कां निराकर्त्तुमभिमतार्थतात्पर्यनिश्चयार्थमेव ज्ञानत्वनियतत्वांशोपादानं, न तु तदपि पक्षतावच्छेदकघटकमित्याशयेनाह—तद्वतीति। प्रवर्तकज्ञानविषयप्रमात्वात्मकप्रामाण्यपदार्थमधिकृत्य विचारादेव प्रमाजनकत्वपरताभ्रमो न सम्भवतीत्यालोच्य ज्ञानपदोपादाने प्रयोजनान्तरमाह—तद्वतीति। तत्तदर्थभेदेन—प्रकारीभूतघटत्वपटत्वादिभेदेन। तत्तज्ज्ञानेति। यद्धर्मप्रकारकज्ञानप्रामाण्यं यदा पक्षस्तदा तद्धर्मप्रकारकज्ञानग्राहकयावद्ग्राह्यत्वमेव साधनीयम्, न तु सामान्यतो ज्ञानग्राहकयावद्ग्राह्यत्वम्। तद्धर्मप्रकारकज्ञानग्राहकयावद्ग्राह्यत्वं वेति विप्रतिपत्तिलाभायेत्यर्थः। तत्तज्ज्ञानपरं विशिष्य साध्यघटकघटत्वादिज्ञानपरम्। तादृशज्ञानस्य च न पक्षतावच्छेदकान्तर्भावः, प्रामाण्यपदेन घटत्ववतीत्यादेर्विशेषरूपेणैवोपस्थित्याऽव्यावर्तकत्वात्। अपि तु ताद्रूप्येणैव घटत्ववतीत्यादिकं घटत्वादिप्रकारकज्ञानघटितसाध्यसाधने पक्ष इत्यवधेयम्।

मिश्रोक्तज्ञानपदव्यावृत्तिमुपन्यस्य दूषयति—यत्तु इत्यादिना। मिश्रादीत्यादिना भट्टमतपरिग्रहः। अगृहीतेति। निर्वाच्ययाऽनुव्यवसायसामग्र्या अगृहीतं यद्धर्मप्रकारकज्ञानसामान्यं तद्धर्मवति तद्धर्मप्रकारकज्ञानत्वरूपप्रामाण्ये इत्यर्थः।

---

पायेनेति। प्राप्ततया। दुःसङ्गतनापत्तेश्चेति। तादृशफक्किकाया अवतारानुपपत्तेर्ज्ञानपदार्थत्वेन ज्ञानकरणत्वस्यापि प्राप्तत्वादिति भावः।

तदपि ज्ञानपदमपि, तथा च तादृशप्रामाण्यलाभायैव तात्पर्यग्राहकं ज्ञानपदमिति। प्रवर्तकज्ञानविषयप्रमात्वात्मकेति। निष्कम्पप्रवृत्त्युपयोगिप्रामाण्येत्यर्थः। दीधितौ—कस्यापीति। यद्यपि ज्ञानत्ववति ज्ञानत्वप्रकारकत्वरूपप्रामाण्ये यावज्ज्ञानग्राहकसामग्रीग्राह्यत्वसम्भवत्येव तथापि घटमहं जानामीत्याकारकमेव तेषां सर्वं ज्ञानं तत्र च घटत्ववति घटत्वप्रकारकज्ञानमेव विषयः न तु ज्ञानत्वप्रकारकज्ञानमपि। तथा सति ज्ञानमहं जानामीत्याकारापत्तेः। तथा च घटज्ञानप्रामाण्यं यावद्घटज्ञानग्राहकग्राह्यं न वेति विप्रतिपत्तिलाभायेत्यर्थः। इत्यालोच्य प्रामाण्यपदं न प्रमाजनकत्वबोधेच्छयोच्चरितमिति निश्चित्य, तथा च ज्ञानपदं न प्रमाजनकत्वव्यावर्त्तकमिति भावः। ताद्रूप्येणैव घटत्वादिप्रकारकज्ञानत्वेनैव, घटत्ववतीत्यादिकं पक्ष इत्यनेनान्वयः। साध्यसाधने साध्यानुमितौ, ये तु ज्ञानपदं ज्ञायमानपरं, तथा च ज्ञायमानप्रामाण्यस्य पक्षत्वमिति वदन्ति तन्मतमुत्थापयति—यत्तु इति। अगृहीतज्ञानप्रामाण्यविशेषे इति। अगृहीतम् अज्ञायमानं ज्ञानाविषयीभूतमिति यावत्, तादृशं यज्ज्ञानप्रामाण्यं तत्र तादृशं यज्ज्ञानं तन्निष्ठप्रामाण्यम् इत्यर्थः। यत्राऽयं घट इति व्यवसायोत्तरं घटमहं जानामीत्यनुव्यवसायो न

बाधवारणायेति । बाधः—साध्यसत्त्वानिर्वाहः, तत्प्रामाण्याश्रयग्राहकवक्ष्यमाण सामग्र्या एवाऽप्रसिद्धया प्रसक्तः, तद्वारणायेत्यर्थः । गुरुमते ज्ञानमात्रस्यैव तथाविधस्व प्रकाशसामग्रीग्राह्यतया नैतादृशो धर्मः प्रसिद्धयति यद्धर्मप्रकारकं ज्ञानं तादृशसामग्र्या न गृह्यत इति तन्मतमुपेक्षितम् ।

जातस्तत्रायं घट इति व्यवसायस्याऽगृहीततया 'ज्ञानाऽविषयतया' तन्निष्ठप्रामाण्ये इति यावत् । तदेवाह—निर्वाच्ययेति । निर्वक्तुं योग्ययेत्यर्थः । अनुव्यवसायसामग्र्या वक्ष्य माणयेति शेषः । तृतीयार्थो जन्यत्वम्, तस्याऽगृहीतपदार्थघटकज्ञानेऽन्वयः । अगृहीतं ज्ञाना विषयीभूतं, तथा चानुव्यवसायसामग्रीजन्यज्ञानाविषयीभूतमित्यर्थः । अनुव्यवसायपदं ज्ञातलिङ्गकानुमितिमपि समुच्चिनोति । तथा च ज्ञाततालिङ्गकानुमितिसामग्रीजन्य ज्ञानाविषयीभूतमित्यपि वोध्यम् । यद्धर्मप्रकारकज्ञानसामान्यमिति । घटत्वप्रकारक ज्ञानसामान्यमित्यर्थः । अयं घट इति ज्ञानमिति यावत् । तद्धर्मवति घटत्ववति तद्धर्मप्रकारकेति । घटत्वप्रकारकेत्यर्थः । तथा च यत्रायं घट इति ज्ञानानन्तरं तज्ज न्यानुव्यवसायो न जातः तत्र घटज्ञानस्य तन्निष्ठप्रामाण्यस्य चाऽज्ञायमानत्वम्, विषय तायाः ज्ञानसमानकालीनत्वात् । अनुव्यवसायानुत्पादकश्च विरोधिसामग्रीप्रयुक्तः स्व सामग्र्यभावप्रयुक्तश्च । तथा च तादृशज्ञाननिष्ठप्रामाण्यस्यापि पक्षान्तर्गततया तत्र स्वाश्रय ज्ञानग्राहकयावत्सामग्रीजन्यग्रहविषयत्वरूपसाध्यविरहेण बाधोऽतो ज्ञानपदं ज्ञायमान पदम् । तथा च ज्ञानविषयत्वविशिष्टप्रामाण्यस्यैव पक्षतया अज्ञायमानप्रामाण्यस्य पक्ष तावच्छेदकानाक्रान्ततया तत्र साध्यविरहेऽपि न क्षतिरिति भावः ।

ननु उक्तस्थले साध्यघटकज्ञानपदेनापि तादृशाऽज्ञायमानप्रामाण्याश्रयज्ञानग्रहे तद्विषयकग्रहाऽप्रसिद्धया तादृशग्रहजनकसामग्र्या अप्रसिद्धतया तज्जन्यग्रहविषयत्वरूप साध्याप्रसिद्धिः । तथा च साध्याभावोऽप्यसिद्धः, अलीकप्रतियोगिकाभावानङ्गीकारात् । एवं च साध्याभाववत्पक्षाप्रसिद्धया कथं बाध इत्यत आह—साध्यसत्त्वानिर्वाह इति । साध्याप्रसिद्धिरित्यर्थः । एवं चात्र बाधपदेन साध्याप्रसिद्धिरेव विवक्षिता इति भावः । तदेवाह—साध्यसत्त्वानिर्वाह इति । तत्प्रामाण्याश्रयग्राहकेति । अज्ञायमानज्ञाननिष्ठप्रामा श्रयज्ञानविषयकग्रहजनकेत्यर्थः । सामग्र्या एवाऽप्रसिद्धचेति । तादृशग्रहाप्रसिद्धिरपि वोध्या । प्रसक्तः आपादितः, अस्य च साध्यसत्त्वानिर्वाह इति पूर्वेणान्वयः । तद्वारणाय साध्यसत्त्वानिर्वाहवारणाय, ज्ञानपदं ज्ञायमानपदमिति भावः ।

ननु मिश्रादीत्यादिना भट्टमतपरिग्रह इति न युक्तम्, गुरुमतेऽपि अज्ञायमानज्ञान निष्ठप्रामाण्ये बाधसम्भवादित्याशङ्कायां गुरुमते अगृहीतज्ञानाऽप्रसिद्धिमाह—गुरुमते इति । अस्य नैतादृशो धर्मः प्रसिद्धयतीत्यनेनान्वयः । ज्ञानमात्रस्यैवेति । एवकारो भिन्न क्रमः, ग्राह्यतयेत्युत्तरं योजनीयः । तथाविधेति । चक्षुःसंयोगालोकसंयोगादिरूपेत्यर्थः । स्वप्रकाशसामग्रीग्राह्यतयेति । स्वसामग्रीग्राह्यतयैवेत्यर्थः । न तु सामग्र्यन्तरग्राह्यतयेति यावत् । एतादृशः स्वप्रकाशसामग्रीजन्यग्रहाविषयः, घटत्वादिरूपो धर्मः न प्रसिद्धयति इत्यन्वयः । यद्धर्मप्रकारकज्ञानं तादृशसामग्र्या न गृह्यते एतादृशधर्मो न प्रसिद्धयतीत्य

**न चाऽप्रामाण्यग्राहकसामग्रीकाल एव यद्धर्मप्रकारकग्रहसामग्री नान्यदा, स एव तादृशो धर्मः, अप्रामाण्याग्राहकत्वस्य तादृशसामग्रीविशेषणत्वादिति वाच्यम् ।**

**तद्धर्मघटिताऽप्रामाण्यग्रहस्य तत्प्रकारकज्ञानानुत्तरमसम्भवेनाऽप्रामाण्यग्रहसम्पादकतज्ज्ञानसामग्र्या एव तदप्रामाण्याग्राहिकायास्तज्ज्ञानग्राहिकायाः सामग्र्या प्रसिद्धेः ।**

---

न्वयः । यद्धर्मप्रकारकज्ञानं घटत्वादिप्रकारकं ज्ञानं, तादृशसामग्र्या घटज्ञानोत्पादकसामग्र्या, घटज्ञानं यत्सामग्रीजन्यं तत्सामग्रीमात्रग्राह्यमपि गुरुमते इति निष्कर्षः ।

अत्रेदं बोध्यम्—गुरुमते ज्ञानग्रहार्थं न मिश्रभट्टयोरिवानुव्यवसायानुमितिसामग्री अपेक्षिता, किन्तु गुरुमते ज्ञानमात्रस्यं स्वप्रकाशतयाऽज्ञायमानज्ञानाप्रसिद्धेः, तथा च घटज्ञानोत्पादिका या सामग्री सैव प्रामाण्यग्राहिकेति स्वपदग्राह्यघटज्ञाननिष्ठप्रामाण्याश्रयघटज्ञानस्य यो ग्रहः घटज्ञानमेव तज्जनकसामग्रीजन्यो ग्रहः स्वमेव तद्विषयत्वस्य घटज्ञाननिष्ठप्रामाण्ये सत्त्वान्न बाध इति तन्मतमुपेक्षितं गुरुमतमुपेक्षितम् ।

यद्धर्मप्रकारकज्ञानं तादृशज्ञानग्रहजनकसामग्र्या न गृह्यते स धर्मो गुरुमतेऽप्रसिद्ध इत्युक्तं तदसहमानः शङ्कते—**न चेति । अप्रामाण्यग्राहकसामग्रीकाले इति ।** घटज्ञानमप्रमेत्यप्रामाण्यग्राहकसामग्रीकाले इत्यर्थः । **यद्धर्मप्रकारकग्रहसामग्री** घटत्वप्रकारकज्ञानसामग्रीत्यर्थः । **नान्यदेति ।** अप्रामाण्यग्राहकसामग्रीविरहकाले इति यावत् । **स एव** घटत्वमेव, **तादृशो धर्मः** यद्धर्मप्रकारकज्ञानं तादृशसामग्र्या न गृह्यते तादृशो धर्म इत्यर्थः । तथा च तादृशसामग्रीजन्यग्रहविषयत्वस्य घटज्ञाननिष्ठप्रामाण्ये बाधात्कथं गुरुमतमुपेक्षितमिति पूर्वपक्षाभिप्रायः । ननूक्तस्थलेऽप्रामाण्यग्राहकसामग्रीसत्त्वेऽपि तद्धर्मप्रकारकज्ञानसामग्र्यास्तद्धर्मप्रकारकज्ञानग्राहकत्वात्तादृशधर्मो न प्रसिद्ध्यति यद्धर्मप्रकारकज्ञानं तथा न गृहीतमत आह—**अप्रामाण्याग्राहकत्वस्येति । सामग्रीविशेषणत्वादिति ।** तथा च तद्धर्मप्रकारकज्ञानग्राहकसामग्र्या ज्ञानग्राहकत्वेऽपि अप्रामाण्याग्राहकत्वाभावादिति भावः ।

तथा च यत्र घटज्ञानसामग्री नियमतो घटज्ञाननिष्ठाऽप्रामाण्यग्राहकसामग्रीसमवहिता एव तत्स्थलीयघटज्ञाननिष्ठप्रामाण्यस्य पक्षान्तर्गततया तत्र बाधो गुरुमतेऽप्यस्ति, तथाहि—साध्यघटकसामग्र्याम् अप्रामाण्याग्राहकत्वस्य विवक्षणीयतया तदप्रामाण्याग्राहकस्वाश्रयज्ञानग्राहकयावत्सामग्रीपदेन सा सामग्री धर्तुं न शक्यते इति सा सामग्री न साध्यघटिकेति तादृशी या काचित्तदन्या सामग्री तस्या धर्तुं शक्यत्वेऽपि तज्जन्यग्रहविषयत्वरूपसाध्यस्य तत्र ( प्रामाण्येऽ ) भावात् । ( स्वप्रकाशसामग्री अपि क्वचिन्न साध्यघटिकेति शङ्कितुराशयः ) न च ज्ञानग्राहिका सामग्री भिन्ना अप्रामाण्यग्राहिका च भिन्नेति ज्ञानग्राहकसामग्र्या अप्रामाण्याग्राहकत्वं निर्विवादमेवेति वाच्यम् । तदप्रामाण्यग्राहकसामग्र्यासमवहितत्वस्यैव ज्ञानग्राहकसामग्र्यां निवेशनीयत्वात् । एवं च तादृशसामग्र्या अप्रामाण्यग्राहकसामग्र्यसमवहितत्वाभावाद् बाधो गुरुमतेऽपीति भावः ।

एतावता तद्धर्मप्रकारकज्ञाननिष्ठाऽप्रामाण्यग्रहस्य अयं घट इति ज्ञानमप्रमा 'घटत्वप्रकारकं ज्ञानं घटत्वाभाववति घटत्वप्रकारकम्' इत्याकारकस्य तद्धर्मप्रकारकज्ञानरूप-

**वर्तमानज्ञानग्राहकसामग्र्या ज्ञाने गृह्यमाणे यथा ज्ञानत्वधर्मविषयकत्वादेर्विपरीतं न गृह्यते, तथा सविषयकत्वसप्रकारकत्वादेरपीति सर्वमतसिद्धम् ।**

धर्मिसमानकालोत्पत्तिकत्वमुक्तम्, तच्च न सम्भवति । अप्रमां प्रति धर्मिज्ञानस्य कारणतया तस्यापि अप्रामाण्यग्रहसामग्र्यन्तर्गततया पूर्वमपेक्षणात्, तथा च पूर्वकालावच्छेदेनाप्रामाण्याग्राहकज्ञानग्राहकसामग्रीजन्यग्रहविषयत्वस्योक्तप्रामाण्ये सत्त्वान्न बाध इत्याशयेन समाधत्ते—तद्धर्मघटिताऽप्रामाण्यग्रहस्येति । घटत्वघटिताऽप्रामाण्यग्रहस्येत्यर्थः । घटत्वप्रकारकं ज्ञानं घटत्वाभाववति घटत्वप्रकारकमिति ग्रहस्येत्यर्थः । तत्प्रकारकज्ञानानुत्तरमसम्भवेनेति । घटत्वप्रकारकज्ञानानुत्तरमसम्भवेनेत्यर्थः । तद्धर्मघटिताऽप्रामाण्यग्रहस्य तत्प्रकारकज्ञानोत्तरमेव सम्भवेनेति यावत् । धर्मिज्ञानविधया तत्प्रकारकज्ञानस्य तद्धर्मघटिताऽप्रामाण्यग्रहे कारणतया तादृशाऽप्रामाण्यग्रहस्य तत्प्रकारकज्ञानसमानकालोत्पत्तिकत्वाभावेनेति भावः । तथा च तत्प्रकारकज्ञानपूर्वकालावच्छेदेन तत्प्रकारकज्ञानसामग्र्या अप्रामाण्याग्राहकत्वेन स्वाश्रयज्ञानग्राहकत्वेन च स साध्यघटकत्वेन तादृशधर्मोऽप्रसिद्ध एव यद्धर्मप्रकारकं ज्ञानं तादृशसामग्र्या न गृह्यते इति तादृशसामग्रीजन्यग्रहविषयत्वस्योक्तप्रामाण्ये सत्त्वान्न बाध इत्याह—**अप्रामाण्यग्रहसम्पादकेति** । इदं च सामग्रीविशेषणम् । **तज्ज्ञानसामग्र्या एवेति** । घटत्वप्रकारकज्ञानसामग्र्या एवेत्यर्थः । अस्य प्रसिद्धेरित्यनेनान्वयः । एवकारेण घटत्वघटिताऽप्रामाण्यग्रहसामग्र्या व्यवच्छेदः । **तदप्रामाण्याग्राहिकाया इति** । घटत्वप्रकारकज्ञानधर्मिकाऽप्रामाण्याग्राहिकाया इत्यर्थः । अनेन विशेषणसत्त्वं सूचितम् । **तज्ज्ञानसामग्र्याः** घटत्वप्रकारकज्ञानसामग्र्याः । **प्रसिद्धेरिति** ।

**अयम्भावः**—घटत्वप्रकारकज्ञाननिष्ठाऽप्रामाण्यज्ञानं घटत्वप्रकारकज्ञानोत्तरमेव भवति न तु तत्पूर्वं तदुत्पत्तिकाले वा, तज्ज्ञाननिष्ठाऽप्रामाण्यग्रहे तत्प्रकारकज्ञानस्य धर्मिज्ञानविधयाऽपेक्षितत्वात् । तथा च घटत्वप्रकारकं ज्ञानं घटत्वाभाववति घटत्वप्रकारकमित्यप्रमात्वग्रहः घटत्वप्रकारकज्ञानोत्तरः । एवं चाऽप्रामाण्यग्राहकसामग्र्यसमवहिता या तद्धर्मप्रकारकज्ञानसामग्री सैव तदप्रामाण्याग्राहकयावज्ज्ञानग्राहकसामग्रीत्वेन प्रसिद्धेति न साध्याप्रसिद्धिस्तादृशसामग्रीजन्यग्रहविषयत्वस्योक्तप्रमात्वे सत्त्वादिति ।

नन्वेवं घटत्वप्रकारकज्ञानेऽप्रामाण्यं कयापि न गृह्येत । तथाहि—तादृशाऽप्रामाण्यग्रहो हि उक्तयुक्त्या घटत्वप्रकारकज्ञानानन्तरमेव भविष्यति न च तत्सम्भवः, घटज्ञानोत्पादकसामग्र्या एव प्रामाण्यग्राहकतया तस्या अप्रामाण्यग्रहविरोधित्वात्, घटज्ञानस्य च नियमतः प्रामाण्यविषयकत्वात् । अतोऽप्रामाण्यग्राहकसामग्रीविरहविशिष्टतत्प्रकारकज्ञानसामग्र्या एव प्रामाण्यग्राहकत्वं स्वीकार्यम्, तथा च गुरुमतेऽपि बाधः सुघट इति चेन्न । गुरुमते ज्ञानमात्रस्यैव यथार्थत्वेन अप्रामाण्यज्ञानानुत्पत्तेरिष्टत्वात् । मिथो भेदाऽग्रहादेव इदं ज्ञानमप्रमेति व्यवहारात् ।

नन्वत्राऽप्रामाण्यं प्रामाण्यविरोधीति स्वयमेव वक्ष्यति दीधितिकारः । विरोधित्वं च तद्वति तत्प्रकारकत्वाभावे, तदभाववति तत्प्रकारकत्वरूपमप्रमात्वे च । तत्रोभयत्र प्रामाण्यविरोधित्वमादायाऽप्रसिद्धिर्वारिता । किन्तु निष्प्रकारकत्वरूपप्रामाण्यविरोधित्वमा-

तादृशी च सामग्री मिश्रादिमते यथाऽनुव्यवसायसामग्री, तथा गुरुमते तत्स्थानाभिषिक्ता व्यवसायसामग्री। ततः स्वप्रकाशात्मकतदङ्कुरत्वादिप्रकारकज्ञानसामग्री-

दायाऽप्रसिद्धिर्दुर्वारैव। तथाहि—घटत्वप्रकारकं ज्ञानं निष्प्रकारकमिति भ्रमसामग्रीकाले एव यद्धर्मप्रकारकज्ञानसामग्री नान्यदा स एव तादृशो धर्मः 'यद्धर्मप्रकारकज्ञानं सामग्र्या न गृह्यते'। घटत्वप्रकारकज्ञानसामग्र्याः अप्रामाण्याग्राहकसामग्रीसमवहितत्वाभावेन विशेषणाभावप्रयुक्तविशिष्टाभावसत्त्वादिति हृदयम्। तथा च यत्र घटज्ञानसामग्रीनियमतो घटज्ञाननिष्ठप्रामाण्यविरोधिनिष्प्रकारकत्वग्राहकसामग्रीसमवहितैव तत्स्थलीयघटज्ञाननिष्ठप्रमात्वस्यापि पक्षान्तर्गततया तत्र च प्रामाण्यविरोध्यग्राहकज्ञानग्राहकसामग्र्यप्रसिद्धया साध्याप्रसिद्धिर्दुर्वारैव। एवं गुरुमते ज्ञानस्य स्वप्रकाशरूपत्वेऽपि निष्प्रकारकत्वग्रहसामग्री न प्रामाण्यग्राहिका प्रामाण्यस्य तत्प्रकारकत्वघटितत्वात्, तथा च निष्प्रकारकत्वग्रहसामग्र्युत्तरं यत्र घट इति ज्ञानं तत्प्रामाण्ये बाधः, तत्प्रामाण्यस्याज्ञायमानतया ज्ञानग्राहकसामग्रीजन्यग्रहविषयत्वस्यापि तत्राभावादित्याशङ्कां निराकुरुते—**वर्तमानेति**। लौकिकत्वनियामकसन्निकर्षादिघटितसामग्र्यां ज्ञानत्वादिविपरीतविषयताप्रयोजकतत्तद्दोषसंवलनमप्रसिद्धमिति सूचयितुं वर्तमानपदम्। **ज्ञानग्राहकसामग्र्या** इति। वर्त्तमानं यज्ज्ञानं तद्विषयकज्ञानजनकसामग्र्या इत्यर्थः। सा च सामग्री गुरुमते व्यवसायोत्पादिकैव, मिश्रमते अनुव्यवसायसामग्री, भट्टमतेऽनुमितिसामग्री अनुपदमेव वक्ष्यति। **ज्ञाने गृह्यमाणे** इति। 'ज्ञानग्राहकसामग्रीजन्य'ज्ञानविषयीभूते ज्ञाने इत्यर्थः। अग्रिमसमाधानस्याऽप्रामाणिकत्वशङ्कानिरासाय पूर्वपक्षिणः सम्मतं दृष्टान्तं प्रथमतो दर्शयति—**यथेति**। ज्ञानत्वविपरीतं ज्ञानत्वाभाव-ज्ञातत्ववद्भेदौ। धर्मविषयकत्वादेर्विपरीतं धर्मविषयकत्वाभाव-धर्मविषयकत्ववद्भेदौ। दार्ष्टान्तिके योजयति—**तथेति**। **सविषयकत्वादेरिति**। अस्यापि विपरीतं न गृह्यते इत्यनेनान्वयः। सप्रकारकत्वविपरीतं निष्प्रकारकत्वम्। तथा च यथा ज्ञानग्राहकसामग्र्यां सत्यां ज्ञानत्वविरुद्ध-ज्ञानत्वाभावग्राहकसामग्र्या विरहेण न ज्ञानत्वाभावग्रहसम्भवः। एवं धर्मविषयकत्वग्राहकसामग्र्यां सत्यां तद्विरुद्धधर्मविषयकत्वाभावग्राहकसामग्र्या अपि न सम्भवः। तथैव तद्वति तत्प्रकारकत्वरूपप्रमात्वग्राहकसामग्रीकाले न तद्विरुद्धनिष्प्रकारकत्वग्राहकसामग्रीसम्भवः। एवं च गुरुमते तादृशधर्मोऽप्रसिद्धो यद्धर्मप्रकारकं ज्ञानं तादृशसामग्र्या न गृह्यते, प्रामाण्यमात्रस्यैव स्वाश्रयज्ञानग्राहकसामग्रीग्राह्यत्वान्न बाधावसरः। **सर्वमतसिद्धमिति**। माध्यमिकनैयायिकमतेऽपि तादृशसामग्रीकाले न दोषसंवलनं, किमु मीमांसकमते इति सूचयितुं सर्वपदमिति ध्येयम्।

सामग्रीं दर्शयति—**तादृशी चेति**। वर्तमानज्ञानग्राहिकेत्यर्थः। **मिश्रादिमते इति**। आदिना भट्टमतपरिग्रहः। **अनुव्यवसायसामग्रीति**। अनुमितिसामग्री चेत्यपि बोध्यम्। **तत्स्थानाभिषिक्तेति**। अनुव्यवसायसामग्रीस्थाने इत्यर्थः। अतः व्यवसायसामग्र्याः स्थानापन्नत्वात्, तदुत्तरं निष्प्रकारकत्वग्रहाभावादेवेति यावत्। **स्वप्रकाशात्मकेति**। स्वविषयकेत्यर्थः। स्वं व्यवसायः। घटत्वप्रकारकज्ञानमिति यावत्। **स्वप्रकाशात्मके**त्यस्य

काले न तत्र निष्प्रकारकत्वभ्रमसामग्रीसम्भव इति। न सप्रकारकत्वग्रहविरोधिदोषघटितनिष्प्रकारकत्वभ्रमसामग्रीसमवहितस्वप्रकाशात्मकतज्ज्ञानसामग्र्यास्तादृशज्ञानप्रामाण्यविरोधिग्राहकत्वोक्तिसम्भवः।

अन्यथा तेषां निर्विषयकत्वभ्रमसामग्रीकाले विषयोपरागाऽसम्भवेन स्वप्रकाशात्मकज्ञानसामग्री विषयानुपरक्तमपि ज्ञानं गृह्णातीति स्वीकारापत्तेः।

यद्यपि तदङ्कुरप्रकारकज्ञानमन्तरेणापि जातायां धर्म्यगृहीताऽसंसर्गकतदङ्कुरविशेष्यकज्ञानात्मकतदङ्कुरभ्रमजन्यतदङ्कुरप्रकारकविसंवादीच्छायां गृहीतस्य तदङ्कु-

---

तदङ्कुरत्वप्रकारकज्ञानेऽन्वयः। तदङ्कुरत्वादिप्रकारकज्ञानसामग्रीकाले इति। घटत्वादिप्रकारकज्ञानसामग्रीकाले इत्यर्थः। तत्र काले। न सामग्रीसम्भव इति न सामग्री कल्प्यते इत्यर्थः। इति अतः, स्वप्रकाशात्मकतदङ्कुरादिप्रकारकज्ञानसामग्रीकाले निष्प्रकारकत्वभ्रमसामग्र्यसम्भवादेव। सप्रकारकत्वग्रहविरोधीति दोषविशेषणम्। दोषस्याऽप्रमाजनकत्वात्। तज्ज्ञानसामग्र्याः घटत्वप्रकारकज्ञानसामग्र्याः, तादृशज्ञानं घटत्वप्रकारकं ज्ञानं तन्निष्ठं यत्प्रामाण्यं तद्विरोधी यो निष्प्रकारकत्वग्रहः तज्जनकत्वोक्तिर्न सम्भव इत्यर्थः। तदा निष्प्रकारकत्वभ्रमसामग्रीसमवधानाभावादिति भावः। तादृशभ्रमसामग्रीसमवहितघटत्वप्रकारकज्ञानसामग्री निष्प्रकारकत्वभ्रमजनिका इत्यपि न शक्यते वक्तुम्, विशेष्यीभूततज्ज्ञानसामग्र्यास्तादृशभ्रमसामग्रीसमवहितत्वाभावादिति तत्त्वम्। अन्यथा तज्ज्ञानसामग्र्याः निर्विषयकत्वग्राहकसामग्रीसमवहितत्वे, तेषां गुरूणां, निर्विषयकत्वभ्रमसामग्रीकाले। तज्ज्ञानसामग्रीमति चेति शेषः। निर्विषयकत्वेति। निष्प्रकारकत्वादीनामुपलक्षणम्। तस्यैवाशङ्क्यमानतया तदुपादानात्। विषयोपरागाऽसम्भवेन विषयविषयकत्वाऽसम्भवेन। विषयानुपरक्तमपीति। निर्विषयकमपीत्यर्थः। विषयो भासते प्रकारो न भासते इत्यपि बालप्रसारणमात्रम्। एवं च निष्प्रकारकत्वभ्रमसामग्रीकालीनज्ञानग्राहकसामग्र्युत्तरं ज्ञानस्यैवाऽसम्भवात्कुतस्तत्प्रामाण्यस्याऽज्ञायमानत्वम्, तादृशसामग्र्या ज्ञानग्राहकत्वे निर्विषयकत्वभ्रमसामग्रीकालीनसामग्र्या अपि ज्ञानग्राहकत्वसम्भवात्तज्ज्ञानेन निर्विषयकत्वस्यापि विषयीकरणाद्विषयभानाऽसम्भवेन तज्ज्ञानस्य विषयानुपरक्तत्वस्वीकारापत्तेः। तथा च यथा निर्विषयकत्वभ्रमकालीनसामग्र्या ज्ञानग्राहकत्वं नास्ति, तथा निष्प्रकारकत्वभ्रमसामग्रीकालीनसामग्र्या अपि ज्ञानग्राहकत्वं नास्तीति न गुरुमतेऽज्ञायमानप्रामाण्यप्रसिद्धिरिति समुदितार्थः।

तदभाववति तत्प्रकारकत्वरूपाऽप्रमात्वाश्रयसामग्रीकाले एव घटत्वप्रकारकज्ञानसामग्री नान्यदा, इत्याशङ्कायां कृतायां गुरुमते भ्रमात्मकज्ञानस्य ज्ञानद्वयरूपतया तत्प्रकारकज्ञानत्वाभावेन तद्घटितभ्रमत्वमेवाऽप्रसिद्धमित्याशङ्कां विसंवादीच्छायां तत्प्रकारकत्वघटितभ्रमत्वप्रसिद्धिं दर्शयन्निराकरोति—यद्यपीत्यादिना। इदं रजतं मे भूयादित्यादि विसंवादिनीच्छां प्रति बाधनिश्चयाभावसहकृततदङ्कुरविशेष्यकज्ञानं भ्रमात्मकं कारणम्। तादृशेच्छायां रजतत्वाभाववति रजत'त्व'प्रकारकत्वस्य प्रसिद्धिः।

---

राभाववति तदङ्कुरप्रकारकत्वस्योपस्थित्या तदङ्कुरप्रकारकज्ञानसामग्रीदशायां नियमत उपस्थिततादृशधर्मसाकाङ्क्षतादृशज्ञानरूपधर्मिज्ञानरूपाऽप्रामाण्यभ्रमसामग्रीसम्भवः ।

---

तथा चाऽप्रामाण्यभ्रमसामग्रीसम्भव इति भावः । तथा च गुरुमतेऽपि साध्याप्रसिद्धिरिति शङ्कितुराशयः ।

ननु तादृशेच्छैवाऽप्रसिद्धा, तज्जनकीभूततदङ्कुरप्रकारकभ्रमात्मकज्ञानाऽप्रसिद्धेरित्यत आह—तदङ्कुरप्रकारकज्ञानमन्तरेणापि जातायामिति । तदङ्कुरादिमति तदङ्कुरप्रकारकज्ञानं विनैव जातायामित्यर्थः । इदं रजतमिति प्रमात्मकज्ञानं विनैव जातायामिति यावत् । प्रकारता चात्र तादात्म्येन बोध्या । यदि तदङ्कुरप्रकारकप्रमात्मकज्ञानानन्तरमिच्छा स्यात्तदा तादृशाङ्कुरप्रकारकज्ञानजनिका सामग्र्येवाऽप्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन प्रसिद्धा स्यादिति गुरुमते साध्याप्रसिद्धिर्न स्यादित्यतोऽप्युक्तं—तदङ्कुरप्रकारकज्ञानमन्तरेणापि जातायामिति । रजत'त्व'प्रकारकज्ञानमन्तरेणापि जातायामित्यर्थः । ननु तथापि तत्प्रकारकेच्छां प्रति तत्प्रकारकज्ञानस्य कारणतया गुरुमते भ्रमात्मकज्ञानमात्रस्य ज्ञानद्वयात्मकतया तत्प्रकारकत्वाऽसम्भवः, एवमिदं रजतमिति बुद्धौ इदं रजतत्वाभाववदिति इदं रजतभिन्नमिति वा बाधनिश्चयोऽपि प्रतिबन्धक इत्यत आह—धर्म्यगृहीतासंसर्गकेति । धर्मिणि अगृहीतः असंसर्गो यत्रेति व्युत्पत्त्या बाधनिश्चयभावसहकृतेत्यर्थः । तदङ्कुरविशेष्यकेति । रजत'त्व'विशेष्यकेत्यर्थः । तदङ्कुरभ्रमजन्येति । अस्मिन् रजतत्वम्, रजतमिदमिति भ्रमजन्येत्यर्थः । गुरुमते भ्रमस्य ज्ञानद्वयात्मकत्वे तत्प्रकारकत्वविरहेऽपि रजतत्वविशेष्यकत्वे न विवाद इति भावः । एतेन 'अविवादेन' तदङ्कुरप्रकारकज्ञाननिष्ठप्रमात्वमादायैव साध्यसत्त्वनिर्वाह इति निरस्तम् । तदङ्कुरप्रकारकेति । रजत'त्व'प्रकारकेत्यर्थः । विसंवादीच्छायां रजतत्वेन शुक्त्यवगाहिविसंवादीच्छायाम् 'इदं रजतं मे भवतु' इत्याकारिकायां, गृहीतस्य इच्छाविषयीभूतस्य, प्रसिद्धस्येति यावत् । तदङ्कुराभाववति तदङ्कुरप्रकारकत्वस्येति । रजतत्वाभाववति रजतत्वप्रकारकत्वस्येत्यर्थः । उपस्थित्येति । अस्य सम्भव इत्यनेनाऽन्वयः । तदङ्कुरप्रकारकज्ञानसामग्रीदशायामिति । रजतत्वप्रकारकज्ञानसामग्रीदशायामित्यर्थः । भ्रमसामग्रीदशायामिति यावत् । ननु रजतत्वप्रकारकज्ञानसामग्रीसम्भवेऽपि तत्सामग्रीकाले न रजतत्वाभाववति रजतत्वप्रकारकत्वरूपभ्रमसामग्रीसम्भवः, गुरुमते भ्रमस्य ज्ञानद्वयात्मकत्वेन तत्प्रकारकत्वसामग्र्या अप्रसिद्धेरित्यत आह—नियमत इति । अनियमे तु अप्रामाण्याग्राहकसाध्यघटकसामग्री प्रसिद्धा स्यात् । उपस्थिततादृशधर्मेति । तदङ्कुराभाववति तदङ्कुरप्रकारकत्वरूपेत्यर्थः । तत्साकाङ्क्षो यस्तादृशज्ञानरूपो धर्मी तदङ्कुराभाववति तदङ्कुरप्रकारकत्वरूपधर्मसाकाङ्क्षो य इदं रजतमिति ज्ञानरूपो धर्मी तद्विषयकं यदिदं रजतमिति ज्ञानं रजताभाववति रजतप्रकारकम् अप्रामाण्यभ्रमरूपं तत्सामग्रीसम्भव इत्यर्थः । साकाङ्क्षत्वं धर्मिविशेषणम् । तेन वह्निसाकाङ्क्षत्वं ह्रदादौ स्वीक्रियते । आकाङ्क्षा च धर्मधर्मिणोर्विशेष्यविशेषणभावः । निष्प्रकारकत्वादेरुक्तयुक्त्या ज्ञानेऽभानात्तद्धर्मितावच्छेदककाऽप्रामाण्यग्रहोऽप्रसिद्धः इति तमादाय न बाधसम्भव

तथापि तादृशाऽप्रामाण्यभ्रमस्य ग्राह्याभावानवगाहितया प्रामाण्यग्रहाप्रतिबन्धकत्वेन तत्सामग्र्या अपि न प्रामाण्यग्रहप्रतिबन्धकग्रहजनकत्वम् ।

कर्मणि ल्युटा ज्ञानस्य प्रामाण्यमिति विषयत्वार्थकषष्ठ्या वा ज्ञायमानपरमिति ।

पूर्वं तादृशाऽप्रामाण्यावच्छेदेन ज्ञाने प्रामाण्यविरहग्रहोपगमेन तत्प्रतिबन्धकत्वोपपादने च तादृशाऽप्रामाण्यग्रहस्यैव प्रामाण्यविषयकतया तत्सामग्री ग्राह्यतयैव तत्प्रामाण्ये साध्यसत्त्वनिर्वाह इति सर्वं समञ्जसम् ।

---

इति । धर्मिज्ञानत्वस्य भ्रमत्वधर्मितावच्छेदकत्वानुधावनम्, साकाङ्क्षत्वकथनं भ्रमत्वनिर्वाहकाऽसंसर्गाग्रहलाभायैवेति ध्येयम् । तथा च यत्र रजतप्रकारकज्ञानसामग्रीकाले नियमत इच्छायां प्रसिद्धस्य तदभाववति तत्प्रकारकत्वस्योपस्थितिसामग्री वर्तते तत इदं रजतमिति ज्ञानं 'ज्ञानद्वयात्मकं' तन्निष्ठप्रामाण्यस्यापि पक्षान्तर्गततया तत्रोपस्थितिसामग्र्या अप्रामाण्यग्राहकतया तदप्रामाण्याग्राहिका ज्ञानग्राहिका च तदन्या सामग्री तज्जन्यग्रहविषयत्वस्याभावाद् गुरुमतेऽपि बाध इति पूर्वपक्षिहृदयम् ।

समाधत्ते—तथापीति । तादृशाऽप्रामाण्यग्रहस्य इदं तदङ्कुरप्रकारकं ज्ञानं तदङ्कुराभाववति तदङ्कुरप्रकारकमिति भ्रमत्वधर्मितावच्छेदककाऽप्रामाण्यज्ञानस्येत्यर्थः । ग्राह्याभावानवगाहितयेति । ग्राह्यं तद्वति तत्प्रकारकत्वं, तदभावानवगाहित्वादित्यर्थः । तथा च तादृशाऽप्रमात्वग्रहो न प्रमात्वग्रहविरोधी किन्तु तद्वति तत्प्रकारकत्वाभावनिश्चय एव; एवं तादृशाप्रामाण्यग्राहकसामग्री अपि न प्रामाण्यग्रहविरोधिनी प्रामाण्यविरोध्यग्राहकत्वादित्याह—तत्सामग्र्या अपीति । तादृश अप्रामाण्यग्राहकसामग्र्या अपीत्यर्थः । न प्रामाण्यग्रहप्रतिबन्धकग्रहजनकत्वमिति । तादृशाऽप्रामाण्यग्रहस्य प्रतिबन्धकत्वाभावादिति भावः । तथा चाऽप्रामाण्यग्राहकसामग्र्या स्वपदग्राह्यतया न बाधो गुरुमते इति ध्येयम् । ननु यत्र तदङ्कुराभाववति तदङ्कुरप्रकारकं ज्ञानं तदङ्कुरादिमति तदङ्कुरप्रकारकत्वाभाववदिति प्रामाण्यविरोधिज्ञानग्राहकसामग्री तदङ्कुरप्रकारकज्ञानग्राहकसमवहितैव ततस्तदङ्कुरप्रकारकं ज्ञानं तत्र तादृशसामग्र्याः प्रामाण्यविरोध्यग्राहकत्वविरहेण स्वपदाग्राह्यतया बाधतादवस्थ्यमत आह—पूर्वमिति । तादृशाऽप्रामाण्यावच्छेदेनेति । तदङ्कुराभाववति तदङ्कुरप्रकारकत्वावच्छेदेनेत्यर्थः । ज्ञाने तदङ्कुराभाववति तदङ्कुरप्रकारकमिति ज्ञाने । प्रामाण्यविरहग्रहोपगमेनेति । तदङ्कुरादिमति तदङ्कुरप्रकारकत्वाभावोपगमेनेत्यर्थः । तत्प्रतिबन्धकत्वोपपादने चेति । प्रमात्वग्रहविरोधित्वोपपादने चेत्यर्थः । तादृशाऽप्रामाण्यग्रहस्यैवेति । तदङ्कुराभाववति तदङ्कुरप्रकारकं ज्ञानं तदङ्कुरादिमति तदङ्कुरप्रकारकत्वाभाववदिति ग्रहस्यैवेत्यर्थः । एवकारेण घट इति ज्ञाननिष्ठप्रमात्वाभावव्यावृत्तिः । प्रामाण्यविषयकतया तादृशग्रहस्य प्रमात्वविषयकतया, प्रमात्वाश्रयतया चेत्यपि बोध्यम्, तत्सामग्रीग्राह्यतयैव तादृशज्ञाने तादृशप्रामाण्यग्राहकसामग्रीग्राह्यतयैवेत्यर्थः । तत्प्रामाण्ये पक्षीभूतज्ञाननिष्ठप्रामाण्ये, साध्यसत्त्वनिर्वाह इति । तथा च न बाध इति भावः । तादृशसामग्र्या

तन्न। तादृशज्ञानप्रामाण्यत्वेन रूपेण ज्ञानाज्ञानयोर्बाधबुद्ध्यसम्भवात्।

---

ज्ञानपदोपादानेऽपि कथं तज्ज्ञानव्यावृत्तिरित्यपेक्षायामाह—कर्मणि ल्युटेति। 'कृत्यल्युटो बहुलमि'ति सूत्रानुशिष्टेनेत्यादिः। ज्ञायमानपरमिति। निर्वाच्यसामग्रीजन्यज्ञानविषयार्थकमित्यर्थः। एतदपि न पक्षतावच्छेदकघटकम्, प्रमापदप्रवृत्तिनिमित्तत्वेन पक्षत्वे प्रमापदप्रवृत्तिनिमित्ताश्रयग्राहकसामग्रीजन्ययावद्ग्रहविषयत्वस्य च क्वचिदपि प्रामाण्येऽसत्त्वाद् घटत्ववति घटत्वप्रकारकताश्रयग्राहकसामग्रीजन्ययावदग्रहयावद्ग्रहविषयत्वादेरेव अंशतो बाधेन विशिष्य तत्तद्धर्मघटितप्रामाण्यानां पक्षत्वस्योपगन्तव्यतयाऽव्यावर्तकत्वात्, किन्तु विशिष्य ज्ञायमानप्रामाण्यमेव पक्षो नोक्तप्रामाण्यमिति सूचनाय ज्ञानपदमिति ध्येयम्।

---

अपि स्वपदग्राह्यत्वादिति यावत्। यत्तु प्रामाण्यविषयकतयेत्यस्य प्रमात्वाभावग्रहस्य प्रतियोगिकोटौ धर्म्यंशे तत्प्रकारकत्वावगाहितया प्रमात्वघटिततया प्रमात्वावगाहितया प्रामाण्यावगाहित्वादिति व्याख्यानम्, तन्मतं मूर्खतापूर्णमेव। एवमपि तादृशसामग्र्याः प्रामाण्यविरोध्यग्राहकत्वाभावादिति ध्येयम्। ज्ञानपदोपादानेऽपीति। पक्षांशे इत्यादिः। कथं तज्ज्ञानव्यावृत्तिरिति। कथमज्ञायमानज्ञाननिष्ठप्रामाण्यवारणमित्यर्थः। अज्ञायमानप्रामाण्यस्य ज्ञाननिष्ठत्वादिति शेषः। कर्मणि ल्युटेति। ज्ञायमानपरमित्यनेनान्वयः। ज्ञानपदं प्रसङ्गादायातम्। तथा च ज्ञानं च तत्प्रामाण्यं चेति कर्मधारयाद् ज्ञानस्य प्रामाण्यमिति षष्ठीतत्पुरुषाद्वा तादृशार्थलाभ इति भावः। निर्वाच्या वक्ष्यमाणा, या व्यवसाय-अनुव्यवसाय-अनुमिति-सामग्री, तज्जन्यग्रहविषयार्थकमिति भावः। एतदपि ज्ञायमानत्वमपि। न पक्षतावच्छेदकघटकमिति। ननु तर्हि ज्ञायमानार्थकज्ञानपदं व्यर्थमेवेत्याह—प्रमापदप्रवृत्तिनिमित्तत्वेनेति। सामान्यत इत्यादिः। प्रमात्वत्वेनेति भावः। पक्षे प्रमापदप्रवृत्तिनिमित्तत्वेन प्रवेशे स्वाश्रयग्राहकेत्यादि साध्यघटकस्वपदेनापि प्रमापदप्रवृत्तिनिमित्तत्वेनैव प्रवेशमाह—प्रमापदप्रवृत्तिनिमित्तत्वेनेति। सामान्यत इत्यादिः। असत्त्वादिति। तथा च ज्ञानपदनिवेशेऽपि सामान्यतः 'प्रमापदप्रवृत्तिनिमित्त'प्रमात्वाश्रयज्ञानग्राहकयावत्सामग्रीग्राह्यत्वस्याऽप्रसिद्ध्या साध्याप्रसिद्धिरिति भावः। साध्यकुक्षौ स्वपदेन तत्तत्प्रमात्वावधारणे बाधमाह—घटत्ववतीति। अंशतः सामानाधिकरण्येन। बाधेनेति। घटत्ववति घटत्वप्रकारकत्वरूपतत्तत्प्रमात्वाश्रयज्ञानग्राहकसामग्रीग्राह्यत्वस्य पक्षान्तर्गत-पटत्ववति पटत्वप्रकारकत्वे विरहाद् बाधेनेत्यर्थः। विशिष्य तत्तद्धर्मघटितप्रामाण्यानामिति। घटत्ववति घटत्वप्रकारकत्वरूपप्रामाण्यस्येत्यर्थः। पक्षत्वस्योपगन्तव्यतयेति। साध्यघटकत्वस्य चेति शेषः। तथा च नासिद्धिबाधौ। अव्यावर्तकत्वादिति। ज्ञानपदस्येत्यादिः। तर्हि ज्ञानपदं व्यर्थमेवेत्यत आह—किन्त्विति। विशिष्येति। घटत्ववति घटत्वप्रकारकज्ञानत्वत्वेन रूपेणेत्यर्थः। नोक्तप्रामाण्यमिति। अगृहीतज्ञाननिष्ठप्रामाण्यं न पक्ष इत्यर्थः।

दीधितौ—ज्ञानाज्ञानयोरिति। तद्वति तत्प्रकारकत्वविशिष्टज्ञानत्वत्वेन तादृशज्ञानत्वात्मकप्रामाण्यरूपपक्षस्य ज्ञाने अज्ञाने च सतीत्यर्थः। बाधबुद्ध्यसम्भवादिति।

तादृशज्ञानप्रामाण्यत्वेन तदङ्कुरत्वादिमति तदङ्कुरत्वप्रकारकज्ञानत्वत्वप्रकारेण। ज्ञानाज्ञानयोरिति। ज्ञाने तादृशसामग्र्या एव ज्ञानत्वतत्प्रकारकत्वयोर्वैशिष्ट्यादिघटकतया ज्ञानग्राहकत्वेन प्रामाण्याग्राहकत्वेन च भट्टमतसिद्धभिन्नसामग्रीत्वेन च तामादायैव साध्यसत्त्वोपपत्तेः। अज्ञाने च पक्षतावच्छेदकतादृशप्रामाण्यत्वेन साध्यघटकं यत्प्रामाण्यं तदाश्रयज्ञानविषयकत्वस्य तद्विशेष्यतया साध्यघटकीभूते ग्रहेऽभावग्रहाऽसम्भवादित्यर्थः।

---

तादृशपक्षज्ञाने पक्षतावच्छेदकीभूत-तद्वति तत्प्रकारकत्वविशिष्टज्ञानत्वत्वज्ञानं कारणम्। ज्ञानत्वे वै० सामानाधिकरण्यसम्बन्धेन। तथा च वैशिष्ट्यघटकतया ज्ञानस्य प्रवेशात्तादृशज्ञानविषयकं पक्षज्ञानं तज्जनकसामग्रीजन्यज्ञानविषयत्वस्य प्रमात्वे सत्त्वान्न बाधः। पक्षाऽज्ञाने च साध्यघटकस्वपदग्राह्यं यदज्ञायमानज्ञानप्रामाण्यं तदाश्रयज्ञानविषयकत्वाभावग्रहासम्भवात्। ग्रहे तादशविषयकत्वाभावज्ञानमेव न सम्भवति, तस्य प्रतियोगिज्ञानाधीनत्वादिति भावः। टीकायां—प्रामाण्याग्राहकत्वेनेति। भट्टमतसिद्धेति। भट्टमतसिद्धा या सामग्रीत्यर्थः। अस्यामेव तृतीयान्तद्वयं विशेषणम्। तृतीयाद्वयी च प्रकारे। प्रामाण्याग्राहिका ज्ञानग्राहिका च या भट्टमतसिद्धसामग्री तदन्यसामग्रीत्वेनेत्यर्थः। तां सामग्रीम्। साध्यसत्त्वोपपत्तेरिति। बाधबुद्ध्यसम्भव इति शेषः। तथा च मिश्रमते पक्षतावच्छेदकरूपेण पक्षज्ञाने सति न तादृशाज्ञायमानज्ञाननिष्ठप्रामाण्ये बाधः सम्भवति, पक्षे ज्ञानपदासत्त्वे साध्यघटकज्ञानपदं स्वाश्रयज्ञानमात्रपरम्, तथा च पक्षीभूततादृशप्रामाण्ये स्वाश्रयज्ञानग्राहकसामग्रीग्राह्यत्वरूपसाध्यघटकस्वपदग्राह्यतद्वति तत्प्रकारकत्वरूपप्रामाण्याश्रयवैशिष्ट्यघटकज्ञानविषयको यः पक्षज्ञानात्मको ग्रहस्तज्जनकसामग्रीजन्यग्रहविषयत्वरूपसाध्यस्यैव सत्त्वात्, तादृशसामग्र्याश्च प्रामाण्यग्राहकत्वेन प्रामाण्याग्राहिका ज्ञानग्राहिका च या भट्टमतसिद्धसामग्री तदन्यत्वेनाऽप्रामाण्याग्राहकत्वमपीति भावः।

अत्रेदं बोध्यम्—एकैव सामग्री प्रामाण्यग्राहिका 'प्रामाण्यविषयकं यत्पक्षज्ञानं तज्जनिका' उक्तरीत्या प्रामाण्याश्रयज्ञानग्राहिकापीति, अज्ञायमानज्ञाननिष्ठप्रामाण्यत्वावच्छेदेन साध्यसत्त्वस्य सुसम्पादनीयत्वात्।

अज्ञाने चेति। सतीति शेषः। पक्षतावच्छेदकरूपेण पक्षाऽज्ञाने सतीति यावत्। बाधबुद्ध्यसम्भवादित्यनेनान्वयः। अज्ञायमानज्ञाननिष्ठप्रामाण्ये इत्यादिः। अत्र च साध्याभाववत्पक्षो न बाधः किन्तु साध्यसत्त्वानिर्वाहरूपः। साध्यसत्त्वानिर्वाहश्च साध्याप्रसिद्धिमूलक एव। न हि कोऽपि अप्रसिद्धपदार्थस्य सत्त्वं प्रतिपादयितुमीष्टे इति अज्ञायमानप्रामाण्यरूपपक्षे साध्यसत्त्वसाधनाऽसम्भवाद् बाधः सुसम्पन्न इति ध्येयम्। साध्याप्रसिद्धिस्तु तादृशप्रामाण्याश्रयज्ञानाऽप्रसिद्ध्या दत्ता। पक्षाऽज्ञाने तु तद्बुद्ध्यसम्भवादिति भावः। बुद्ध्यसम्भवमेव विवृणोति—साध्यघटकं यत्प्रामाण्यमिति। साध्यघटकस्वपदग्राह्यं यदज्ञायमानज्ञाननिष्ठप्रामाण्यमित्यर्थः। तदाश्रयेति। तादृशप्रामाण्याश्रयेत्यर्थः। अज्ञायमानज्ञाननिष्ठप्रामाण्याश्रयविषयकत्वस्येति भावः। अस्याऽभावेऽन्वयः। तद्विशेष्यतया तादृशप्रमात्वाश्रयविषयकत्वविशेष्यतया, साध्यघटकीभूते

विधौ सिद्धसाधनस्य निषेधे बाधस्याऽप्रसिद्धेर्वा वारणाय यावदिति फलतो ग्रहविशेषणम् ।

---

न च तत्र तदभावग्रहासम्भवेन तदंशे तद्वत्त्वघटितविशिष्टसाध्यज्ञानप्रतिबन्धासम्भवेऽपि तद्घटितविशिष्टसाध्यविषयिण्या वाद्युद्देश्यानुमितेर्भ्रमत्वं दुर्वारमेवेति वादिनिग्रहप्रसङ्ग इति वाच्यम् । मध्यस्थादेरपि तादृशप्रामाण्यत्वरूपपक्षतावच्छेदकप्रकारकपक्षाज्ञानेन तदवच्छिन्न उक्त साध्यस्यानुमित्यावगाहनाऽसम्भवात् प्रतिवादिना तदुद्भावनाऽसम्भवाच्च । प्रामाण्यपदार्थस्य दर्शितरीत्या ज्ञानत्वघटिततया इच्छावृत्तेर्घटत्ववति घटत्वप्रकारकत्वादेरिच्छादिग्राहकाग्राह्यत्वाद् बाधवारकतया ज्ञानपदसार्थक्यसम्पादनं मिश्राणामतितुच्छमिति तन्नोपन्यस्तम् ।

विधौ इति । मीमांसकैः साध्य इति शेषः । सिद्धसाधनस्येति । प्रामाण्यानुमिति-

---

ग्रहे साध्यघटकद्वितीयग्रहे । अभावग्रहाऽसम्भवादिति । तादृशप्रामाण्याश्रयज्ञानविषयकत्वाभावग्रहासम्भवादित्यर्थः । ग्रहे तादृशप्रामाण्याश्रयज्ञानविषयकत्वविरहादेव साध्याप्रसिद्धिराशङ्किता, परन्तु तादृशविषयकत्वाभावज्ञानमेव न सम्भवति, तस्य प्रतियोगिज्ञानाधीनत्वादिति भावः । तथा च पक्षतावच्छेदकविशिष्टपक्षाज्ञाने साध्याप्रसिद्धिविरहेण साध्यवत्त्वानुमितिप्रतिबन्धकत्वोक्तिर्मिश्राणां न सङ्गच्छते इति ध्येयम् ।

शङ्कते—न चेति । तत्र साध्यघटकीभूतद्वितीयग्रहे, तदभावग्रहाऽसम्भवेन तादृशप्रामाण्याश्रयज्ञानविषयकत्वाभावग्रहासम्भवेन, साध्याप्रसिद्धिज्ञानासम्भवेनेति यावत् । तदंशे साध्यघटकीभूतद्वितीयग्रहे । तद्वत्त्वघटितेति । तद्वति तत्प्रकारकज्ञानत्वाश्रयविषयकत्वघटितेत्यर्थः । विशिष्टसाध्यज्ञानप्रतिबन्धासम्भवेऽपीति । तद्वति तत्प्रकारकज्ञानत्वाश्रयज्ञानविषयकग्रहजनकसामग्रीजन्यग्रहविषयत्वरूपसाध्यज्ञानप्रतिबन्धासम्भवेऽपीत्यर्थः । पक्षज्ञानाभावे साध्याप्रसिद्धिज्ञानस्यासम्भवादिति भावः । तद्घटितेति । तद्वति तत्प्रकारकज्ञानत्वाश्रयज्ञानविषयकत्वघटितेत्यर्थः । विशिष्टसाध्यविषयिण्या इति । तद्वति तत्प्रकारकज्ञानत्वाश्रयज्ञानविषयकग्रहजनकेत्यादिसाध्यविषयिकाया इत्यर्थः । वाद्युद्देश्यकानुमितेः मीमांसकमतसिद्धानुमितेः । भ्रमत्वं दुर्वारमिति । तादृशविषयकत्वाभाववति द्वितीयग्रहे तादृशविषयकत्वावगाहित्वरूपं भ्रमत्वं दुर्वारमिति भावः । एवं तादृशग्रहविषयत्वाभाववति तादृशप्रामाण्ये तादृशग्रहविषयत्वावगाहितयापि भ्रमत्वं बोध्यम् । तदवच्छिन्ने प्रमात्वत्वावच्छिन्ने । अवगाहनाऽसम्भवादिति । पक्षज्ञानाभावेनोक्तानुमितेरेवाऽसम्भवादिति भावः । तदुद्भावनासम्भवादिति । तदनुमितिर्भ्रमात्मिकेति नैयायिकैरुद्भावनासम्भवादित्यर्थः । अनुमितिरूपपक्षज्ञानाभावादिति भावः । ज्ञानत्वघटिततयेति । तेनैव वक्ष्यमाणबाधवारणसम्भवादिति शेषः । तन्नोपन्यस्तमिति । बाधवारकतया ज्ञानपदसार्थक्यसम्पादनं नोपन्यस्तमित्यर्थः । वैशिष्ट्यघटकतयापि ज्ञानस्य प्रवेशान्न बाधावसरः ।

दीधितौ—विधौ विधिकोटौ, तद्प्रामाण्याग्राहकज्ञानग्राहकयावत्सामग्रीजन्यग्रहविषयत्वरूपविधिकोटौ । नैयायिकमतेन सिद्धसाधनमाह—प्रामाण्यानुमितिसामग्री-

सामग्रीमादायैवेत्यादिः । निषेधे नैयायिकैः साध्ये, तादृशसामग्रीग्राह्यत्वमादायैव बाधस्य वारणायेत्यन्वयः । घटज्ञानं प्रमा सर्वमभिधेयमित्यादिज्ञानविषयत्वस्य केवलान्वयित्वेन यावत्त्वाघटितसाध्याप्रसिद्धावप्यभावसाधने पक्षे प्रतियोगिमत्त्वमेव बाध इत्याशयेनेदम् । अप्रसिद्धेर्वेति । समुच्चये वाकारः । उक्तबाधपक्षेऽपि साध्याप्रसिद्धिसत्त्वेन परस्परव्यवच्छेदरूपविकल्पासम्भवात् ।

अथवा उक्तमीमांसकसाध्ये पक्षनिष्ठाभावप्रतियोगित्वसाधनेनापि नैयायिकस्य कृतकृत्यतया तत्साधनाभिप्रायेण बाधस्येत्युक्तम् । तदभावसाधनाभिप्रायेण अप्रसिद्धेर्वेति ।

---

मादायैवेति । इदं ज्ञानं प्रमा सफलप्रवृत्तिजनकत्वादित्यनुमितिसामग्रीमादायैवेत्यर्थः । एवकारेण गुरुमिश्रभट्टमतसिद्धसामग्रीव्यवच्छेदः । तथा च यावत्त्वानुपादाने पक्षीभूतज्ञानप्रामाण्ये सफलप्रवृत्तिजनकत्वलिङ्गकानुमितिसामग्रीजन्य-'अनुमित्यात्मक'ग्रहविषयत्वस्य सत्त्वात् नैयायिकमते सिद्धसाधनम्, एवं तादृशसामग्रीजन्यग्रहविषयत्वाभावरूपनिषेधकोटौ तादृशानुमितिसामग्रीग्राह्यत्वस्यैव 'तादृशानुमितिसामग्रीग्राह्यत्वाभावाभावरूपसाध्याभाव'सत्त्वाद् बाधः स्यात् । यावत्त्वोपादाने च तादृशयावत्सामग्र्यन्तर्गताऽनुव्यवसायादिग्राह्यत्वाऽस्वीकारेण न सिद्धसाधनम् । तादृशसामग्रीग्राह्यत्वाभावरूपसाध्यसाध्यस्यैव सत्त्वेन न बाध इति भावः ।

ननु यावत्त्वानिवेशे कथं बाधः, साध्याभाववत्पक्षो हि बाधः, प्रकृते साध्यस्याऽप्रसिद्धया तदभावोऽपि अप्रसिद्धोऽतोऽभावसाध्यकस्थले पक्षे साध्यात्मकाभावप्रतियोगित्वमेव बाध इति सिद्धान्तयितुं साध्याप्रसिद्धिं दर्शयति—यावत्वाघटितसाध्याप्रसिद्धावपीति । यावत्त्वानुपादाने साध्याप्रसिद्धावपीत्यर्थः । तथा च स्वपदग्राह्यघटज्ञाननिष्ठप्रमात्वाश्रय'घटज्ञान'विषयको यः घटज्ञानं प्रमा इति ग्रहस्तज्जनकसामग्रीजन्यो यः घटज्ञानं प्रमा सर्वमभिधेयमिति समूहालम्बनग्रहस्तद्विषयत्वस्य केवलान्वयितया तदभावरूपसाध्याप्रसिद्धया यावत्त्वानुपादानेऽपि न बाध इति भावः । साध्याप्रसिद्धिसत्त्वेऽपि बाधं सम्पादयति—अभावसाधने इति । अभावसाध्यकस्थले इत्यर्थः । प्रकृते तादृशसामग्रीजन्यग्रहविषयत्वाभावसाध्यकस्थले इति यावत् । प्रतियोगिमत्त्वमेवेति । साध्यात्मकाभावप्रतियोगिमत्त्वमेवेत्यर्थः । एवकारेण साध्याभाववत्पक्षस्य व्यवच्छेदः । इदं बाधकथनम्, तथा च ज्ञानप्रामाण्यरूपपक्षे तादृशविषयत्वाभावरूपसाध्यप्रतियोगितादृशविषयत्वसत्त्वाद् बाधः सम्पन्न इति ध्येयम् । ननु तर्हि वाकारोऽसङ्गतः, विकल्पाभावादित्यत आह—समुच्चये वाकार इति । अप्रसिद्धिर्बाधश्चेत्यर्थः । उक्तबाधपक्षेऽपि । पक्षेऽभावप्रतियोगिमत्त्वरूपबाधपक्षेऽपि । साध्याप्रसिद्धिसत्त्वेनेति । तादृशविषयत्वाभावाप्रसिद्धिसत्त्वेनेत्यर्थः । तथा च समुच्चय इति भावः ।

नन्वेवमननुगमः—भावसाध्यकस्थले पक्षे, भावप्रतियोगिमत्त्वरूपबाधाऽसम्भवेनाऽन्यादृशस्यापि वक्तव्यत्वापातादित्यत आह—अथवेति । उक्तमीमांसकसाध्ये इति । मीमांसकाभिमतोक्तसाध्ये इत्यर्थः । तादृशसामग्रीजन्यग्रहविषयत्वरूपसाध्ये इति यावत् । पक्षनिष्ठाभावप्रतियोगित्वसाधनेनापीति । स्वतोग्राह्यत्वे 'तादृशसामग्रीजन्य-

प्रसिद्धसाध्यके एव बाध इत्याशयेन वाकारसङ्गतिः। अन्यथा अप्रसिद्धिर्बाधश्च द्वयं द्वितीयपक्षे दूषणमवगन्तव्यम्।

ननु सामग्र्यां यावत्त्वविशेषणमयुक्तम्, यावत्सामग्रीजन्यग्रहाप्रसिद्धेः, न हि सर्वाभिर्ज्ञानसामग्रीभिः किमपि ज्ञानं जन्यते, यदि च यावतीः सामग्रीः प्रातिस्विकरूपेणोपादाय तत्तज्जन्यग्रहविषयत्वं साध्यते तदा तदन्तर्गताऽनुमितिसामग्र्यादिजन्यत्वसाधने सिद्धसाधनादिकमेव दुर्वारम्, अनुव्यवसायादिसामग्रीणां ताद्रूप्येण प्रवेशे मतत्रयसाधारण्यानिर्वाहः, तादृशसामग्रीत्वव्यापकस्वग्राहकताकत्वनिवेशे नायं दोष इति चेत्—तथापि ज्ञानग्राहकत्वव्यापकत्वनिवेशेनैवोपपत्तौ सामग्रीत्वनिवेशवैयर्थ्यमित्यत आह—विशेषणमिति।

---

ग्रहविषयत्वे' प्रमात्वनिष्ठाभावप्रतियोगित्वसाधनेनापीत्यर्थः। नैयायिकस्य कृतकृत्यतया नैयायिकमतसिद्धिसम्भवेन। तत्साधनाभिप्रायेण तादृशप्रतियोगित्वसाधनाभिप्रायेण। बाधस्येत्युक्तमिति। स्वतोग्राह्यत्वे तादृशप्रामाण्यनिष्ठाभावप्रतियोगित्वसत्त्वादिति भावः। तदभावसाधनाभिप्रायेणेति। प्रमात्वे तादृशविषयत्वाभावसाधनाभिप्रायेणेत्यर्थः। अप्रसिद्धेर्वेति। तादृशविषयत्वस्य केवलान्वयित्वादिति भावः। तथा च वाकारो यथाश्रुतार्थक एवेति ध्येयम्। अन्यथा तादृशविषयत्वाभावसाधने, द्वितीयपक्षे निषेधपक्षे, नैयायिकाभिमतपक्षे।

यावत्सामग्रीजन्यग्रहाऽप्रसिद्धेरिति। तथा च साध्याप्रसिद्धिरित्यर्थः। प्रातिस्विकरूपेणेति। तादृशसामग्रीत्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नत्वेनेत्यर्थः। तत्तद्व्यक्तित्वेनेति यावत्। तदन्तर्गतेति। सामग्र्यन्तर्गतेत्यर्थः। अनुमितिसामग्र्यादिजन्यत्वसाधने इति। इदं ज्ञानं प्रमा सफलप्रवृत्तिजनकत्वादित्यनुमितिसामग्रीजन्यग्रहविषयत्वस्य प्रमात्वे साधने इत्यर्थः। दुर्वारमिति। नैयायिकैरपि तथा स्वीकारादिति भावः। आदिपदान्निषेधपक्षे बाधोऽपि 'बोध्यः। ताद्रूप्येण अनुव्यवसायादिसामग्रीत्वेन, आदिना ज्ञाततालिङ्गकानुमितिसामाग्र्याः स्वप्रकाशसामग्र्याश्च परिग्रहः। मतत्रयसाधारण्यानिर्वाह इति। अनुव्यवसायादिसामग्रीणां ताद्रूप्येण निवेशे इतरसामग्रीद्वयस्याऽलाभेन मतत्रयसाधारण्यं न निर्वहतीति भावः। एतेनानुव्यवसायादिसामग्रीणां ताद्रूप्येण निवेशे तादृशसामग्रीमध्ये प्रामाण्यानुमितिसामग्र्या अप्रवेशेन न बाधसिद्धसाधनावसर इति निरस्तम्। तादृशेति। स्वाश्रयज्ञानग्राहकेत्यर्थः। निवेशे इति। स्वाश्रयज्ञानग्राहकसामग्रीत्वव्यापिका या स्वग्रहजनकता तत्कत्वनिवेशे इत्यर्थः। स्वं प्रमात्वम्, तद्ग्रहजनकताकत्वमपि स्वस्मिन्नेव। स्वपदघटितबहुव्रीहौ अन्यपदार्थः स्वमेव। स्वग्राहकताकत्वं च स्वविषयकग्रहजनकतानिरूपितजन्यतावद्ग्रहविषयत्वम्। जनकतायां तादृशसामग्रीत्वव्यापकत्वनिवेशः। तथा च प्रमात्वे स्वाश्रयज्ञानग्राहकसामग्रीत्वव्यापिका या 'अनुव्यवसायादिनिरूपित'जनकतातन्निरूपितजन्यतावद्ग्रहविषयत्वं फलितम्। न दोषः न मतत्रयसाधारण्यानिर्वाहः। ज्ञानग्राहकत्वव्यापकत्वनिवेशेनैवेति। एवकारेण ज्ञानग्राहकसामग्रीत्वव्यापकत्वव्यावृत्तिः। तथा च ज्ञानग्राहकत्वेनैव सामग्र्या निवेशोऽस्तु इति भावः। सामग्रीत्वनिवेशवैयर्थ्यमिति। ज्ञानप्रामाण्यं स्वेतरभिन्नं स्वाश्रयज्ञानग्राहकसामग्रीत्व-

तथा च तादृशग्रहत्वव्यापकविषयिताप्रतियोगित्वमर्थः ।

स्वाश्रयग्राहकसामग्रीजन्ययावद्ग्रहविषयत्वं साध्यमिति फलितम् । व्यापकत्वरूप-यावदर्थमन्तर्भाव्य निष्कर्षमाह—तादृशेति । तत्तद्धर्मप्रकारकज्ञानग्राहकसामग्रीजन्ये-त्यर्थः । तादृशज्ञानग्रहस्यैव तज्जनकसामग्रीजन्यग्रहत्वेनोपादानेऽपि यथासन्निवेशे न वैयर्थ्यमिति ।

यद्यपि नैयायिकमतेऽपि प्रामाण्यविषयिताया घटत्वप्रकारकत्वविषयितात्वादिना अनुव्यवसायादिसामग्रीजन्यग्रहत्वव्यापकत्वात् सिद्धसाधनम, घटत्ववद्विशेष्यकत्वावच्छिन्न-

व्यापकजनकतानिरूपितजन्यतावद्ग्रहविषयत्वादित्यनुमाने सामग्रीत्वरूपव्यर्थविशेषण-घटितत्वरूपवैयर्थ्यमिति भावः । तदप्रामाण्याग्राहकत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वा-निरूपकतदप्रामाण्याग्राहकत्वनिष्ठावच्छेदकतानिरूपकज्ञानग्राहकत्वनिष्ठावच्छेदकताभिन्ना-वच्छेदकत्वानिरूपकज्ञानग्राहकत्वनिष्ठावच्छेदकतानिरूपक'ज्ञानग्रहोत्पत्तिप्रयोजकताक-समुदायत्वरूप'सामग्रीत्वनिष्ठावच्छेदकताभिन्नाधिकरणत्वनिष्ठाभिन्नावच्छेदकत्वानिरूपक-( सामग्रीत्वनिष्ठावच्छेदकतानिरूपकत्वरूपन्यूनवारकपर्याप्तिनिवेशे प्रयोजनाभावात् ) केवलाधिकरणत्वनिष्ठावच्छेदकतानिरूपकाधिकरणनिष्ठावच्छेदकतानिरूपकवृत्तित्वनिष्ठा-वच्छेदकतानिरूपकभेदनिष्ठवच्छेदकतानिरूपकप्रतियोगित्वनिष्ठावच्छेदकतानिरूपकाव-च्छेदकत्वनिष्ठावच्छेदकतानिरूपकेत्यादिनिवेशे सामग्रीत्वनिष्ठावच्छेदत्वानिवेशेनोभयोः ज्ञानग्राहकसामग्रीत्वव्यापकजनकतानिरूपितजन्यतावद्ग्रहविषयत्वज्ञानग्राहकत्वव्यापक-जनकतानिरूपितजन्यतावद्ग्रहविषयत्वयोः समानावच्छेदकताप्रवेशात्, स्वसमानाधि-करणप्रकृतसाध्यव्याप्यतावच्छेदकधर्मान्तिरघटितत्वात्मकव्यर्थविशेषणघटितत्वरूपवैयर्थ्यं सम्भव इत्यन्यत्र विस्तरः ।

दीधितौ—तथा चेति । यावत्वस्य ग्रहविशेषणत्वे चेत्यर्थः । तत्तद्धर्मप्रकारकेति । घटत्वप्रकारकेत्यर्थः । दीधितौ—विषयिताप्रतियोगित्वं विषयितानिरूपकत्वम् । तथा च ज्ञानप्रामाण्यं घटत्वप्रकारकज्ञानग्रहजनकसामग्रीजन्यग्रहवृत्तिभेदप्रतियोगितानवच्छेदक-विषयितानिरूपकं न वेति विप्रतिपत्तिर्बोध्या । ननु तत्तद्धर्मप्रकारकज्ञानग्रहत्वव्यापक-विषयितानिरूपकत्वमेव साध्यमस्तु किं तादृशज्ञानग्रहजनकसामग्रीजन्यग्रहत्वनिवेशनेन शिरोवेष्टनेन नासिकास्पर्शतुल्यत्वादित्यत आह—तादृशज्ञानग्रहस्यैवेति । घटत्व-प्रकारकज्ञानग्रहस्यैवेत्यर्थः । एवकारेण तादृशज्ञानग्रहजनकसामग्रीजन्यग्रहस्य व्यावृत्तिः । यथासन्निवेशे न वैयर्थ्यमिति । तादृशज्ञानग्रहत्वव्यापकत्व-तादृशज्ञानग्रहजनकसामग्री-जन्यग्रहत्वव्यापकत्वयोर्भेदादिति भावः ।

ननु तत्तद्धर्मप्रकारकज्ञानग्रहजनकसामग्रीजन्यग्रहत्वव्यापकत्वं विषयितायां विषयि-तात्वेन विशिष्टविषयितात्वेन वा । नाद्यः—सिद्धसाधनप्रसङ्गात्, न द्वितीयः—साध्या-प्रसिद्धेरित्याशङ्कते—यद्यपीत्यादिना । प्रामाण्यविषयितायाः तद्वति तत्प्रकारकत्व-विशिष्टज्ञानत्वविषयितायाः, घटत्वप्रकारकत्वविषयितात्वादिना—आदिना घटत्ववद्वि-शेष्यकत्वविषयितात्वस्य विषयितात्वस्य च परिग्रहः । अनुव्यवसायादिसामग्रीजन्यग्रहत्व-

घटत्वप्रकारकत्वत्वावच्छिन्ननिरूपितविषयितात्वेन व्यापकत्वविवक्षा च न्यायमते साध्याप्रसिद्धया न सम्भवति। न च विशिष्टप्रामाण्ये तादृशग्रहनिष्ठभेदप्रतियोगितानवच्छेदकविषयितानिरूपकत्वपर्याप्तेः साध्यतया नानुपपत्तिरिति वाच्यम्। तत्तज्ज्ञानव्यक्तिविषयित्वावच्छिन्नप्रामाण्यविषयितायास्तत्तज्ज्ञानव्यक्तिरूपाश्रयभेदेन भिन्नतया चालनीन्यायेन तादृशग्रहनिष्ठभेदप्रतियोगितावच्छेदकतया तदनवच्छेदकप्रामाण्यविषयित्वाप्रसिद्धेः।

यत्तु विषयितानिष्ठतादृशग्रहत्वव्यापकतायां निरूपितत्वसम्बन्धेनावच्छेदकत्वं

---

व्यापकत्वादिति। घटत्वप्रकारकत्वादिनिरूपितविषयितायाः अनुव्यवसायादिसामग्रीजन्यग्रहवृत्त्यन्ताभावप्रतियोगिनवच्छेदकतादृशविषयितात्वरूपधर्मवत्त्वात्। सिद्धसाधनमिति। तादृशविषयितानिरूपकत्वस्य प्रामाण्ये सत्त्वादिति भावः। न च तादृशग्रहवृत्त्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्वं न व्यापकत्वम्, प्रमेयत्वेन सर्वस्यैव व्यापकत्वापत्तेः। किन्तु तादृशग्रहवृत्त्यन्ताभावप्रतियोगितानवच्छेदकघटत्ववद्विशेष्यकत्वावच्छिन्नघटत्वप्रकारकत्वत्वावच्छिन्ननिरूपितविषयितात्ववत्वमेवेति न सिद्धसाधनमिति वाच्यम्। तथासति न्यायमते साध्याप्रसिद्धिमाह—न्यायमते चेति। साध्याप्रसिद्धया न सम्भवतीति। तथा च यदि तादृशज्ञानग्रहजनकसामग्रीजन्यग्रहवृत्त्यन्ताभावप्रतियोगितानवच्छेदकघटत्ववद्विशेष्यकत्वावच्छिन्नघटत्वप्रकारकत्वनिरूपितविषयितात्ववत्त्वमेव व्यापकत्वं विवक्ष्यते तदा साध्याप्रसिद्धिः, तादृशविशिष्टविषयितायां निरुक्तव्यापकत्वाऽसम्भवादनुव्यवसायादौ उक्तविशिष्टविषयित्वाभावसत्त्वेन तत्प्रतियोगितावच्छेदकत्वस्यैव तत्र सत्त्वात्।

भेदघटितव्यापकत्वमपि दूषयितुमुपन्यस्यति—न चेति। विशिष्टप्रामाण्ये तद्वद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्वरूपप्रामाण्ये। तादृशग्रहनिष्ठेति। तदप्रामाण्याग्राहकस्वाश्रयज्ञानग्राहकसामग्रीजन्यग्रहनिष्ठेत्यर्थः। भेदप्रतियोगितानवच्छेदकेति। तथा च व्यापकत्वं भेदघटितमेव तेन नोक्तदोषः। तथा च भेदप्रतियोगितानवच्छेदकत्वं घटत्वप्रकारकत्वविषयितायां घटत्ववद्विशेष्यकत्वावच्छिन्नविषयितायां च प्रसिद्धमिति नाप्रसिद्धिः। पर्याप्तिनिवेशात्, तादृशग्रहवृत्तिभेदप्रतियोगितानवच्छेदकघटत्वप्रकारकत्वविषयितानिरूपकत्वस्य प्रामाण्यैकदेशे घटत्वप्रकारकत्वे सत्त्वेऽपि न सिद्धसाधनम्। तस्य तादृशभेदप्रतियोगितानवच्छेदकविषयितानिरूपकतापर्याप्त्यनधिकरणत्वात् तथा च प्रमात्वं तदप्रामाण्याग्राहकस्वाश्रयज्ञानग्राहकसामग्रीजन्यग्रहवृत्तिभेदप्रतियोगितानवच्छेदकविषयितानिरूपकतापर्याप्त्यधिकरणं न वेति विप्रतिपत्तिः पर्यवसिता। दूषयति—तत्तज्ज्ञानव्यक्तिविषयित्वावच्छिन्नेति। तत्तद्ज्ञानव्यक्तिनिरूपिततत्तद्ज्ञानग्रहनिष्ठविषयित्वावच्छिन्नेत्यर्थः। प्रामाण्यविषयितायाः समानाधिकरणविषयितयोरेवच्छेद्यावच्छेकभावेन तत्तद्ज्ञाननिरूपितविषयितायाः प्रामाण्यविषयितायाश्चावच्छेद्यावच्छेदकभाव इति।

तादृशग्रहत्वव्यापकतायामिति। तदप्रामाण्याग्राहकस्वाश्रयज्ञानग्राहकसामग्रीजन्यग्रहवृत्त्यभावप्रतियोगित्वाभावे इत्यर्थः। साध्यमिति। तथा च तादृशाभाववद्विषयिता-

साध्यम्, निरूपितत्वसम्बन्धेन घटत्ववति घटत्वप्रकारकत्वविशिष्टसामान्याभावो न निरुक्तज्ञानग्रह इति परमते तथाविधप्रामाण्ये तथाविधव्यापकतावच्छेदकत्वमक्षतमेवेति न बाधः। न्यायमते च केवलघटत्वप्रकारकत्वत्वाद्यवच्छिन्ननिरूपितविषयिताया विशिष्टप्रामाण्यनिरूपितत्वविरहात्तादृशविषयिताशालिन्यपि अनुव्यवसाये निरूपितत्व-सम्बन्धेन विशिष्टप्रामाण्यावच्छिन्नविषयिताविरहस्याऽक्षततया विशिष्टप्रामाण्ये न तादृशानुव्यवसायनिष्ठाभावप्रतियोगितानवच्छेदकत्वमिति न सिद्धसाधनम्, घटत्ववति घटत्वप्रकारकत्वादीनां तत्तज्घटविशेष्यकत्वावच्छिन्नघटत्वादिप्रकारकत्वादिरूपाणां विशे-ष्यभेदेन भिन्नतया प्रत्येकं घटत्वादिप्रकारकघटादिज्ञानग्रहत्वसमानाधिकरणाभावप्रति-योगितायां निरूपितत्वसम्बन्धेनावच्छेदकत्वेऽपि विशिष्य तत्तद्घटादिव्यक्तिविशेष्यकत्व-घटितप्रामाण्ये तत्तद्व्यक्तिविशेष्यकघटत्वादिप्रकारकज्ञानग्रहत्वघटितसाध्यस्य साधनीय-तया न बाध इति।

तदपि न। गुरुमते व्यवसायरूपग्रहग्रहे विशिष्टप्रामाण्यनिरूपिताधिकरणतास-

---

निरूपितनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकत्वं साध्यमित्यर्थः। तथा च तत्तज्ज्ञान-प्रामाण्यं तदप्रामाण्याग्राहकज्ञानग्राहकसामग्रीजन्यग्रहवृत्त्यभावीयप्रतियोगितानिरूपित-निरूपितत्वसम्बन्धावच्छिन्नावच्छेदकत्वाभाववन्न वेति विप्रतिपत्तिः। पक्षे साध्यसत्त्वं दर्शयति—निरूपितत्वसम्बन्धेनेति। घटत्वप्रकारकत्वविशिष्टसामान्याभाव इति। निरूपितत्वसम्बन्धेन घटत्ववति घटत्वप्रकारकत्वविशिष्टविषयितासामान्याभाव इत्यर्थः। निरूपितत्वसम्बन्धेन प्रामाण्यविशिष्टविषयितानास्तीत्यभाव इति यावत्। न निरुक्तज्ञानग्रहे इति। स्वाश्रयग्राहकसामग्रीजन्यग्रहे इत्यर्थः। किन्तु निरूपितत्वसम्बन्धेन घटत्वविशिष्टविषयिता नास्तीत्याद्यभाव एवेति तत्प्रतियोगितानवच्छेदकत्वं प्रमाण्ये-ऽस्तीत्याह—परमते इति। मीमांसकमते इत्यर्थः। तथाविधप्रामाण्ये विशिष्टप्रामाण्ये। तथाविधव्यापकतावच्छेदकत्वमिति। घटत्ववति घटत्वप्रकारकत्वविशिष्टविषयितानिष्ठ-व्यापकतानिरूपितनिरूपितत्वसम्बन्धवच्छिन्नावच्छेदकत्वमित्यर्थः। तादृशविषयिता-शालिन्यपि केवलघटत्वप्रकारकत्वनिरूपितविषयिताशालिन्यपि, विशिष्टप्रामाण्या-वच्छिन्नविषयिताविरहस्य घटत्ववद्विशेष्यकत्वावच्छिन्नघटत्वप्रकारकत्वरूपप्रामाण्य-विशिष्टविषयिताविरहस्य विशिष्टप्रामाण्ये घटत्ववद्विशेष्यकत्वावच्छिन्नघटत्वप्रकार-कत्वरूपप्रामाण्ये। तादृशेति। घटत्वप्रकारकत्वनिरूपितविषयिताशालीत्यर्थः। विशेष्य-भेदेन ज्ञानभेदेन। विशिष्य तत्तद्घटादिव्यक्तिविशेष्यकत्वघटितप्रामाण्ये इति। तथा च घटत्ववद्घटविशेष्यकत्वावच्छिन्नघटत्वप्रकारकत्वरूपं प्रामाण्यं तादृशप्रामाण्याश्रयज्ञान-ग्राहकसामग्रीजन्यग्रहवृत्त्यभावाप्रतियोगिविषयितानिरूपितनिरूपितत्वसम्बन्धावच्छिन्ना-वच्छेदकत्वस्य विशिष्यैव पक्षसाध्यभावः इति न चालनीन्यायेनाभावमादाय व्यापक-त्वानुपपत्तिः। तादृशप्रामाण्याश्रयज्ञानग्रहे तादृशप्रामाण्यविशिष्टविषयित्वाभावविरहे-णानवच्छेदकत्वं तादृशप्रामाण्येऽक्षतमिति भावः।

गुरुमते ज्ञानस्य स्वप्रकाशतया व्यवसायात्मकस्य ज्ञानग्रहस्य प्रामाण्याश्रयत्वम्, न

स्त्वेनैव तस्य निरूपितत्वसम्बन्धेन व्यवसायवृत्त्यभावप्रतियोगितायामनवच्छेदकत्वाद् व्यवसाये प्रामाण्यविषयित्वाप्रसिद्धेः । तादृशग्रहनिष्ठाभावप्रतियोगितावच्छेदकतापर्याप्तिविरहरूपव्यापकतावच्छेदकत्वस्य केवलघटत्वप्रकारकत्वादौ सत्त्वेनापि अवच्छिन्नत्वान्तविशिष्टे घटत्वादिप्रकारकत्वे पक्षे तत्साधने सिद्धसाधनस्य दुर्वारत्वाच्च विशिष्टस्यानतिरिक्तत्वात् ।

न च विशेषणान्तर्भाविन विशेष्ये अवच्छेदकतापर्याप्तिविरहसिद्धेरुद्देश्यतया तदसिद्धया न सिद्धसाधनमिति वाच्यम् । अनुमानात्पक्षतावच्छेदकविशेषणांशे साध्यवत्त्वज्ञानासम्भवेन तदन्तर्भाविन च पक्षे साध्यवत्त्वसिद्धेरुद्देश्यत्वाऽसम्भवात् ।

---

तु प्रामाण्यविषयकत्वम्, स्वाश्रयज्ञानग्राहकसामग्रीजन्यग्रहवृत्त्यभावप्रतियोगितानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकत्याभावस्य साध्यत्वेऽपि व्यवसायरूपज्ञानग्रहे निरूपितत्वसम्बन्धेन प्रामाण्यविशिष्टविषयित्वाभावस्यापि धर्तुं शक्यतया तादृशभावीयप्रतियोगितानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकत्वस्यैव प्रामाण्ये सत्त्वाद् बाध इत्याशयेन दूषयति—तदपि नेति । विशिष्टप्रामाण्यनिरूपिताधिकरणतासत्त्वेनैवेति । घटत्ववद्विशेष्यकत्वावच्छिन्नघटत्वप्रकारकत्वरूपप्रामाण्यनिरूपिताधिकरणतासत्त्वेनैवेति । एवकारेण निरूपितत्वसम्बन्धेन तादृशप्रामाण्यविशिष्टविषयिताव्यवच्छेदः । तस्य प्रामाण्यनिरूपिताधिकरणत्वस्य । प्रामाण्यविषयित्वाप्रसिद्धेरिति । निरूपितत्वसम्बन्धेन प्रामाण्यविशिष्टविषयित्वाप्रसिद्धेरित्यर्थः । साध्यघटकव्यापकतायां विषयितानिष्ठत्वानिवेशे तादृशज्ञानग्रहे निरूपितत्वसम्बन्धेन प्रामाण्यविशिष्टाधिकरणत्वाभावस्याऽसत्त्वेन निरूपितत्वसम्बन्धावच्छिन्नावच्छेदकत्वाप्रसिद्धावपि उद्देश्यासिद्धिः । उद्देश्यस्य विषयितानिरूपकत्वस्याऽसिद्धिः, अर्थान्तरमिति यावत्, अनाकाङ्क्षिताभिधानस्याऽर्थान्तरत्वादिति भावः । सिद्धसाधनमप्याह—तादृशेति । ज्ञानग्राहकसामग्रीजन्येत्यर्थः । सत्त्वेनापीति । न्यायमते घटत्वप्रकारकत्वस्य स्वतोग्राह्यत्वात्, ननु केवलघटत्वप्रकारकत्वे तादृशावच्छेदकत्वाभावसत्त्वेऽपि घटत्ववद्विशेष्यकत्वावच्छिन्नघटत्वप्रकारकत्वरूपप्रमात्वे तादृशावच्छेदकत्वाभावरूपसाध्यस्य नैयायिकैरनङ्गीकारात्कुतः सिद्धसाधनमत आह—विशिष्टस्यानतिरिक्तत्वादिति । विशेष्यवृत्तिधर्मस्य विशिष्टानुयोगिकाभावानङ्गीकारात् सिद्धसाधनमिति भावः ।

उक्तसिद्धसाधनपरिहारमाशङ्कते—न चेति । विशेषणान्तर्भाविनेति । घटत्ववद्विशेष्यकत्वे इत्यर्थः । विशेष्ये घटत्वप्रकारत्वे, उभयत्रैवेति भावः । तद्गतसमुदायत्वावच्छेदेन प्रामाण्ये वृत्ति इति यावत् । तथा च विशेषणान्तर्भाविनेत्यस्य विशेषणे विशेष्ये वेत्यर्थ इति भावः । अवच्छेदकतापर्याप्तिविरहसिद्धेरिति । ज्ञानग्राहकसामग्रीजन्यग्रहवृत्त्यभावप्रतियोगितानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकतापर्याप्त्यभावरूपसाध्यस्येत्यर्थः । उद्देश्यतया इच्छाविषयतया, तदसिद्धया तादृशस्यासिद्धया, न्यायमते इत्यादिः । तथा च विशेषणं घटत्ववद्विशेष्यकत्वं विशेष्यं घटत्वप्रकारकत्वं तद्गतसमुदायत्वावच्छेदेन तादृशावच्छेदकतापर्याप्तिविरहरूपसाध्यस्य नैयायिकैरनङ्गीकारान्न सिद्धसाधनमिति

न च तादृशविशेषणावच्छेदेन विशेष्ये साध्यवत्त्वसिद्धेरुद्देश्यतामुपगम्य सिद्धसाधनपरिहारसम्भवः, विशेष्यनिष्ठे अवच्छेदकतापर्याप्तिविरहवत्त्वे तन्निष्ठस्य घटत्वादिप्रकारकत्वपर्याप्तेरिव अवच्छिन्नत्वान्तविशेषणस्यापि अवच्छेदकताया न्यायमतसिद्धत्वात् तादृशधर्मस्य विशेष्यविशेषणसमुदायनिष्ठावच्छेदकतापर्याप्तेरनवच्छेदकत्वात्, समुदायनिष्ठावच्छेदकतापर्याप्त्यभाववत्वस्य परोद्देश्यसिद्धिकस्यैवावच्छेदकताया एकदेशात्मकविशेषणेऽसम्भवादिति ।

---

भावः । आशङ्कां निरस्यति—अनुमानादिति । पक्षतावच्छेदकविशेषणांशे पक्षतावच्छेदकीभूतविशेषणांशे, तदन्तर्भावेन पक्षतावच्छेदके पक्षे उभयत्रेति शेषः । साध्यवत्वज्ञानासम्भवेनेति । उभयत्र तादृशावच्छेदकतापर्याप्तिविरहरूपसाध्यत्वज्ञानाऽसम्भवेनेत्यर्थः । उद्देश्यत्वाऽसम्भवादिति । उभयत्र इच्छाविषयत्वासम्भवादिति भावः । विशेषणान्तर्भावेनेत्यस्य विशेषणे विशेष्ये उभयत्रेति नार्थः । किन्तु विशेषणावच्छेदेन विशेष्ये इत्यर्थः । तदपि दूषयितुमुपक्रमते—न चेति । अस्य सिद्धसाधनपरिहारसम्भव इत्यनेनान्वयः । तादृशेति । घटत्ववद्विशेष्यकत्वावच्छिन्नत्वरूपेत्यर्थः । विशिष्ये घटत्वप्रकारकत्वे, तादृशविशेषणविशिष्टे विशेष्ये इति यावत् । साध्यवत्त्वसिद्धेरिति । ज्ञानग्राहकसामग्रीजन्यग्रहवृत्त्यभावप्रतियोगितानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकताविरहरूपसाध्यवत्त्वानुमितेरित्यर्थः । उपगम्य स्वीकृत्य । सिद्धसाधनपरिहारसम्भव इति । घटत्ववद्विशेष्यकत्वावच्छिन्नत्वघटत्वप्रकारकत्वनिष्ठसमुदायत्वस्यैवोद्देश्यतावच्छेदकतया तादृशसमुदायत्वावच्छिन्ननिरूपिताऽखण्डविषयितायां तादृशग्रहत्वव्यापकत्वस्य न्यायमतेऽनङ्गीकारादिति भावः । दूषयति—विशेष्यनिष्ठे इति । घटत्वप्रकारकत्वनिष्ठे इत्यर्थः । अवच्छेदकतापर्याप्तिविरहवत्त्वे इति । तादृशग्रहवृत्त्यभावप्रतियोगितानिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकविरहरूपसाध्यवत्व इत्यर्थः । तन्निष्ठस्य तन्मात्रनिष्ठस्य, घटत्वप्रकारकत्वरूपविशेष्यमात्रनिष्ठस्य, अवच्छिन्नत्वान्तविशेषणस्यापि, घटत्ववद्विशेष्यकत्वावच्छिन्नत्वविशेषणस्यापि, अवच्छेदकतायाः तादृशावच्छेदकतापर्याप्तिविरहावच्छेदकतायाः । न्यायमतसिद्धत्वादिति । घटत्वप्रकारकत्वत्वादेरिव घटत्ववद्विशेष्यकत्वावच्छिन्नत्वस्यापि घटत्वप्रकारकत्वरूपविशेष्यनिष्ठत्वाद् तादृशग्रहत्वव्यापकतावच्छेदकतावच्छेदकत्वं नैयायिकेनापि स्वीकरणीयम् इति सिद्धसाधनम् । खण्डशो द्वयोरपि स्वतोग्राह्यत्वादिति ध्येयम् । ननु घटत्वादिप्रकारकत्वत्वमिव घटत्ववद्विशेष्यकत्वावच्छिन्नत्वस्यावच्छेदकत्वविरहावच्छेदकत्वेऽपि न्यायमते समुदायेऽवच्छेदकतापर्याप्तेः स्वीकारात्तादृशविशेषणस्य समुदायवृत्त्यवच्छेदकतापर्याप्त्यनवच्छेदकत्वं स्वीकरणीयं नैयायिकेन, अनुव्यवसायादौ तादृशविशेषणविशिष्टविशेष्याभावादेव तादृशसमुदाये निरूपितत्वसम्बन्धावच्छिन्नावच्छेदकतापर्याप्तिसत्त्वात्, तथा च तादृशसमुदायत्वावच्छेदेन कुतो न्यायमतेऽवच्छेदकतापर्याप्तिविरहस्य सिद्धत्वात्सिद्धसाधनमित्यत आह—तादृशधर्मस्येति । विशेषणीभूतघटत्वादिमद्विशेष्यकत्वावच्छिन्नत्वस्येत्यर्थः । विशेष्यविशेषणसमुदायनिष्ठावच्छेदकतापर्याप्तेरनवच्छेदकत्वादिति । विशेष्यं घटत्वादिप्रकारकत्वं विशेषणं घटत्वा-

एतेन प्रामाण्यनिरूपितविषयितात्वं पक्षीकृत्य तादृशग्रहत्वव्यापकतावच्छेदकत्व-कोटिका विप्रतिपत्तिः, तादृशग्रहत्वव्यापकतावच्छेदकघटत्वादिमद्विशेष्यकत्वावच्छिन्न-घटत्वादिप्रकारकत्वनिरूपितत्वविशिष्टविषयितात्वघटत्वादिविषयितात्वान्यतररूपवद्-विषयिताकत्वकोटिकविप्रतिपत्तिरपि वा न साधीयसीति फलितम् ।

तथापि तादृशग्रहनिष्ठाभावप्रतियोगितात्वावच्छिन्नं पक्षीकृत्यैव विशिष्टप्रामाण्य-विषयितात्वानवच्छिन्नत्वकोटिकविप्रतिपत्तौ तात्पर्यान्न कश्चिद्दोषः ।

---

दिमद्विशेष्यकत्वावच्छिन्नत्वं, एतत्समुदायनिष्ठा या अवच्छेदकत्वपर्याप्तिः तादृशग्रहवृत्त्य-भावीयप्रतियोगितानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकतापर्याप्तितादृशसमुदाये एव तादृशपर्याप्त्यनवच्छेदकत्वात्तादृशधर्मस्य स्येति पूर्वेणान्वयः । एवं च यो यद्धर्मस्या-वच्छेदकः स तदभावस्यावच्छेदक इति न्यायेन घटत्वादिमद्विशेष्यकत्वावच्छिन्नत्वरूप-विशेषणे समुदायनिष्ठावच्छेदकतापर्याप्त्यभाववत्वस्य सिद्धत्वात्सिद्धसाधनं दुर्वारमिति भावः ।

घटत्वप्रकारकत्वनिरूपितविषयितात्वे तादृशग्रहत्वव्यापकतावच्छेदकत्वस्य सत्त्वेन घटत्ववद्विशेष्यकत्वावच्छिन्नत्वविशिष्टघटत्वप्रकारकत्वनिरूपितविषयितात्वेऽपि व्यापक-तावच्छेदकत्वं दुर्निवारमिति सिद्धसाधनो दुर्निवार इत्याशयेनाह—एतेन सिद्धसाधनेन, विप्रतिपत्तिः घटत्ववद्विशेष्यकत्वावच्छिन्नघटत्वप्रकारकत्वनिरूपितत्वविशिष्टविषयि-तात्वं स्वाश्रयज्ञानग्राहकसामग्रीजन्यग्रहत्वव्यापकतावच्छेदकं न वेति विप्रतिपत्तिः । प्रामाण्यं स्वाश्रयज्ञानग्राहकसामग्रीजन्यग्रहत्वव्यापकतावच्छेदकघटत्वादिमद्विशेष्यक-त्वावच्छिन्नघटत्वादिप्रकारकत्वनिरूपितत्वविशिष्टविषयितात्व-घटत्वादिविषयितात्वा-न्यतरवद्विषयिताकं न वेति विप्रतिपत्तिश्च पर्यवसिता । तादृशेति । स्वाश्रयज्ञानग्राहक-सामग्रीजन्येत्यर्थः । ग्रहत्वव्यापकतावच्छेदकेति । अस्याऽन्यतरेत्यनेनाऽन्वयः । अत्र घट-त्वादिविषयितात्वमात्रोपादाने सिद्धसाधनम् । घटत्ववद्विशेष्यकत्वावच्छिन्नघटत्वप्रकार-त्वनिरूपितत्वविशिष्टविषयितात्वमात्रोपादाने साध्याप्रसिद्धिरतोन्यतरोपादानम् ।

तथापीति । सिद्धसाधनसत्त्वेऽपीत्यर्थः । तादृशेति । स्वाश्रयज्ञानग्राहकसामग्री-जन्येत्यर्थः । विशिष्टेति । घटत्ववद्विशेष्यकत्वावच्छिन्नत्वविशिष्टघटत्वप्रकारकत्वरूपे-त्यर्थः । यत्किञ्चित्पटादिविषयित्वनिष्ठप्रतियोगित्वे विशिष्टप्रामाण्यविषयितात्वानवच्छिन्न-त्वस्योभयमतसिद्धतया सिद्धसाधनवारणाय प्रतियोगितात्वावच्छिन्नेति । तथा च स्वा-श्रयज्ञानग्राहकसामग्रीजन्यग्रहनिष्ठाभावप्रतियोगितात्वावच्छिन्नं घटत्ववद्विशेष्यकत्वा-वच्छिन्नघटत्वप्रकारकत्वनिरूपितविषयितानवच्छिन्नं न वेति विप्रतिपत्तिः पर्यवसिता । यद्यपि 'तत्तज्ज्ञानप्रामाण्यं तदप्रामाण्याग्राहकस्वाश्रयज्ञानग्राहकसामग्रीजन्यग्रहवृत्त्यभाव-प्रतियोगितानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकत्वाभाववन्न वेति पूर्वकल्पेऽपि विशिष्टप्रामाण्यगतसमुदायत्वं तादृशावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनु-योगितानवच्छेदकं न वेति विप्रतिपत्तौ न दोषः, तथापि लाघवमादृत्य तथापीत्यादि-कल्पानुसरणमिति ध्येयम् ।

ज्ञानग्राहकाऽऽत्मादिजन्ययावद्ग्रहविषयत्वस्याऽप्रसिद्धेः सामग्रीति ।

ज्ञानग्राहकेति । घटत्वादिप्रकारकज्ञानग्राहकेत्यर्थः । आत्मादीति । यद्यपि आत्मनोऽप्रामाण्यग्रहजनकतया अप्रामाण्याग्राहकत्वविशेषणेन व्यावृत्तेरिदमसङ्गतम्, तथापि अतद्गुणसंविज्ञानबहुव्रीहिणा शरीरविशेषादेरेव विवक्षणीयतया न दोषः ।

अथवा स्वयमप्रामाण्याग्राहकपदस्य प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन च यद्भट्टमतसिद्धं तदन्यार्थकत्वेन व्याख्येयतया आत्मनः प्रामाण्यग्राहकत्वेन ज्ञानग्राहकत्वेन च भट्टमतसिद्धतया तद्विशेषणेन न व्यावृत्तिरिति यथाश्रुतमेव साधु ।

अप्रसिद्धेरिति । पटत्वादिप्रकारकज्ञानग्रहस्यापि घटत्वादिप्रकारकज्ञानग्राहकजन्ययावद्ग्रहान्तर्गततया गुरुमतातिरिक्तमते तादृशयावद्ग्राह्यत्वस्याऽप्रसिद्धेरिति भावः। ज्ञानत्वविशिष्टविषयकयावद्ग्रहोपादानेन ज्ञानत्वे प्रसिद्ध्युपपादनेऽपि घटत्ववति घटत्व-

---

दीधितौ—अप्रसिद्धेरिति । आत्मजन्ययावद्ग्रहविषयत्वस्य कुत्राप्यसत्त्वादिति भावः । अप्रामाण्यग्रहजनकतयेति । प्रामाण्यग्रहजनकत्ववदित्यादिः । इदम् अप्रसिद्धिकथनम्, अतद्गुणसंविज्ञानबहुव्रीहिणा आत्मा आदिर्यस्येत्यतद्गुणसंविज्ञानबहुव्रीहिणा। शरीरविशेषादेरेवेति । शरीरसामान्यग्रहणेऽप्रसिद्धितादवस्थ्यम्, शरीरस्याप्रामाण्याग्राहकत्वविशेषणेनैव वारणाच्चातो विशेषपदम्, यच्छरीरावच्छेदेनाऽप्रामाण्यग्रहो न जातस्तच्छरीरमादायाऽप्रसिद्धिरिति भावः । आदिपदाद्यादृशात्मनि अप्रामाण्यग्रहो न जातस्तादृशात्मविशेषपरिग्रहः । एतादृशशरीरविशेषादेरप्रामाणिकत्वे आह—अथवेति । केचित्तु यादृशात्मनि अप्रामाण्यग्रहो न जातस्तादृशात्मविशेषमादायाप्यप्रसिद्धितादवस्थ्यमिति । इदमसङ्गतमिति न सङ्गतमत आह—अथवेति । आदिपदादिन्द्रियपरिग्रह इति वदन्ति । स्वयं दीधितिकारेण, तद्विशेषणेन अप्रामाण्याग्राहकत्वविशेषणेन, न व्यावृत्तिः आत्मन इत्यनुवर्तते, प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन च यद् भट्टमतसिद्धं तदन्यत्वेनेति भावः । यथाश्रुतमेव साधु इति । एवकारेण पारिभाषिकाप्रामाण्याग्राहकत्वव्यवच्छेदः । अप्रसिद्धिमाह—पटत्वादिप्रकारकज्ञानग्रहस्यापीति । अपिना घटत्वादिप्रकारकज्ञानग्रहस्य समुच्चयः । घटत्वादिप्रकारकज्ञानाग्रहकजन्येति । घटत्वप्रकारकघटविषयकज्ञानजनकं यदात्मशरीरादितज्जन्येत्यर्थः । यावद्ग्रहान्तर्गततयेति । पटत्वादिप्रकारकज्ञानग्रहस्यापीति पूर्वेणान्वयः । तादृशग्राह्यत्वस्याऽप्रसिद्धेरिति । तादृशयावद्ग्रहविषयत्वस्याप्रसिद्धेरित्यर्थः । तथा च सामग्रीपदानुपादाने घटत्वप्रकारकघटविशेष्यकज्ञानविषयकज्ञानजनकयत्किञ्चित्कारणं यदात्मशरीरादिकं तज्जन्ययावद्ग्रहान्तर्गतपटत्ववति पटत्वप्रकारकज्ञानग्रहादेरपि धर्त्तुं शक्यतया तद्विषयत्वस्याऽप्रसिद्ध्या साध्याप्रसिद्धिः, सामग्रीपदोपादाने तु केवलमात्मनः शरीरादेश्च धर्त्तुमशक्यतया न साध्याप्रसिद्धिः । गुरुमते ज्ञानस्य त्रितयविषयकतयाऽऽत्मादिजन्ययावद्ग्रहविषयत्वस्यात्मनि आत्मत्वे प्रसिद्धत्वाद् गुरुमतातिरिक्तमते इत्युक्तम् । ननु तादृशज्ञानग्राहकजन्यग्रहे ज्ञानत्वविशिष्टविषयकत्वं निवेशनीयम्, तथा च स्वाश्रयज्ञानग्राहकजन्यज्ञानत्वविशिष्टविषयकयावद्ग्रहविषयत्वं साध्यम्, एवं च ज्ञानत्वे नाप्रसिद्धिरित्यत आह—

प्रकारकत्वादौ बाधवारणमशक्यमेवेति बोध्यम् । सामग्रीतीति । यद्यपि सामग्रीपदस्य यावत्कारणपरतया घटत्वादिप्रकारकज्ञानग्राहकयावत्कारणजन्यग्रहघटितसाध्यं पर्यवसितम्, तथा चाऽप्रसिद्धिः, कस्याप्यनुव्यवसायादेर्घटत्वादिप्रकारकव्यवसायग्राहकतत्तद्व्यवसायतत्तन्मनोयोगादिरूपनानाकारणव्यक्तिघटितसमुदायजन्यत्वासम्भवात् ।

सामग्रीपदेन प्रागभावमात्रोपादाने गुरुमिश्रयोर्मते ज्ञाततालिङ्गकानुमितेः शशविषाणायमानतया व्यवसायादिरूपज्ञानग्रहस्यैव प्राभाकरादिमते ज्ञाततालिङ्गकानुमिति-

---

बाधवारणमशक्यमिति । तथा च स्वाश्रयज्ञानग्राहकयावत्कारणजन्यग्रहविषयत्वस्य साध्यत्वे च । कस्याप्यनुव्यवसायादेरिति । आदिना व्यवसायानुमित्योः परिग्रहः । अस्य समुदायजन्यत्वासम्भवादित्यनेनान्वयः । नानाकारणव्यक्तिघटितेति । व्यवसायसामग्री चक्षुःसंयोगाऽऽलोकसंयोगादिकम् अनुव्यवसायसामग्री च मनोयोगादिकम्, अनुमितिसामग्री च परामर्शादिकम्, इति सकलकारणघटितेत्यर्थः । समुदायजन्यत्वासम्भवादिति । सकलकारणानि मिलित्वा न किमपि एकं ज्ञानं जनयन्तीति भावः । स्वाश्रयविषयकानुव्यवसायजनकसकलव्ययसाय-तत्तन्मनोयोगजन्यो न कोऽपि एकोऽनुव्यवसायः तत्तदनुव्यवसायं प्रति तत्तद्व्यवसायस्य कारणत्वादिति यावत् । स्वाश्रयज्ञानविषयकयत्किञ्चिद्ग्रहजनकयावत्कारणजन्यग्रहविषयत्वनिवेशे तु तादृशयत्किञ्चिद्ग्रहपदेन सफलप्रवृत्तिजनकत्वलिङ्गकानुमितिमादाय सिद्धसाधनापत्तेः । स्वाश्रयज्ञानविषयकग्रहत्वावच्छिन्नजन्यतानिरूपितजनकतावन्ति यावन्ति तावज्जन्यत्वासम्भवादिति भावः । प्रागभावमात्रोपादाने इति । मात्रपदेनेतरकारणव्यवच्छेदः । तथा च प्रमात्वाश्रयज्ञानग्राहकप्रागभावजन्ययावद्ग्रहविषयत्वं साध्यम् ।

अत्रेदं बोध्यम्—पूर्वं हि सामग्रीपदस्य यावत्कारणपरतया व्यवसायादिसकलकारणजन्यत्वस्य ग्रहेऽप्रसिद्धिः, प्रागभावस्य कारणत्वे तु यावत्वस्य कारणेऽनिवेशात्स्वाश्रयज्ञानग्रहोत्पादकतत्तत्प्रागभावमुपादाय तत्तज्जन्यतत्तद्ग्रहमादाय साध्यप्रसिद्धिरिति । सामग्रीपदेन प्रागभावमात्रोपादानेऽपि साध्याप्रसिद्धिं दर्शयति—गुरुमिश्रयोर्मते इति । गुरुमते मिश्रमते चेत्यर्थः । ज्ञाततालिङ्गकानुमितेरिति । ज्ञाततालिङ्गकानुमितिप्रागभावस्य चेत्यर्थः । शशविषाणायमानतयेति । अलीकतयेत्यर्थः । शशविषाणायमानतयेति तृतीयार्थः प्रयोज्यत्वम् । तस्य भट्टाभिमानविषयतायामन्वयः । ज्ञाततालिङ्गकानुमितेर्गुरुमिश्रमते अलम् । कतया व्यवसायादिरूपज्ञानग्रह एव ज्ञाततालिङ्गकानुमितित्वेन भट्टाभिमानविषयः 'भट्टाभिमतज्ञाततालिङ्गकानुमितिस्थानाभिषिक्तः' इति भावः । तथा च स्वाश्रयज्ञानग्राहकप्रागभावपदेन अनुव्यवसायप्रागभावस्यैव धर्तव्यतया तज्जन्यग्रहस्य तदनुव्यवसायस्यैव प्रसिद्धतया नाप्रसिद्धिरिति यावत् । व्यवसायादिरूपज्ञानग्रहस्यैवेति । व्यवसायादिरूपो यो ज्ञानग्रहस्तस्यैवेत्यर्थः । आदिपदादनुव्यवसायपरिग्रहः । एवकारेण भट्टमतसिद्धानुमितेर्व्यवच्छेदः । प्राभाकरादिमते इति । गुरुमते इत्यर्थः । आदिना मिश्रमतपरिग्रहः । ज्ञाततालिङ्गकानुमितित्वेन भट्टाभिमानतयेति । ज्ञाततालिङ्गकानुमितित्वप्रकारकव्यवसायादिरूपज्ञानग्रहविशेष्यकं यद् भट्टाभिमानं 'ज्ञाततालिङ्गकानुमितिरित्याकारकं' तद्विषयतयेत्यर्थः । भट्टस्तु व्यवसायादिरूपज्ञानग्रहे एव ज्ञाततालिङ्गकानुमिति-

**त्वेन भट्टाभिमानविषयतया तत्प्रागभावस्य ज्ञानग्राहकतया भट्टाभिमतत्वमिति व्यवसाया-दिरूपज्ञानग्रहस्य निर्वाच्यसाध्यघटकत्वानुपपत्तेः ।**

**न च व्यवसायादिप्रागभावे ज्ञाततालिङ्गकानुमितिप्रागभावत्वेन भट्टाभिमाने तत्र प्रामाण्याग्राहकत्वमपि तदभिमतमिति प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन च यद्भट्टा-भिमतं तदन्यत्वं तत्राक्षतमेवेति तज्जन्यग्रहस्यापि प्राभाकरादीनां साध्यघटकतेति**

---

त्वाभिमानं करोति । सतृष्णस्य शुक्तौ रजतत्वाभिमानमिव, न तु वस्तुतो व्यवसायादिकं ज्ञाततालिङ्गकानुमितिः शुक्तिरिवेति भावः । भट्टाभिमानविषयतयेत्यत्र तृतीयार्थो जन्य-त्वम्, तस्य भट्टाभिमतत्वेऽन्वयः । व्यवसायादिरूपज्ञानग्रह एव प्राभाकरादिमते ज्ञात-तालिङ्गकानुमितित्वेन भट्टाभिमानविषयः । तथा च व्यवसायादिप्रागभाव एव ज्ञान-ग्राहकतया भट्टाभिमतः । तत्प्रागभावस्य व्यवसायादिप्रागभावस्य । ज्ञानग्राहकतया भट्टाभिमतत्वमिति । ज्ञानग्राहकत्वप्रकारकभट्टाभिमानम् 'अयं ज्ञानग्राहक इत्याकारकं' तद्विशेष्यता व्यवसायादिप्रागभावनिष्ठा इति भावः । एतावता व्यवसायादिप्रागभाव एव ज्ञाततालिङ्गकानुमितिप्रागभावत्वेन भट्टाभिमतः, तथा साध्यकोटौ स्वाश्रयज्ञान-ग्राहकप्रागभावपदेन व्यवसायादिप्रागभावो ग्राह्यः । एवं तादृशव्यवसायादिप्रागभावश्च तदप्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन च भट्टमतसिद्ध एव न तु तदन्य इति च सूचितम् । इति अतः, व्यवसायादिप्रागभावस्य ज्ञानग्राहकत्वेन, 'प्रागभावत्वेन' प्रामाण्या-ग्राहकत्वेन च भट्टाभिमतत्वात् 'तदन्यत्वविरहात्' । पारिभाषिकाऽप्रामाण्याऽग्राहकत्व-विरहादिति यावत् । **व्यवसायादिरूपज्ञानग्रहस्य निर्वाच्यसाध्यघटकत्वानुपपत्तेरिति ।** **व्यवसायादिरूपज्ञानग्रहस्येति ।** अप्रामाण्याग्राहकज्ञानग्राहकव्यवसायादिप्रागभावजन्य-व्यवसायादिज्ञानग्रहस्येत्यर्थः । **निर्वाच्यसाध्यघटकत्वानुपपत्तेरिति ।** निर्वाच्यो यः साध्यः तज्ज्ञानप्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन च यद् भट्टमतसिद्धं तदन्यो यः स्वाश्रयज्ञान-ग्राहक-'व्यवसायप्रागभावः तज्जन्यग्रहविषयत्वरूपस्तद्घटकत्वानुपपत्तेरित्यर्थः । तथा च व्यवसायादिप्रागभावस्य प्रामाण्याग्राहकत्वेन च यद् भट्टमतसिद्धं तदन्यत्वविरहेणा-ऽग्रहणात्साध्याघटकत्वेन साध्याप्रसिद्धिस्तदवस्थैवेति ध्येयम् । तथा च गुरुमिश्रमता-ऽसङ्ग्रह इति भावः ।

प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन च यद् भट्टमतसिद्धं तदन्यत्वं प्रागभावे सम्पाद-यति—न चेति । **व्यवसायादिप्रागभावे इति ।** आदिना अनुव्यवसायपरिग्रहः । भट्टा-भिमाने अयमनुमितिप्रागभाव इति भट्टभ्रमे सति सप्तमी । तत्र व्यवसायप्रागभावे । **प्रामाण्यग्राहकत्वमपीति ।** ज्ञाततालिङ्गकानुमितिप्रागभावत्वेन प्रामाण्यग्राहकत्वमपीत्यर्थः । अनेन प्रामाण्याऽग्राहकत्वेन यद् भट्टमतसिद्धं तदन्यत्वं प्रदर्शितम् । अपिना ज्ञानग्राहकत्वस्य समुच्चयः । व्यवसायप्रागभावत्वेन व्यवसायात्मकज्ञानग्रहजनकत्वमित्यर्थः । तदभिमतं भट्टाभिमतम्, इति अतः, तत्र व्यवसायप्रागभावे, इति अतः, तज्जन्यग्रहस्यापि व्यवसा-यादिप्रागभावजन्यग्रहस्यापि, प्राभाकरादीनाम् आदिना मिश्रभट्टपरिग्रहः । **साध्यघटक-**

वाच्यम् । ज्ञाततालिङ्गकानुमितिप्रागभावत्वेन प्रामाण्यग्राहकत्वाभिमानविषयस्यापि व्यवसायादिप्रागभावत्वेन तेषां प्रामाण्याग्राहकत्वाभिमानविषयतया व्यवसायादिप्रागभावस्य साध्यघटकभेदप्रतियोगित्वात् ।

यदि चैकरूपेण तदभ्युपगमोऽवश्यं विवक्षणीयः, अन्यथा कारणसमुदायरूपसामग्रीनिवेशे व्यवसायादिसामग्र्या ज्ञाततालिङ्गकानुमितिसामग्रीत्वेन ज्ञानग्राहकतया व्यवसायादिसामग्रीत्वेन प्रामाण्याग्राहकतयां भट्टाभिमतत्वात्तस्याः साध्यघटकत्वानुपपत्तेः । तथा च प्रागभावमात्रनिवेशेऽपि न दोष इति विभाव्यते, तथापि अग्रे ओदनकामकार्यताज्ञान-

---

तेति । व्यवसायप्रागभावजन्य'व्यवसाय'ग्रहस्य प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन यद् भट्टमतसिद्धं तदन्य-स्वाश्रयज्ञानग्राहकव्यवसायादिप्रागभावजन्यत्वेन तादृशग्रहविषयत्वरूपसाध्यघटकतेत्यर्थः । तथा च न साध्याप्रसिद्धिरिति भावः । निषेधति—ज्ञाततालिङ्गकानुमितिप्रागभावत्वेनेति । प्रामाण्यग्राहकत्वाभिमानविषयस्यापीति । अस्य व्यवसायादिप्रागभावेऽन्वयः । तेषां भट्टानां, साध्यघटकभेदप्रतियोगित्वादिति । साध्यघटको यो भेदः प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन च यद् भट्टमतसिद्धं तदन्यत्वरूपो भेदस्तत्प्रतियोगित्वादित्यर्थः । भट्टमतसिद्धत्वादिति भावः । भट्टमतसिद्धत्वेन व्यवसायादिप्रागभावस्य पुनस्सङ्ग्रहे साध्याप्रसिद्धिरिति भावः । पुनः साध्याप्रसिद्धि निराकरोति—यदि चेति । अस्य इति विभाव्यते इत्यनेनाऽन्वयः । एकरूपेण तदभ्युपगमोऽवश्यं विवक्षणीय इति । येन रूपेण ज्ञानग्राहकत्वं तेन रूपेण प्रामाण्याग्राहकत्वाभ्युपगम आवश्यक इत्यर्थः । तथा च येन रूपेण ज्ञानग्राहकत्वं तेन रूपेण प्रामाण्याऽग्राहकत्वेन भट्टमतसिद्धं यत्तदन्यत्वाश्रय'स्वाश्रयज्ञानग्राहक'व्यवसायादिप्रागभावजन्यग्रहविषयत्वं साध्यमिति निष्कर्षः । तथा च ज्ञाततालिङ्गकानुमितिप्रागभावत्वेन व्यवसायादिप्रागभावस्य प्रामाण्यग्राहकत्वेन भट्टमतसिद्धत्वेऽपि येन रूपेण ज्ञानग्राहकता तेनैव रूपेण प्रामाण्याग्राहकता व्यवसायादिप्रागभावे न भट्टमतसिद्धा, ज्ञाततालिङ्गकानुमितित्वेन ज्ञानग्राहकता व्यवसायस्य प्रागभावे सत्त्वेऽपि ज्ञाततालिङ्गकानुमितित्वेन व्यवसायस्य प्रागभावे प्रामाण्याग्राहकता तु न भट्टमतसिद्धा 'किन्तु प्रामाण्यग्राहकतैव' इति तदन्यत्वस्य व्यवसायप्रागभावे सत्त्वातस्य साध्यघटकत्वं निर्विवादमेवेति ध्येयम् । अन्यथा एकरूपेण तदभ्युपगमाभावे, तस्याः व्यवसायादिसामग्र्याः । साध्यघटकत्वानुपपत्तेरिति । प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन च भट्टमतसिद्धसामग्रीभिन्नत्वाभावेनेति भावः । ननु सामग्र्यां भट्टमतासिद्धत्वसम्पादनेऽपि पूर्वोक्तरीत्या यावत्कारणसमुदायजन्यग्रहाऽप्रसिद्धचा साध्याप्रसिद्धिसम्भवेन एतत्प्रयासवैफल्यमिति चेन्न, सामग्रीनिवेशपक्षे भट्टाभिमतत्वेन साध्याघटकत्वसम्पादने ग्रन्थकृतो न निर्भरः, किन्तु एकरूपेण तदनभ्युपगमे सामग्री निवेश्यतां प्रागभावो वा निवेश्यतां भट्टमतासिद्धत्वं तथापि न स्यादित्यत्रैव तात्पर्यादिति ध्येयम् । तथा च एकरूपेण तदभ्युपगमे च, न दोषः न साध्यघटकत्वानुपपत्तिरित्यर्थः । व्यवसायादिप्रागभावस्य ज्ञाततालिङ्गकानुमितिप्रागभावत्वेन ज्ञानग्राहकतया व्यवसायादिप्रागभावत्वेन प्रामाण्याग्राहकतया भट्टमतसिद्धत्वेऽपि ज्ञाततालिङ्गकानुमितिप्रागभावत्वेन

**विषयः पाक इत्यादिवाक्यजशाब्दबोधस्य गुरुमते शब्दानुपस्थाप्यौदनसाधनताज्ञान-विषयत्वरूपयोग्यताविषयकस्य सामग्र्याः शब्दाजन्यतादृशयोग्यताज्ञानघटिततया ज्ञान-ग्राहकत्वेन भट्टमताऽसिद्धत्वसम्पादनं दीधितिकृतां प्रागभावमात्रोपादाने विरुध्येत, तादृशशाब्दबोधस्य भट्टमतेऽपि कार्यताज्ञानविषयकतया तत्प्रागभावमात्रस्य ज्ञानग्राहक-तया भट्टमतसिद्धत्वात्कथञ्चिदपि तद्भिन्नत्वानुपपत्तेः ।**

---

प्रामाण्यग्राहकतया 'व्यवसायप्रागभावस्य' भट्टमतसिद्धभिन्नत्वेन तज्जन्यग्रहस्य साध्य-घटकत्वादिति भावः। **तथापीति**। सामग्रीपदस्य प्रागभावमात्रपरत्वे दोषाभावे-ऽपीत्यर्थः। अग्रे अस्य भट्टमताऽसिद्धत्वसम्पादनं दीधितिकृतां विरुद्धचेतेत्यनेनाऽन्वयः। **ओदनकामकार्यताज्ञानविषयः पाक इति वाक्यजशाब्दबोधस्येति**। प्रयोजकत्वं षष्ठ्यर्थः। तस्य सामग्र्या इत्यनेनान्वयः। ओदनं कामयते इति ओदनकामः। कृतिसाध्यत्वप्रका-रकज्ञानं कार्यताज्ञानम्। तथा च ओदनकामकृतिसाध्यत्वप्रकारकज्ञानविषयतावदभिन्नः पाक इत्याकारकबोधस्येत्यर्थः। **गुरुमते इति**। गुरुमते पदानुपस्थाप्यार्थस्यापि। योग्यता-बलाच्छाब्दबोधे भानं स्वीक्रियते। योग्यता चान्वयबोधप्रयोजकरूपवत्त्वम्। **शब्दानु-पस्थाप्यौदनसाधनताज्ञानविषयकस्येति**। अस्य शाब्दबोधेऽन्वयः। गुरुमते ओदनकाम-कार्यताज्ञानविषयः पाक इति बोधे ओदनकामकार्यताज्ञानविषयत्वं पाके यथा भासते तथा योग्यताबलादोदनसाधनताज्ञानविषयत्वमपि तत्र भासते। सामग्र्याः निष्ठत्वं षष्ठ्यर्थः, तस्य शब्दाजन्यतादृशयोग्यताज्ञानघटितत्वेऽन्वयः। **शब्दाजन्यतादृशयोग्यताज्ञान-घटिततयेति**। इदं च भट्टमतासिद्धत्वसम्पादने हेतुः। भट्टमते शब्दाजन्ययोग्यताज्ञानस्य ज्ञानग्राहकत्वाभावेन ज्ञानग्राहिका या सामग्री तदन्यत्वं सम्पादयिष्यति दीधितिकारः। **भट्टमतासिद्धत्वसम्पादनमिति**। भट्टमतसिद्धा या सामग्री तदन्यत्वसम्पादनमित्यर्थः। प्रागभावमात्रोपादाने तद्विरुद्धचेतेति यावत्। प्रागभावस्य स्वाश्रयज्ञानग्राहकप्रागभाव-जन्यग्रहविषयस्वरूपसाध्यघटकत्वे ओदनकामकार्यताज्ञानविषयः पाक इति शाब्दबोध-प्रागभावस्य न तादृशशाब्दबोधप्रामाण्यग्राहकत्वम्, तादृशवाक्यजशाब्दबोधे ओदनसाध-नताज्ञानविषयत्वघटितप्रामाण्याभानात्, एवं च तत्प्रामाण्याग्राहकतया ओदनकाम-कृतिसाध्यताज्ञानग्राहकतया ज्ञानग्राहकत्वेन च भट्टमतसिद्धत्वमेव न तु तद्भिन्नत्वमिति तद्भिन्नत्वसम्पादने विरोधः स्पष्ट एवेति भावः। **तत्प्रागभावमात्रस्येति**। कार्यताज्ञान-ज्ञानप्रागभावमात्रस्येत्यर्थः। योग्यताबलाच्छब्दानुपस्थाप्य पदार्थभानवादिगुरुमते तादृश-बोधे ओदनसाधनताज्ञानभानेऽपि कार्यताज्ञानभानस्योभयमतसिद्धत्वादिति भावः। मात्रपदाच्छब्दानुपस्थाप्यार्थविषयकयोग्यताज्ञानघटितसामग्रीव्यवच्छेदः। **तादृशशाब्द-बोधस्य ओदनकामकार्यताज्ञानविषयः पाकः इति बोधस्य**। **ज्ञानग्राहकतयेति**। ज्ञानं कार्यताज्ञानं, तद्विषयको ग्रहः शाब्दबोधः, तज्जनकतयेत्यर्थः। **भट्टमतसिद्धत्वादिति**। प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन च भट्टमतसिद्धत्वादित्यर्थः। भट्टमतसिद्धा या सामग्री तदन्यत्वाभावादिति यावत्। तदेवाह—**तद्भिन्नत्वानुपपत्तेरिति**। भट्टमतसिद्ध-सामग्रीभिन्नत्वानुपपत्तेरित्यर्थः। तथा चाग्रे बाधवारणाय शब्दानुपस्थाप्यार्थविषयक-

ज्ञानव्यक्तिभेदानामुपादानात्तत्र ज्ञानत्वविशिष्टग्राहकत्वस्य विवक्षणाद्वा ज्ञानत्वे विधिप्रसिद्धिः ।

---

तथापि स्वाश्रयविषयकग्रहोत्पत्तिप्रयोजकतावच्छेदकरूपावच्छिन्नप्रयोज्योत्पत्तिकयावद्ग्रहविषयत्वरूपसाध्यविवक्षया नानुपपत्तिः । तत्तद्व्यवसायादिरूपज्ञानग्रहोत्पादप्रयोजकतावच्छेदकतत्तद्व्यक्त्युपधायककारणस्तोमनिष्ठसमुदायत्वावच्छिन्नतत्तद्व्यक्तिसामग्रीप्रयोज्योत्पत्तिकत्वस्य ज्ञानग्रहात्मकतत्तद्व्यवसायादिष्वेव तत्तन्मते यथायथं प्रसिद्धेः ।

ननु घटत्वादिप्रकारक-घटादिज्ञानग्राहकसामग्रीजन्यानां यावतां तादृशग्रहाणां विषयत्वं न तावत्तादृशज्ञाने प्रसिद्धम् । तादृशैकज्ञानव्यक्तिग्रहे तादृशापरज्ञानव्यक्तेरविषयत्वात्, नापि ज्ञानत्वे, घटत्वप्रकारकत्वमात्रेण तादृशज्ञानग्रहे नैयायिकादिनये ज्ञानत्वाभानादित्याशङ्कां परिहरति—ज्ञानव्यक्तीति ।

---

योग्यताज्ञाने भट्टमतासिद्धत्वव्यवस्थापनं "ज्ञानग्राहकत्वाभावप्रयुक्तं" व्यर्थम्, सामग्रीपदस्य प्रागभावमात्रपरत्वे तत्र प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन च भट्टमतसिद्धतया वाधाभावादिति समुदितार्थः । सामग्रीनिवेशे च व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकतदेकदेशे भट्टमतसिद्धसामग्रीभिन्नत्वाङ्गीकारेण कार्यताज्ञानप्रागभावेऽपि कारणसमुदायरूपसामग्रीत्वावच्छेदेन तद्भिन्नत्वोपपत्तिसम्भवः, परन्तु तद्रीत्यापि न तद्भिन्नत्वोपपत्तिसम्भव इति कथञ्चिदिति । तथापीति । स्वं—तत्तत्प्रमात्वम् । प्रयोजकतावच्छेदकरूपावच्छिन्नेति । प्रयोजकतावच्छेदकसमुदायत्वावच्छिन्नेत्यर्थः । तथा च तत्तत्प्रमात्वाश्रयतत्तज्ज्ञानोत्पत्तिप्रयोजकतावच्छेदकतत्तत्समुदायत्वावच्छिन्नप्रयोज्योत्पत्तिकयावद्ग्रहविषयत्वं साध्यम् । अत्र तत्तत्समुदायत्वपदेन चक्षुःसंयोगघटितसमुदायत्व-आत्ममनःसंयोगघटितसमुदायत्व-परामर्शघटितसमुदायत्वानां प्रत्येकं प्रयोजकतावच्छेदकत्वेनोपादेयम्, तेन नाप्रसिद्धिः, न चासाधारण्यानुपपत्तिरिति दिक् । प्रयोजकतावच्छेदकेति । अस्य समुदायत्वेऽन्वयः । तत्तद्व्यक्त्युपधायकेति । व्यवसायादिव्यक्त्युपधायकेत्यर्थः । तत्तन्मते गुरुमिश्रभट्टमते ।

ननु घटत्ववति घटत्वप्रकारकत्वाश्रयाणाम् अयं घट इत्याकारकज्ञानानां पुरुषकालभेदभिन्नत्वात्प्रत्येकं न कस्यापि तदाश्रयज्ञानग्राहकसामग्रीजन्ययावद्ग्रहविषयत्वं, तथा चोभयमते न विधिकोटिप्रसिद्धिरिति उभयमते विधिकोटिप्रसिद्ध्यर्थमाशङ्कते—नन्विति । तादृशज्ञानग्रहाणां घटत्ववति घटत्वप्रकारकज्ञानत्वाश्रयज्ञानग्राहकसामग्रीजन्ययावद्ग्रहाणामित्यर्थः । तादृशज्ञाने प्रामाण्याश्रयज्ञाने । तत्र हेतुमाह—तादृशैकज्ञानव्यक्तिग्रहे इति । व्यवसायादिग्रहे इति भावः । निरूपितत्वं सप्तम्यर्थः । तादृशापरज्ञानव्यक्तेः व्यवसायस्य, प्रामाण्यस्याप्युपलक्षणम्, निष्ठत्वं षष्ठ्यर्थः । तथा च तादृशैकज्ञानव्यक्तिविषयकग्रहनिरूपितविषयत्वस्य तादृशापरज्ञानेऽभावादिति भावः ।

ननु ज्ञानत्वजातावेव घटत्ववति घटत्वप्रकारकज्ञानत्वरूपप्रमात्वाश्रयज्ञानग्राहकसामग्रीजन्ययावद्ग्रहविषयत्वं प्रसिद्धमत आह—नापि ज्ञानत्व इति । विधिकोटिप्रसिद्धि-

तत्तद्व्यक्तित्वेन घटादिज्ञानव्यक्तीनां साध्येऽन्तर्भावनीयत्वादित्यर्थः। तत्र तत्तज्ज्ञानव्यक्तौ। विधिप्रसिद्धिरिति। तत्तज्ज्ञानव्यक्तिग्राहकसामग्रीजन्ययावद्ग्रहविषयत्वरूपविधिकोटिप्रसिद्धिरित्यग्रिमेणान्वयः। ग्राह्यज्ञानानां घटत्वादिप्रकारकघटादिज्ञानत्वेन निवेशेऽपि ज्ञानत्वे तत्प्रसिद्धिमुपपादयति—ज्ञानत्वविशिष्टेति। ज्ञानग्राहकेत्यनेन ज्ञानत्वविशिष्टस्वाश्रयविषयकज्ञानजनकसामग्रीविवक्षणादित्यर्थः। ज्ञानत्व इति। केवलघटत्वादिप्रकारकत्वेन ज्ञानग्रहस्य ज्ञानत्वविशिष्टाविषयकत्वेन व्यावर्त्तनादिति भावः।

यद्यपि प्रामाण्याग्राहकत्वेनेत्यादिविवक्षणे तद्वति तत्प्रकारकज्ञानत्वाग्राहकत्वमेव निवेश्यम्, अन्यथा ज्ञानत्वविशिष्टग्राहकसामग्र्युपादानेऽपि तद्वति तत्प्रकारकगुणाभिन्नं

---

रिति भावः। अप्रसिद्धौ हेतुमाह—घटत्वप्रकारकत्वमात्रेणेति। मात्रपदेन ज्ञानत्वव्युदासः। तादृशज्ञानग्रहे तद्वति तत्प्रकारकत्वाश्रयज्ञानग्रहे, तद्वति तत्प्रकारकत्वाश्रयज्ञानग्राहकसामग्रीजन्ययावद्ग्रहे इति यावत्। ज्ञानत्वाभानादिति। तादृशसामग्रीजन्यग्रहविषयत्वस्य ज्ञानत्वेऽभावादित्यर्थः। घटत्वप्रकारकवानहमित्यनुव्यवसायस्यापि तादृशग्रहान्तर्गततया तद्विषयत्वस्य ज्ञानत्वेऽभावादिति भावः। तत्तद्व्यक्तित्वेनेति। तथा च स्वाश्रयतत्तज्ज्ञानग्राहकसामग्रीजन्ययावद्ग्रहविषयत्वं फलितम्, तस्योभयमते एव तत्तज्ज्ञानव्यक्तौ प्रसिद्धिरिति भावः। ग्राह्यज्ञानानामिति। ज्ञानग्राहकेत्यत्र ग्रहविषयीभूतज्ञानानामित्यर्थः। अपिना ज्ञानत्वघटितप्रमात्वस्य तत्तज्ज्ञानव्यक्तीनां च समुच्चयः। केवलघटत्वप्रकारकत्वेनेति। कैवल्यं च ज्ञानत्वरहितत्वम्। ज्ञानग्रहस्य घटत्वप्रकारकवानित्यनुव्यवसायस्य।

प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन च भट्टमतसिद्धा या सामग्रीत्यत्र प्रामाण्याग्राहकत्वेनेत्यस्य तद्वति तत्प्रकारकज्ञानत्वरूपप्रामाण्याग्राहकत्वेनेत्यर्थविवक्षणेनैव ज्ञानत्वे विधिकोटिप्रसिद्धिसम्भवे ज्ञानग्राहकेत्यस्य ज्ञानत्वविशिष्टज्ञानविषयकग्रहजनकत्वविवक्षा व्यर्था, नापि त्रिनिगमनाविरहः, वक्ष्यमाणदोषादित्याशङ्कते—यद्यपीत्यादिना। मूलस्थ तदप्रामाण्याग्राहके तस्य यथाश्रुतार्थकत्वे घटत्वप्रकारकं ज्ञानं सविशेष्यकमित्यादिशाब्दसामग्र्याः घटज्ञानवान् घटेच्छावत्त्वादित्याद्यनुमितिसामग्र्याश्च अप्रामाण्याग्राहकत्वाद् ज्ञानग्राहकत्वाच्च तज्जन्यग्रहविषयत्वस्य प्रमात्वे विरहाद् बाधवारणायाऽप्रामाण्याग्राहकेत्यनेन तज्ज्ञानप्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन च भट्टमतसिद्धा या सामग्री तदन्यत्वस्य सामग्र्यां विवक्षणे इत्यर्थः। तथा च तादृशशाब्दसामग्र्याः अनुमितिसामग्र्याश्च प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन च भट्टमतसिद्धतया न बाध इति भावः। तद्वति तत्प्रकारकज्ञानत्वाऽग्राहकत्वमेवेति। प्रामाण्याग्राहकत्वेनेत्यनेनेति यावत्। एवकारेण तत्प्रकारकत्वस्य व्यावृत्तिः। तत्र सामग्र्याम्। निवेश्यमिति। तथा च तद्वति तत्प्रकारकज्ञानत्वाग्राहिका ज्ञानग्राहिका या भट्टमतसिद्धसामग्री तदन्यसामग्रीजन्येत्यादि निवेश्यमित्यर्थः। अन्यथा प्रामाण्याग्राहकत्वेनेत्यस्य तद्वति तत्प्रकारकत्वाग्राहकत्वार्थकत्वे, तथा च तद्वति तत्प्रकारकत्वाग्राहकत्वेन ज्ञानग्राहकत्वेन च भट्टमतसिद्धभिन्नत्वस्य सामग्र्यां निवेशे इति यावत्। तद्वति तत्प्रकारकगुणाभिन्नमिति शाब्दसामग्र्या अयं

ज्ञानमित्यादिशाब्दसामग्र्या तद्वति तत्प्रकारकज्ञानत्वरूपप्रामाण्याग्रहेण बाधस्य दुर्वारत्वात्; तथा च ज्ञानग्राहकपदेन ज्ञानत्वविशिष्टग्राहकत्वपर्यन्ताविवक्षणेऽपि ज्ञानत्वे प्रसिद्धिसम्भवः, तथापि यथाश्रुताभिप्रायेणेदम् ।

अन्यथा शाब्दबोधादिसामग्रीविशेषैः प्रामाण्याग्रहेण बाधप्रसङ्गस्य वारणाय तादृशसामग्रीव्यावर्तककथितविशेषणोपादाने तावतैव घटत्वादिरूपप्रकृतप्रामाण्यघटकप्रकार-

---

घट इति ज्ञानं घटत्ववति घटत्वप्रकारकगुणाभिन्नमिति शाब्दसामग्र्या । तद्वति तत्प्रकारकज्ञानत्वरूपप्रामाण्याग्रहेणेति । तादृशसामग्रीजन्यग्रहविषयत्वाभावस्य प्रामाण्ये सत्त्वेनेति यावत् । तथा च "घटत्ववति घटत्वप्रकारकत्वग्राहकत्वेन" घटत्ववति घटत्वप्रकारकत्वाग्राहकत्वेन ज्ञानग्राहकत्वेन च भट्टमतसिद्धभिन्ना तत्प्रमात्वाश्रयीभूतायं घट इति व्यवसायविषयको यस्तादृशवाक्यार्थबोधस्तज्जनकीभूता तद्वति तत्प्रकारकगुणाभिन्नं ज्ञानमिति शब्दघटिता सामग्री तज्जन्यग्रहविषयत्वस्य तद्वति तत्प्रकारकज्ञानत्वरूपप्रमात्वे विरहाद् बाध इति भावः । तद्वति तत्प्रकारकज्ञानत्वाग्राहकत्वेन ज्ञानग्राहकत्वेन च भट्टमतसिद्धा या सामग्री तदन्यत्वमिति रीत्या ज्ञानत्वनिवेशे तु तादृशवाक्यार्थबोधस्य तादृशज्ञानत्वघटितप्रमात्वविषयकत्वाभावेन तादृशसामग्र्या तद्वति तत्प्रकारकज्ञानत्वाग्राहकत्वेन ज्ञानग्राहकत्वेन च भट्टमतसिद्धसामग्रीत्वेनाऽसङ्ग्रहान्न बाध इति ध्येयम् । अत्र गुणपदनिवेशो विचारणीयः । तथा च "ज्ञानत्वघटित" तद्वति तत्प्रकारकज्ञानत्वाग्राहकत्वेन ज्ञानग्राहकत्वेन भट्टमतसिद्धभिन्नत्वादिनिवेशे च । ज्ञानग्राहकपदेनेति । मूलस्थेनेत्यादिः । ज्ञानत्वविशिष्टग्राहकत्वपर्यन्तानिवेशेऽपि ज्ञानत्वे प्रसिद्धिसम्भव इति ।

अयम्भावः—ज्ञानत्वविशिष्टग्राहकत्वपर्न्यतानिवेशे घटत्वप्रकारकवानहमिति ज्ञानमादायाऽप्रसिद्धिर्दत्ता परन्तु 'ज्ञानत्वघटित' तद्वति तत्प्रकारकज्ञानत्वाग्राहकत्वेन ज्ञानग्राहकत्वेन च भट्टमतसिद्धसामग्रीभिन्नत्वस्य सामग्र्यां निवेशे घटत्वप्रकारकवानहमित्यनुव्यवसायसामग्र्या तद्वति तत्प्रकारकज्ञानत्वाग्राहकत्वेन ज्ञानग्राहकत्वेन च भट्टमतसिद्धतया "भट्टमतसिद्धभिन्नत्वाभावेन" साध्यानन्तर्गतत्वेन घटत्वप्रकारकज्ञानवानहमित्यनुव्यवसायसामग्र्या एव साध्यान्तर्गतत्वेन तज्जन्यग्रहविषयत्वस्य ज्ञानत्वेऽपि प्रसिद्धिसम्भवाद् ज्ञानत्वविशिष्टग्राहकत्वनिवेशो व्यर्थं इति भावः ।

तथापीति । पारिभाषिकाऽप्रामाण्याग्राहकत्वविवक्षणे ज्ञानत्वे प्रसिद्धिसम्भवेऽपीत्यर्थः । यथाश्रुताभिप्रायेणेति । तदप्रामाण्याग्राहकेति मूलस्येत्यर्थः । इदं ज्ञानत्वविशिष्टग्राहकत्वपर्यन्तानुधावनम्, अन्यथा तदप्रामाण्याग्राहकत्वमित्यनेन "ज्ञानत्वघटित" तद्वति तत्प्रकारकज्ञानत्वाग्राहिका ज्ञानग्राहिका च या भट्टमतसिद्धसामग्री तदन्यत्वविवक्षणे, अस्य वैफल्यादित्यनेनान्वयः । यथाश्रुतार्थं परित्यज्य पारिभाषिकाऽप्रामाण्याग्राहकत्वविवक्षणे ज्ञानत्वविशिष्टग्राहकत्वपर्यन्तानिवेशेऽपि ज्ञानत्वे विधिकोटिप्रसिद्धिसम्भवे दीधितिकृतस्तत्प्रयासो विफल एवेति भावः । शाब्दबोधादिसामग्रीविशेषैः घटत्ववति घटत्वप्रकारकं गुणाभिन्नमित्यादिशाब्दबोधस्य शब्दघटितसामग्रीविशेषैः । प्रामाण्याग्रहेणेति । तादृशसामग्रीजन्यग्रहस्य प्रमात्वविषयकत्वाभावेनेति यावत् । बाधप्रसङ्गस्य

कत्वत्वेन ज्ञानविषयकग्रहवारणे विना प्रयासं घटत्वादौ विधिप्रसिद्धिसम्भवात् ज्ञानत्वे तत्प्रसिद्धिसम्पादकप्रयासवैफल्यादिति नानुपपत्तिः ।

वस्तुतस्तु तद्वति तत्प्रकारकज्ञानत्वत्वेन पक्षत्वं न विचारसहम्, ज्ञानत्वत्वस्य स्वतोऽग्राह्यतया तादृशप्रामाण्यत्वविशिष्टस्य स्वतोग्राह्यत्वसाधने बाधात्, अतस्तद्वति तत्प्रकारकत्वत्वस्यैव पक्षतावच्छेदकत्वं स्वीकरणीयम्, तथा च तद्रूपावच्छिन्नाग्राहकत्वमेव प्रामाण्याग्राहकत्वेनेत्यत्र विवक्षणीयम्, एवं च ज्ञानत्वविशिष्टग्राहकत्वविवक्षयैव ज्ञानत्वे विधिकोटिप्रसिद्धिः ।

वारणायेति । तद्वति तत्प्रकारकगुणाभिन्नज्ञानमिति शाब्दसामग्र्या तद्वति तत्प्रकारकत्व-ग्राहकत्वेन तद्वति तत्प्रकारकत्वाग्राहिका ज्ञानग्राहिका च या सामग्री तदन्यत्वेन साध्य-घटकतया तज्जन्यग्रहविषयत्वस्य प्रमात्वे विरहाद् बाधप्रसङ्गः, तद्वारणाय प्रामाण्या-ग्रहेणेत्यर्थः । तथा च तद्वति तत्प्रकारकज्ञानत्वाग्राहिका ज्ञानग्राहिका च या सामग्री तदन्यत्वविरहेण साध्यानन्तर्गतत्वान्न बाध इति भावः । तदेवाह—तादृशसामग्रीव्या-वर्त्तककथितविशेषणोपादान इति । तद्वति तत्प्रकारकगुणाभिन्नमिति शाब्दसामग्रीव्यावर्त्त-कतद्वति तत्प्रकारकज्ञानत्वाग्राहकत्वेन ज्ञानग्राहकत्वेन च भट्टमतसिद्धभिन्नत्वविशेषणो-पादानस्यावश्यकत्वे इत्यर्थः । तावतैव तादृशविशेषणोपादानेनैव, एवकारेण ज्ञानत्व-विशिष्टग्राहकत्वविशेषणस्य व्यावृत्तिः । घटत्वादिरूपं यत्प्रकृतप्रामाण्यघटकं तत्प्रकारक-त्वत्वेन घटत्वप्रकारकत्वत्वेनेति यावत् । ज्ञानविषयकग्रहवारणे घटत्वप्रकारकवान-हमित्यनुव्यवसायवारणे, तत्सामग्र्याः घटत्वप्रकारकज्ञानत्वाग्राहकत्वेन ज्ञानग्राहकत्वेन च भट्टमतसिद्धत्वादिति भावः । विनाप्रयासमिति । ज्ञानत्वविशिष्टग्राहत्वपर्यन्ताऽनि-वेशेऽपि । घटत्वादौ विधिप्रसिद्धिसम्भवादिति । स्वाश्रयज्ञानग्राहकसामग्रीजन्यग्रहविषय-त्वरूपसाध्यप्रसिद्धिसम्भवादित्यर्थः । तत्प्रसिद्धिसम्पादकप्रयासवैफल्यादिति । ज्ञानत्वे तादृशसाध्यस्य प्रसिद्धिसम्पादको यः ज्ञानत्वविशिष्टग्राहकत्वरूपः प्रयासस्तद्वैफल्यादि-त्यर्थः ।

ज्ञानत्वविशिष्टग्राहकत्वस्य साफल्यं दर्शयति—वस्तुतस्तु इति । ज्ञानत्वस्य स्वतोऽग्राह्यतयेति । ज्ञानत्वजातेर्घटमहं जानामीत्यनुव्यवसायेऽनुल्लिख्यभानतया स्वरूपतो-भानेन ज्ञानत्वत्वविशिष्टज्ञानत्वस्य ज्ञानग्राहकसामग्रीजन्यज्ञानविषयत्वरूपस्वतोग्राह्य-त्वाभावेनेत्यर्थः । स्वतोग्राह्यत्वसाधने ज्ञानप्रामाण्यं ज्ञानग्राहकसामग्रीग्राह्यमित्यनुमितौ बाधादिति । ज्ञानत्वत्वविशिष्टे ज्ञानग्राहकसामग्रीग्राह्यत्वरूपस्वतोग्राह्यत्वाभावादि-त्यर्थः । तद्वति तत्प्रकारकत्वत्वस्यैवेति । एवकारेण तद्वति तत्प्रकारकज्ञानत्वस्य व्या-वृत्तिः । पक्षतावच्छेदकत्वं स्वीकरणीयमिति । तद्वति तत्प्रकारकत्वस्य जात्यखण्डोपाध्य-तिरिक्ततया तद्वति तत्प्रकारकत्वेन भानान्न बाधावकाश इति भावः । तथा च तद्वति तत्प्रकारकत्वत्वेन पक्षत्वे च । तद्रूपावच्छिन्नाग्राहकत्वमेवेति । तद्वति तत्प्रकारकत्वत्वा-वच्छिन्नाग्राहकत्वमेवेत्यर्थः । एवकारेण तद्वति तत्प्रकारकज्ञानत्वावच्छिन्नाग्राहकत्व-व्युदासः । एवं च घटत्वप्रकारकत्वमात्रेण ज्ञानत्वे च । ज्ञानत्वविशिष्टग्राहकत्वविवक्षा-

इदं ज्ञानमप्रमेति ज्ञानग्राहकेण प्रामाण्याऽग्रहाद् बाधवारणाय अप्रामाण्याग्राहकेति । अप्रामाण्यं—प्रामाण्यविरोधि ।

---

न च प्रामाण्यपदस्य तद्वति तत्प्रकारकत्वमात्रार्थकत्वे यथाश्रुतपरित्यागाद् दोषः, प्रामाण्यपदेन तद्वति तत्प्रकारकज्ञानेतरत्वव्यापकभेदप्रतियोगितावच्छेदकत्वे सति तद्वति तत्प्रकारकज्ञाननिष्ठभेदप्रतियोगितानवच्छेदकत्वेन तद्वति तत्प्रकारकज्ञानत्वरूपप्रकृत्यर्थतावच्छेदकबोधनादिति वाच्यम् । अगत्या यथाश्रुतार्थपरित्यागात्, प्रामाण्याग्राहकत्वेनेत्यत्र च ज्ञानत्वघटितप्रामाण्यग्राहकत्वं प्रतियोगितया विवक्षितमित्यत्रैव ज्ञानत्वविशिष्टस्य विवक्षणादित्यस्य तात्पर्यमित्यप्याहुः ।

इति ज्ञानग्राहकेण = इत्याकारकज्ञानग्रहजनकसामग्र्या । अप्रामाण्यपदस्य भ्रमत्वार्थकत्वे प्रमात्वाभावार्थकत्वे च भ्रमत्वग्राहकेण प्रामाण्याग्रहाद् बाध इति तदुभयमनुगम-

---

वेति । ज्ञानग्राहकपदेनेत्यादिः । एवकारेण ज्ञानग्राहकत्वमात्रस्य व्यवच्छेदः । तथा सति घटत्वप्रकारकवानहमित्यनुव्यवसायस्यापि यावद्ग्रहान्तर्गततया तद्विषयत्वस्य ज्ञानत्वेऽसत्त्वादिति भावः ।

शङ्कते—न चेति । तद्वति तत्प्रकारकत्वमात्रार्थकत्व इति । मात्रपदेन ज्ञानत्वव्युदासः । यथाश्रुतेति । यथाश्रुतार्थेत्यर्थः । शक्यार्थपरित्यागादिति भावः । दोष इति । वादिवाक्ये स्वारसिकलक्षणानाश्रयणादिति भावः । शक्यार्थमाह—तद्वतीत्यादि । यथा घटत्ववति घटत्वप्रकारकज्ञानत्वे घटत्ववति घटत्वप्रकारकज्ञानेतरत्वव्यापकभेदप्रतियोगितावच्छेदकत्वं घटत्ववति घटत्वप्रकारकज्ञाननिष्ठभेदप्रतियोगितानवच्छेदकत्वमपि । अगत्या यथाश्रुतार्थपरित्यागादिति । अन्यथा तद्वति तत्प्रकारकज्ञानत्वत्वविशिष्टे तादृशस्वतोग्राह्यत्वसाधने ज्ञानग्राहकसामग्रीजन्यग्रहविषयत्वरूपस्वतोग्राह्यत्वरूपसाध्याप्रसिद्धिरिति भावः । प्रामाण्याग्राहकत्वेनेत्यत्र प्रामाण्यं ज्ञानत्वघटितमित्येव दीधितिकृत्तात्पर्यमिति केषाञ्चिन्मतमाह—प्रामाण्याग्राहकत्वेनेत्यत्र चेति । प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन च भट्टमतसिद्धा या सामग्रीत्यत्र चेत्यर्थः । इत्यत्रैवेति । एवकारेण ज्ञानग्राहकेति साध्यकोटिव्युदासः । तथा च साध्यकोटौ ज्ञानग्राहकपदेन ज्ञानत्वविशिष्टग्राहकत्वविवक्षणे न तात्पर्यमिति भावः ।

तदप्रामाण्याऽग्राहकत्वदलस्य प्रयोजनमाह दीधितौ — इदं ज्ञानमप्रमेति । ज्ञानग्राहकेणेति । ज्ञानविषयको यो ग्रहस्तज्जनकेनेत्यर्थः । तदेवाह —इत्याकारकज्ञानग्रहजनकसामग्र्या इति । प्रामाण्याग्रहादिति । तादृशसामग्रीजन्यग्रहविषयत्वस्य प्रमात्वेऽसत्त्वादिति यावत् । बाधवारणायेति । तथा च यत्रादौ अयं घट इति ज्ञानं तत इदं ज्ञानमप्रमेति ज्ञानग्रहः तज्जनकसामग्र्या अपि ज्ञानग्राहकसामग्र्यन्तर्गततया तज्जन्यग्रहस्य "इदं ज्ञानमप्रमेत्याकारकस्य" यावद्ग्रहान्तर्गततया तद्विषयत्वस्य प्रमात्वे विरहाद् बाधवारणायाऽप्रामाण्याग्राहकेति सामग्रीविशेषणम् । तथा च तादृशसामग्र्या अप्रामाण्याऽग्राहकत्वविरहान्न दोषः । भ्रमत्वार्थकत्वे इति । प्रमात्वाभावग्राहकेणेति शेषः । प्रामाण्याग्रहादित्यनेनाऽस्याऽन्वयः । बाध इति । तथा चाऽप्रामाण्यं यदि भ्रमत्वम्, तदा भ्रमत्वा-

यति। अप्रामाण्यमिति। प्रामाण्यविरोधित्वं तत्प्रामाण्यावच्छेदकावच्छेदेन तद्वद्वृत्तिभिन्नत्वम्। घटत्वादिना घटपटादिविषयकज्ञाने घटपटादिरूपांशभेदेन घटत्वादिप्रमात्वतदभावादिसत्त्वात्तदभावादीनामपि तद्विरोधित्वानुपपत्तिरिति अंशैक्योपादानम्।

ग्राहिका इत्यर्थः स्यात्, तथासति इदं ज्ञानं प्रमात्वाभाववदित्याकारको यो ज्ञानग्रहस्तज्जनकसामग्रीजन्यग्रहविषयत्वस्य प्रमात्वेऽसत्त्वाद् बाधः। यदि अप्रामाण्यं प्रमात्वाभावस्तदा प्रमात्वाभावाग्राहिक इत्यर्थः स्यात्, तथा सति इदं ज्ञानं भ्रम इत्याकारको यो ज्ञानग्रहः तज्जनकसामग्र्या अपि प्रमात्वाभावाऽग्राहकत्वात्तज्जन्यग्रहविषयत्वस्य प्रमात्वेऽसत्त्वाद् बाध इत्यर्थः। तदुभयम् प्रमात्वाभावं भ्रमत्वं च। **प्रामाण्यविरोधीति।** तथा च प्रामाण्यविरोध्यग्राहिका स्वाश्रयज्ञानग्राहिका या सामग्री तज्जन्यग्रहविषयत्वं साध्यम्। प्रामाण्यविरोधित्वं परिष्करोति—**प्रामाण्यावच्छेदकावच्छेदेन तद्वद्वृत्तिभिन्नत्वमिति।** तत्प्रामाण्यं घटत्ववद्विशेष्यकत्वे सति घटत्वप्रकारकज्ञानत्वम्, तदवच्छेदकं घटत्ववद्विशेष्यकत्वम्, तदवच्छेदेनेत्यर्थः। तथा च प्रामाण्यावच्छेदकावच्छेदेन प्रमात्ववद्वृत्तिभिन्नत्वमिति भावः। घटत्ववद्विशेष्यकत्वव्यापकेति यावत्। अस्य तद्वद्वृत्तौ अन्वयः। घटत्ववद्विशेष्यकत्ववति ज्ञाने वृत्तेः प्रमात्वस्य भेदो भ्रमत्वे प्रमात्वाभावे चास्तीति तत्र प्रमात्वविरोधित्वोपपत्तिः। प्रमात्वस्य प्रमात्वविरोधितापत्तिः, अवच्छेदकभेदेन प्रमात्ववद्वृत्तित्वाभावसत्त्वात्, अत्यन्ताभावस्याव्याप्यवृत्तित्वादतो विरोधित्वं भेदघटितमुक्तम्। तथा च तत्प्रामाण्यावच्छेदकावच्छेदेन प्रमात्ववद्वृत्तिवद्यत्तदन्यत्वं फलितम्। तत्प्रामाण्यावच्छेदकावच्छेदेनेत्यस्य प्रयोजनमाह—**घटत्वादिना घटपटादिविषयकज्ञाने इति।** यत्र घटपटयोः इमौ घटौ इति ज्ञानं तत्रेत्यर्थः। **घटपटादिरूपांशभेदेनेति।** घटविषयकत्व-पटविषयकत्वरूपावच्छेदकभेदेनेत्यर्थः। **घटत्वादिप्रमात्वतदभावादिसत्त्वादिति।** घटत्वादिप्रमात्वस्य घटविषयकत्वावच्छेदेन घटत्वादिप्रमात्वाभावस्य पटविषयकत्वावच्छेदेन सत्त्वादित्यर्थः। आदिना घटत्वादिप्रमात्वघटत्वादिभ्रमत्वयोः परिग्रहः। तदभावादीनामपि प्रमात्वाभावादीनामपि, आदिना भ्रमत्वस्य परिग्रहः। **तद्विरोधित्वानुपपत्तेरिति।** प्रमात्वविरोधित्वानुपपत्तेरित्यर्थः। अवच्छेदकभेदेनैकत्र ज्ञाने प्रमात्वप्रमात्वाभावादीनां सत्त्वात्। तथा च तत्प्रामाण्यावच्छेदकावच्छेदेनेत्यनुक्तौ घटत्वादिना घटपटादिविषयकज्ञाने पटविषयकत्वावच्छेदेन घटविषयकप्रमात्वाभावस्य घटविषयकत्वावच्छेदेन प्रमात्वस्य च सत्त्वेन तादृशज्ञाने प्रमात्ववद्वृत्तिभिन्नत्वविरहेण विरोधित्वानुपपत्तौ च तादृशज्ञानविषयको यो घटावहं जानामीत्याकारको ग्रहस्तज्जनकसामग्र्याः प्रामाण्यविरोध्यग्राहकत्वात् ज्ञानग्राहकत्वाच्च यावदन्तर्गततया तज्जन्यग्रहविषयत्वस्य प्रमात्वेऽसत्त्वाद् बाध इति भावः। **अंशैक्योपादानमिति।** तत्प्रामाण्यावच्छेदकावच्छेदेनेत्युपादानमित्यर्थः। उपादाने च तत्प्रामाण्यावच्छेदकं यद्घटत्ववद्विशेष्यकत्वं तदवच्छेदेन घटत्वप्रकारकज्ञानत्वरूपप्रमात्ववद्वृत्तिभिन्नत्वरूपविरोधित्वस्य पटविषयकत्वावच्छेदेन घटत्वाभाववति घटत्वप्रकारकज्ञानत्वात्मकाप्रामाण्ये सत्त्वेन तादृशसामग्र्या प्रामाण्यविरोध्यग्राहकत्वाभावान्न बाध इति भावः।

**व्याप्यवृत्तेरवच्छेदकानभ्युपगमे ज्ञानत्वादेः प्रामाण्यविरोधितावारणाय प्रमात्वावच्छेदकानवच्छिन्नत्वावच्छिन्नत्वोभयाभाववत्प्रमानिष्ठाधिकरणताकान्यत्वं प्रमात्वविरोधित्वं वक्तव्यम् ।**

ननु ज्ञानत्वस्य व्याप्यवृत्तितया प्रमात्ववति प्रमात्मकज्ञाने तस्य प्रामाण्यावच्छेदकावच्छेदेनाऽवर्तमानत्वात्प्रामाण्यवद्वृत्तिभिन्नत्वात्प्रमात्वविरोधित्वापत्तिः तथा च तद्वति तत्प्रकारकज्ञानत्वरूपप्रामाण्यावच्छेदकाप्रसिद्ध्या प्रामाण्यविरोध्यग्राहकत्वाऽप्रसिद्ध्या साध्याप्रसिद्धिरत आह—**व्याप्यवृत्तेरवच्छेदकानभ्युपगम** इति । **वक्तव्यमिति** । तथा च यद्यद्व्यक्तिनिरूपितप्रमानिष्ठाधिकरणता प्रमात्वावच्छेदकानवच्छिन्नत्व-अवच्छिन्नत्वोभयाभाववती तत्तद्व्यक्तिभेदकूटवत्वं प्रमात्वविरोधित्वमित्यर्थः । ज्ञानत्वरूपयद्व्यक्तिनिरूपितप्रमानिष्ठाधिकरणतायामवच्छिन्नत्वविरहेण तत्प्रयुक्तोभयाभावसत्त्वात्तद्व्यक्तिभेदस्य ज्ञानत्वे विरहाज्ज्ञानत्वस्य न प्रामाण्यविरोधित्वम् । प्रमात्वाभावनिरूपिता एवं भ्रमत्वनिरूपिता चाधिकरणता न प्रमानिष्ठेति प्रमात्वाभाव-भ्रमत्वयोर्यद्व्यक्तिपदेनोपादानाऽसम्भवात्तत्तद्व्यक्तिभिन्नत्वस्य प्रमात्वाभावे भ्रमत्वे च सत्त्वात् प्रमात्वविरोधित्वोपपत्तिः । अत एव प्रमापदमिति ध्येयम् ।

घटत्वादिना घटपटविषयकज्ञानरूपप्रमानिष्ठाधिकरणतायां घटावाभाववद्विशेष्यकत्वावच्छिन्नघटत्वप्रकारकत्वरूपप्रमात्वाभावनिरूपितायां प्रमात्वावच्छेदकीभूतघटत्ववद्विशेष्यकत्वानवच्छिन्नत्व-पटत्ववद्विशेष्यकत्वावच्छिन्नत्वरूपावच्छिन्नत्वोभयोः सत्त्वेन यन्निरूपिताधिकरणतापदेन प्रमात्वाभावनिरूपिताधिकरणताथा धर्त्तुमशक्यतया ज्ञानत्वनिरूपिताधिकरणतैव धर्त्तव्या तदन्यत्वस्य तादृशघटत्वाभाववद्विशेष्यकत्वावच्छिन्नघटत्वप्रकारकत्वरूपाऽप्रमात्वे सत्त्वेन तादृशाप्रमात्वे प्रमात्वविरोधित्वोपपत्तिः । घटत्वपटत्वादिनिरूपिताधिकरणता न प्रमानिष्ठेति यद्व्यक्तिपदेन घटत्वादेर्धारणाऽसम्भवात्तत्तद्व्यक्तिभिन्नत्वस्य घटत्वादौ सत्त्वात्तेषामपि प्रमात्वविरोधित्वं बोध्यम् । कस्यापि वस्तुनो निरूपितायां प्रमानिष्ठाधिकरणतायामन्यतराभावाऽसत्त्वाद् विरोधित्वाऽसम्भवः स्यादतोऽन्यतराभावो नोक्त इति ध्येयम् ।

अवच्छिन्नत्वाभावाऽनिवेशे ज्ञानत्वस्य प्रमात्वविरोधित्वापत्तिः, ज्ञानत्वनिरूपितप्रमानिष्ठाधिकरणतायां प्रमात्वावच्छेदकानवच्छिन्नत्वाभावस्यासत्त्वेन यद्व्यक्तिपदेन ज्ञानत्वस्य धर्त्तुमशक्यतया घटत्ववति घटत्वप्रकारकत्वादेरेव धारणात्, "घटत्ववद्विशेष्यकत्वस्य प्रामाण्यावच्छेदकत्वात्", तदन्यत्वस्य ज्ञानत्वे सत्त्वात् । तदुपादाने च ज्ञानत्वनिरूपितप्रमानिष्ठाधिकरणतायामवच्छिन्नत्वविरहप्रयुक्तोभयाभावसत्त्वेन यद्यद्व्यक्तिपदेन ज्ञानत्वस्यापि धारणात्तदन्यत्वस्य ज्ञानत्वे विरहान्न विरोधित्वापत्तिः ।

अवच्छिन्नत्वाभावमात्रनिवेशे घटत्ववति घटत्वप्रकारकत्वरूपप्रमात्वस्यापि प्रमात्वविरोधित्वापत्तिः । तादृशप्रमात्वनिरूपितप्रमानिष्ठाधिकरणतायां घटत्ववद्विशेष्यकत्वावच्छिन्नत्वरूपावच्छिन्नत्वसत्त्वेनावच्छिन्नत्वाभावविरहेण यद्व्यक्तिपदेन तादृशप्रमात्वस्य धारणाऽसम्भवेन ज्ञानत्वस्यैव धारणात्तदन्यत्वस्य तादृशप्रमात्वे सत्त्वात् ।

**यत्तु प्रमात्वग्रहप्रतिबन्धकीभूतग्रहविषयत्वं तद्विरोधित्वम्, भ्रमत्वघटत्वादिग्रहस्य प्रमात्वग्रहे ग्राह्याभावावच्छेदकधर्मदर्शनादिविधया प्रतिबन्धकत्वात्, भ्रमत्वघटत्वादीनां प्रमात्वविरोधितेति ।**

**तदसत् । पुरोवर्त्तिविशेष्यकत्वावच्छेदेन प्रमात्वाभावग्रहदशायां तद्धर्मज्ञानस्यापि प्रमात्वग्रहप्रतिबन्धकतया तेषामपि प्रमात्वविरोधितया प्रामाण्यग्रहसामग्र्या विरोध्यग्राहकत्वस्य दुर्घटत्वात् ।**

---

विशिष्टाभावस्य विशेषणाभावरूपतया उक्तरीत्या ज्ञानत्वे प्रमात्वविरोधित्वापत्तिरत उभयाभावनिवेशः । अखण्डाभावघटकतया सार्थक्याच्च ।

पक्षधरमिश्रमतमुपन्यस्य निरस्यति—**यत्त्विति** । **प्रमात्वग्रहेति** । प्रमात्वविषयको यो ग्रहः—इदं ज्ञानं प्रमेति ग्रहः तत्प्रतिबन्धकीभूतो यो ग्रहः इदं ज्ञानं प्रमात्वाभाववदिति ग्रहः । इदं ज्ञानं भ्रम इति ग्रहश्च तद्विषयत्वं प्रमात्वाभावे भ्रमत्वे च । तद्विरोधित्वं प्रमात्वविरोधित्वमित्यर्थः । न तूक्तं सहानवस्थानलक्षणं तदिति यावत् । तथा च प्रमात्वग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धतावच्छेदकविषयितानिरूपकत्वं प्रमात्वविरोधित्वमिति भावः । ननु भ्रमत्वे प्रमात्वविरोधित्वमनुपपन्नम्, तद्धर्मिकतद्वत्ताबुद्धिं प्रति तद्धर्मिकतदभाववत्तानिश्चयस्य प्रतिबन्धकत्वेन प्रमात्वाभावनिश्चयस्यैव प्रतिबन्धकत्वात् मणिममन्त्रादिन्यायेन प्रतिबन्धकत्वे मानाभावाच्च, एवं च प्रमात्वविरोध्यग्राहकसामग्रीपदेन भ्रमत्वग्राहकसामग्र्या अपि धर्तुं शक्यतया तज्जन्यग्रहविषयत्वस्य प्रमात्वेऽसत्त्वाद्बाध इत्यतो निश्चयविशिष्टनिश्चयत्वेन प्रतिबन्धकत्वमाश्रयते । **भ्रमत्वघटत्वादिग्रहस्येति** । इदं ज्ञानं भ्रमत्ववत्, इदं ज्ञानं घटत्ववदित्यादित्यादिग्रहस्येत्यर्थः । **ग्राह्याभावावच्छेदकधर्मदर्शनादिविधयेति** । प्रमात्वाभावावच्छेदकज्ञानविधयेत्यर्थः । भ्रमत्ववत्प्रमात्वाभाववद्, भ्रमत्ववच्चेदं ज्ञानम्, घटत्ववत्प्रमात्वाभाववद् घटत्ववच्चेदं ज्ञानमित्यादि ज्ञानानां निश्चयविशिष्टनिश्चयत्वेनेत्यर्थः । **प्रतिबन्धकत्वादिति** । इदं ज्ञानं भ्रमत्ववत्, एवमिदं ज्ञानं घटत्ववदिति निश्चयस्यापि इदं ज्ञानं प्रमेति बुद्धिप्रतिबन्धकत्वादिति भावः । **भ्रमत्वघटत्वादीनां प्रमात्वविरोधितेति** । निश्चयविशिष्टनिश्चयत्वेन इदं ज्ञानं भ्रमत्ववत् एवमिदं ज्ञानं घटत्ववदिति निश्चयस्य प्रतिबन्धकतया भ्रमत्वघटत्वादीनां तादृशप्रतिबन्धकज्ञानविषयत्वादिति भावः । भ्रमत्वस्य विरोधित्वे न बाधा, घटत्वस्य विरोधित्वे नोक्तग्रन्थासङ्गतिः ।

तन्निरस्यति—**तदसदिति** । यत्तु मतमसदित्यर्थः । **पुरोवर्त्तिविशेष्यकत्वावच्छेदेन प्रमात्वाभावग्रहदशायामिति** । पुरोवर्त्तित्ववत्प्रमात्वाभाववदिति निश्चयकाले इत्यर्थः । एवं ज्ञानत्ववत्प्रमात्वाभाववदिति निश्चयकाले । **तद्धर्मज्ञानस्यापीति** । पुरोवर्त्तित्ववदिदं ज्ञानमित्यस्यापीत्यर्थः । अपिना ज्ञानत्ववदिदं ज्ञानमित्यस्य समुच्चयः । **प्रमात्वग्रहप्रतिबन्धकतयेति** । इदं ज्ञानं प्रमेति बुद्धिप्रतिबन्धकतयेत्यर्थः । तेषामपि पुरोवर्त्तित्व-ज्ञानत्वादीनामपि, अपिना भ्रमत्वप्रमात्वाभावयोः समुच्चयः, प्रमात्वविरोधितया प्रमात्वग्रहप्रतिबन्धकज्ञानविषयतया, **प्रामाण्यग्राहकसामग्र्या** स्वाश्रयज्ञानग्राहकसामग्र्या

न च भवन्मते ज्ञानत्वादिधर्माणां प्रामाण्याविरोधितया तदवच्छेदेन तद्वति तत्प्रकारकत्वाद्यभावग्रहदशायां विरोध्यग्राहिकया ज्ञानत्वादिग्राहकसामग्र्या प्रामाण्याऽग्रहाद् बाधवारणमशक्यम् ।

यदि च प्रामाण्यस्य लौकिकप्रत्यक्षमङ्गीकुर्वतां तदापि लौकिकप्रामाण्यभानमुपपद्यत एव, अवच्छेदकधर्मदर्शनादेलौकिकप्रत्यक्षाविरोधित्वात्, मिश्रातिरिक्तमीमांसकमते प्रामाण्यभानस्य लौकिकसन्निकर्षघटितसामग्र्यनधीनत्वेऽपि तादृशसामग्रीतुल्यप्रामाण्य-

---

विरोध्यग्राहकत्वस्य प्रामाण्यविरोध्यग्राहकत्वस्य । दुर्घटत्वादिति । ज्ञानत्व-'पुरोवर्त्तित्व'-ग्राहकसामग्र्या विरोधिग्राहकत्वादिभावः । तथा च साध्याप्रसिद्धिरिति भावः । तथा च प्रतिबन्धकीभूतज्ञानविषयत्वं न विरोधित्वमिति ध्येयम् ।

सिद्धान्तिमते बाधमाशङ्कते—न चेति । भवन्मते यद्यद्व्यक्तिनिरूपितप्रमानिष्ठाधिकरणताप्रामाण्यावच्छेदकानवच्छिन्नत्वाऽवच्छिन्नत्वोभयाभाववती तत्तद्व्यक्तिभिन्नत्वरूपप्रामाण्यविरोधित्ववादिमते, ज्ञानत्वादिधर्माणाम् आदिना पुरोवर्त्तित्वधर्मपरिग्रहः, प्रामाण्याविरोधितया ज्ञानत्वनिरूपितप्रमानिष्ठाधिकरणतायाम् अवच्छिन्नत्वविरहप्रयुक्तोभयाभावसत्त्वेन ज्ञानत्वादेस्तत्तद्व्यक्तिपदेन धारणाद् ज्ञानत्वादौ तदन्यत्वविरहात्, तदवच्छेदेन ज्ञानत्वावच्छेदेन । तद्वति तत्प्रकारकत्वाद्यभावग्रहदशायामिति । ज्ञानत्ववत् प्रामाण्याभाववदिति निश्चयकाले इत्यर्थः । विरोध्यग्राहिकयेति । प्रामाण्यविरोध्यग्राहिकयेत्यर्थः । ज्ञानत्वस्य प्रमात्वविरोधित्वाभावादिति भावः । अनेन तादृशसामग्र्याः साध्यघटकत्वं सूचितम् । ज्ञानत्वादिग्राहकसामग्र्या इति । प्रमात्वाश्रयज्ञानग्राहकसामग्र्या इत्यर्थः । प्रामाण्याग्रहादिति । प्रामाण्यविषयकग्रहाभावादित्यर्थः । तादृशसामग्रीजन्यग्रहविषयत्वस्य प्रमात्वेऽभावादित्यर्थः । बाधवारणमशक्यमिति । तथा च साध्यकोटौ स्वाश्रयज्ञानग्राहकेत्यनेन ज्ञानत्वविशिष्टग्राहकत्वस्य विवक्षणेन तस्य ज्ञानत्ववदिदमिति निश्चयघटितत्वेन ज्ञानत्ववत्प्रामाण्याभाववदिति निश्चयविशिष्टज्ञानत्ववदिदमिति निश्चयकालीना या ज्ञानत्वविशिष्टग्राहिका सामग्री तज्जन्यग्रहविषयत्वस्य प्रमात्वे विरहाद् बाध इति भावः ।

ननु निश्चयविशिष्टनिश्चयस्य लौकिकसन्निकर्षाजन्यदोषविशेषाजन्यतद्वत्ताबुद्धि प्रत्येव प्रतिबन्धकत्वात्, प्रमात्वस्य लौकिकप्रत्यक्षस्वीकारेण ज्ञानत्ववत् प्रामाण्याभाववत्, ज्ञानत्ववच्चेदं ज्ञानमिति निश्चयविशिष्टनिश्चयसत्त्वेऽपि तादृशसामग्रीजन्यग्रहविषयत्वस्य प्रमात्वे सत्त्वेन न बाध इत्याशयेनाह—यदि चेति । तदापि निश्चयविशिष्टनिश्चयसत्त्वेऽपि, अपिना इदं ज्ञानं "भ्रमः" अप्रमा इत्यस्य समुच्चयः । तदभाववत्तानिश्चयस्यैव विरोधित्वाच्च । उपपद्यत एवेति । ज्ञानत्वादिग्राहकसामग्र्या इत्यादिः । अत्यन्तायोगव्यवच्छेदः एवकारार्थः । तथा च न बाध इति भावः । लौकिकप्रामाण्यभाने हेतुमाह—अवच्छेदकधर्मदर्शनादेरिति । निश्चयविशिष्टनिश्चयस्येत्यर्थः । मतत्रये लौकिकप्रामाण्यभानमुपपादयति । मिश्रमतेऽनुव्यवसायस्य लौकिकप्रामाण्यभानत्वादाह—मिश्रातिरिक्तमीमांसकमत इति । गुरुभट्टयोर्मते इत्यर्थः । प्रामाण्यभानस्य

भासकसामग्र्यधीनतद्भानस्य लौकिकभानतुल्यतया अवच्छेदकधर्मदर्शनाप्रतिबध्यत्वेन तन्मतेऽपि तथा प्रामाण्यभानोपपत्तिरित्युच्यते; तदा भ्रमत्वग्रहकालेऽपि अनुव्यवसायादेः प्रामाण्यावगाहित्वसम्भवात् तदग्राहकत्वनिवेशनमफलमिति वाच्यम् । भ्रमसामग्रीसत्त्वे भ्रमविषयनिष्ठासाधारणधर्मविशेषाणां लौकिकं ज्ञानमपि नोत्पद्यते, शङ्खः पीत इत्याद्यारोपदशायां श्वैत्याद्यग्रहात्, अतः प्रमात्वविरोधिभ्रमत्वाद्यारोपसामग्रीदशायाम् अनुव्यवसायादिना प्रमात्वग्रहाऽसम्भवेन भ्रमत्वाद्यग्राहकत्वनिवेशस्यावश्यकत्वात् ।

---

प्रामाण्यविषयतायाः । लौकिकसन्निकर्षघटितसामग्र्यनधीनत्वेऽपीति । प्रामाण्यांशे तादृशसामग्र्यप्रयोज्यत्वेऽपीत्यर्थः । गुरुमते ज्ञानस्य तद्गतप्रमात्वस्य च स्वप्रकाशत्वात्, भट्टमते ज्ञाततालिङ्गकानुमितिप्रयोज्यत्वादिति भावः । लौकिकसामग्रीतुल्यसामग्रीप्रयोज्यत्वमाह—तादृशेति । लौकिकेत्यर्थः । लौकिकभानतुल्यतयेति । प्रमात्वनिष्ठलौकिकविषयतातुल्यतयेत्यर्थः । यादृशस्थले मिश्राणां प्रामाण्यभानमभानं वा, तादृशस्थले गुरुभट्टानामपि तथा, लौकिकप्रामाण्यविषयित्वे मिश्रैर्यत्प्रयोजकमुपेयम्, गुरुभट्टाभ्यां तत्र तत्सममेव प्रयोजकमुपेयम्, अन्यथा साम्यानुपपत्तेः । अवच्छेदकधर्मदर्शनाप्रतिबध्यत्वेनेति । निश्चयविशिष्टनिश्चयाप्रतिबध्यत्वेनेत्यर्थः । ज्ञानत्ववत्प्रमात्वाभाववद् ज्ञानत्ववच्चेदं ज्ञानमिति निश्चयाप्रतिबध्यत्वेनेति यावत् । तन्मतेऽपि गुरुभट्टमतेऽपि, अपिना मिश्रमतसमुच्चयः । तथेति । लौकिकेत्यर्थः । तथा च न बाध इति भावः। बाधविरहेऽपि तदप्रामाण्याग्राहकत्वस्य वैयर्थ्यमाह—तदेति । प्रमात्वस्य प्रत्यक्षमङ्गीकृत्य ज्ञानत्ववत्प्रमात्वाभाववद् ज्ञानत्ववच्चेदं ज्ञानमिति विरोधिनिश्चयसत्त्वेऽपि प्रमात्वभानस्वीकारे इत्यर्थः । भ्रमत्वग्रहकालेऽपीति । इदं ज्ञानं भ्रमः 'अप्रमा' इति निश्चयसत्त्वेऽपीत्यर्थः । अपिना ज्ञानत्ववत् प्रमात्वाभाववत्—ज्ञानत्ववदिदं ज्ञानमिति निश्चयविशिष्टनिश्चयस्य समुच्चयः । अनुव्यवसायादेः प्रामाण्यावगाहित्वसम्भवादिति । अनुव्यवसायस्य प्रामाण्यविषयकत्वादित्यर्थः । अनुव्यवसायविषयत्वस्य प्रमात्वे सत्त्वादिति यावत् । तदग्राहकत्वनिवेशनमफलमिति । बाधाभावादिति भावः । इदं ज्ञानमप्रमेति ज्ञानग्रहविषयत्वस्य प्रमात्वेऽसत्त्वाद् बाधवारणाय तदप्रामाण्याग्राहकत्वदलयुक्तं दीधितिकृता । तादृशबाधनिश्चयस्य लौकिकसन्निकर्षाजन्यतद्वत्ताबुद्धि प्रत्येव प्रतिबन्धकत्वात्तद्विफलमिति भावः ।

भ्रमसामग्रीलौकिकसन्निकर्षजन्यतद्वत्ताबुद्धिमपि प्रतिबध्नातीति बाधवारणाय अप्रामाण्याऽग्राहकत्वदलसार्थक्यमिति समाधत्ते—भ्रमसामग्रीसत्त्व इति । भ्रमविषयनिष्ठाऽसाधारणधर्मविशेषाणामिति । भ्रमः—इदं रजतमिति ज्ञानमप्रमेति ज्ञानम् । तत्र विशेष्यीभूतम् इदं रजतमिति ज्ञानं तन्निष्ठाऽसाधारणो धर्मः—प्रामाण्यं तेषामित्यर्थः । लौकिकं ज्ञानमपि लौकिकसन्निकर्षजन्यज्ञानमपि अपिनाऽलौकिकज्ञानसमुच्चयः । नोत्पद्यत इति । तथा च भ्रमसामग्री तद्वत्ताज्ञानमात्रप्रतिबन्धिकाऽनुभवानुरोधादिति भावः । अनुभवमप्याह—शङ्खः पीत इति । अतः लौकिकसन्निकर्षजन्यज्ञानस्याप्यनुत्पादात्,

अविरोधिज्ञानत्वादेश्च प्रमायामारोपाऽसम्भवात्प्रमात्वाभावावच्छेदकतया गृहीततद्धर्मभानदशायामपि प्रमात्वलौकिकग्रहस्य श्वैत्याद्यभावावच्छेदकतया गृहीतशङ्खत्वादिग्रहदशायां श्वैत्यादिलौकिकग्रहवत्सम्भवात् ।

अथ भ्रमत्वस्य परमतेऽपि अतीन्द्रियतया तस्यारोपे परमते गुरुत्वाद्यारोप इव न

---

प्रमायाम् अयं घट इति प्रमात्मकज्ञाने, प्रमात्वविरोधी यो भ्रमत्वारोपः—अयं घट इति ज्ञानं भ्रमस्तत्सामग्रीदशायामित्यर्थः । अनुव्यवसायादिना आदिना व्यवसायज्ञाततालिङ्गकानुमित्योः परिग्रहः । **प्रमात्वग्रहासम्भवेनेति** । तादृशभ्रमसामग्र्यास्तद्धर्मिकतद्वत्ताज्ञानमात्रं प्रति विरोधित्वादिति भावः । **भ्रमत्वाद्यग्राहकत्वेति** । तदप्रामाण्याग्राहकत्वेत्यर्थः । **निवेशस्यावश्यकत्वादिति** । बाधवारणायेत्यादिः । अप्रामाण्याग्राहकत्वानिवेशे तादृशभ्रमत्वाद्यारोपसामग्रीसत्त्वे प्रमात्वाश्रयज्ञानग्राहकसामग्रीजन्यग्रहविषयत्वस्य प्रमात्वेऽसत्त्वाद् बाधः स्यादिति भावः ।

ननु ज्ञानत्ववत्प्रमात्वाभाववत् इति निश्चयविशिष्टज्ञानत्ववदिदमिति निश्चयकालीना या ज्ञानत्वविशिष्टग्राहकसामग्री तज्जन्यग्रहविषयत्वस्य प्रमात्वेऽसत्त्वाद् बाधः, ज्ञानत्वनिरूपितप्रमानिष्ठाधिकरणतायां प्रामाण्यावच्छेदकानवच्छिन्नत्वाऽवच्छिन्नत्वोभयाभावसत्त्वात्तद्व्यक्तिपदेनैव ज्ञानत्वस्य धारणात्तदन्यत्वस्य ज्ञानत्वे विरहेण ज्ञानत्वविशिष्टग्राहकसामग्र्या प्रामाण्यविरोध्यग्राहकत्वमपीत्यत आह—**अविरोधिज्ञानत्वादेश्चेति** । प्रामाण्याविरोधिज्ञानत्वादेश्चेत्यर्थः । **प्रमायामारोपासम्भवादिति** । ज्ञानत्ववदिदमिति प्रमायाम् । **आरोपाऽसम्भवादिति** । भ्रमत्वाऽसम्भवादित्यर्थः । तस्याः प्रमात्वादिति भावः । दोषघटितारोपसामग्र्या एव प्रतिबन्धकत्वादिति यावत् । गृहीतद्धर्मभानस्यापि गृहीतज्ञानत्वग्रहकालेऽपि, ज्ञानत्ववत्प्रमात्वाभाववद् इति निश्चयकालीनज्ञानत्ववदिदमिति निश्चयकालेऽपीत्यर्थः । **प्रमात्वलौकिकग्रहस्येति** । अस्य सम्भवादित्यनेनाऽन्वयः । दृष्टान्तमाह—**श्वैत्याद्यभावावच्छेदकतयेति** । **गृहीतशङ्खत्वादिग्रहदशायामिति** । शङ्खत्ववान् श्वैत्याभाववान् शङ्खत्ववानयमिति निश्चयकाले इत्यर्थः । तथा चायं घट इति प्रमायां भ्रमत्वस्य यो भ्रमः अयं घट इति ज्ञानं भ्रमस्तस्य सामग्रीसत्त्वे भ्रमविशेष्यज्ञानवृत्तिप्रमात्वस्य लौकिकप्रत्यक्षानुत्पादः न तथा ज्ञानत्ववत् प्रमात्वाभाववत् इति निश्चयकालीनज्ञानत्ववदिदमिति प्रमात्मकज्ञानग्राहकसामग्रीसत्त्वे तदनुत्पादः; दोषघटितारोपसामग्र्या एव प्रमात्वलौकिकप्रत्यक्षे प्रतिबन्धकत्वादित्युक्तत्वात्, तथा च न बाध इति भावः ।

दोषघटिताऽऽरोपसामग्री अपि न प्रतिबन्धिकेति बाधविरहेण प्रामाण्यविरोध्यग्राहकत्वविशेषणस्य वैयर्थ्यं दुर्वारमित्याशङ्कते—**अथेत्यादिना** । भ्रमत्वस्य तदभाववति तत्प्रकारकत्वस्य, परमतेऽपि मीमांसकमतेऽपि, अपिना नैयायिकमतसमुच्चयः । मीमांसकमते निष्फलप्रवृत्तिजनकत्वेन भ्रमत्वमनुमेयम् । नैयायिकमते तु प्रमात्वं भ्रमत्वं चोभयमेवानुमेयम् । रजतज्ञानवानहमिति भ्रमानुव्यवसाये तदभाववति तत्प्रकारकत्वरूपभ्रमत्वं न प्रत्यक्षं, तदभावरूपविशेषणग्राहकसामग्रीविरहात् । तस्याऽरोपे भ्रमत्वस्या-

साक्षात्कारित्वग्रहः, योग्यपीतत्वाद्यारोप एव तद्ग्रहस्यानुभाविकत्वात्, तथा च तदारोपसामग्र्या न प्रमात्वलौकिकप्रत्यक्षप्रतिबन्धः। यादृशदोषजन्यज्ञाने साक्षात्कारित्वग्रहः तद्घटितारोपसामग्र्या एव लौकिकप्रत्यक्षसामग्र्यपेक्षया बलवत्त्वादिति कथं भ्रमत्वारोपकाले प्रमात्वाग्रह इति चेत् न, उक्तयुक्त्या भ्रमत्वारोपसामग्र्याः प्रमात्वलौकिकप्रत्यक्षसामग्र्यपेक्षया बलवत्त्वविरहेऽपि संशयजनकदोषस्येव विपर्ययजनकदोषस्य च साक्षात्कारित्वग्रहाप्रयोजकत्वेऽपि लौकिकप्रमात्वग्रहप्रतिबन्धकतया भ्रमत्वारोपकाले प्रमात्वग्रहासम्भवात्।

अस्तु वा भ्रमत्वग्राहकसामग्र्या अपि प्रामाण्यग्राहकत्वम्, तथापि प्रमात्वाभावप्रमात्वघटकतद्वद्विशेष्यकत्वाभावाद्यनुगमपर एव प्रकृतग्रन्थ इति नासङ्गतिः।

---

रोपे, अयं घट इति 'प्रमात्मकं' ज्ञानं भ्रम इति भ्रमत्वस्य भ्रमे, अस्य न साक्षात्कारित्वग्रह इत्यनेनान्वयः। न भ्रमत्वेन इदं साक्षात्करोमीति ग्रहः। दृष्टान्तमाह—गुरुत्वाद्यारोप इवेति। गुरुत्वेनेदं साक्षात्करोमीति वदित्यर्थः। तथा च यथाऽतीन्द्रियगुरुत्वभ्रमे गुरुत्वेनेदं साक्षात्करोमीति ग्रहो न जायते तथा भ्रमत्वभ्रमे भ्रमत्वेनेदं साक्षात्करोमीति ग्रहो न जायते इति भावः। योग्यपीतत्वाद्यारोप एवेति। एवकारेणाऽयोग्यभ्रमत्वस्य व्यवच्छेदः। तद्ग्रहस्य साक्षात्कारित्वग्रहस्य, तथा च भ्रमत्वारोपे साक्षात्कारित्वग्रहाभावे च। तदारोपसामग्र्येति। भ्रमत्वारोपसामग्र्येत्यर्थः। न प्रमात्वलौकिकप्रत्यक्षप्रतिबन्ध इति। किन्तु साक्षात्कारित्वग्रहप्रयोजकदोषघटितसामग्र्या एव प्रमात्वलौकिकप्रत्यक्षप्रतिबन्ध इति भावः। तदेवाह—यादृशदोषजन्यज्ञान इति। पित्तादिरूपदोषजन्ये पीतः शङ्ख इति ज्ञाने इत्यर्थः। साक्षात्कारित्वग्रह इति। पीतं शङ्खं साक्षात्करोमीति ग्रह इत्यर्थः। तद्घटितारोपसामग्र्या एवेति। साक्षात्कारित्वग्रहप्रयोजकदोषघटितारोपसामग्र्या एवेत्यर्थः। एवकारेण केवलं दोषघटितारोपसामग्र्या व्यवच्छेदः। इति अतः, केवलं भ्रमत्वारोपसामग्र्या बलवत्त्वाभावात्। कथमिति। अस्य प्रमात्वाग्रह इत्यनेनाऽन्वयः। प्रतिबन्धकीभूतसाक्षात्कारित्वप्रयोजकदोषघटितारोपसामग्र्यभावात्प्रमात्वग्रहस्यैव सम्भवादिति भावः। मीमांसकमते भ्रमत्वस्यातीन्द्रियत्वेन साक्षात्काराऽसम्भवात्केवलभ्रमत्वारोपसामग्र्याः प्रमात्वलौकिकप्रत्यक्षाप्रतिबन्धकतया भ्रमत्वारोपकालेऽपि प्रमात्वलौकिकप्रत्यक्षोत्पादेन तद्विषयत्वस्य प्रमात्वे सत्त्वेन बाधविरहात्प्रामाण्यविरोध्यग्राहकत्वदलं विफलमिति समुदिततात्पर्यम्। न विफलं तद्दलमिति समाधत्ते—उक्तयुक्त्येति। मीमांसकमते भ्रमत्वस्यातीन्द्रियतया साक्षात्काराऽसम्भवेनेत्यर्थः। प्रमात्वग्रहासम्भवादिति। तथा च केवलभ्रमत्वारोपकालेऽपि बाधवारणाय तद्दलस्यावश्यकत्वादिति भावः। अस्तु वेति। भ्रमत्वग्राहकसामग्र्या अपीति। ज्ञानग्राहकसामग्र्या अपिना समुच्चयः। प्रमात्वग्राहकत्वमिति। प्रामाण्यविरोध्यग्राहकत्वेनेत्यादिः। ननु भ्रमत्वस्य प्रामाण्याविरोधित्वे अप्रामाण्यं प्रामाण्यविरोधीत्यग्रिमग्रन्थासङ्गतिरित्यत आह—अनुगमपर एवेति। तथा च प्रमात्वाभाव-तद्वद्विशेष्यकत्वाभावयोः सङ्ग्रहार्थमित्यर्थः। प्रकृतग्रन्थ इति। अप्रामाण्यं प्रामाण्यविरोधीति ग्रन्थः। भ्रमस्याहार्यतया भ्रमत्वस्य

वस्तुतस्तु तदभाववति तत्प्रकारकत्वरूपं भ्रमत्वं तदभावधर्मितावच्छेदककतत्प्रकारकाहार्यभ्रमे लौकिकप्रत्यक्षविषय इति ध्येयम् ।

यत्तु अप्रामाण्यारोपकालत्वेऽपि निर्धर्मितावच्छेदककप्रामाण्यभानसम्भवात्, अत्राऽप्रामाण्याग्राहकत्वविशेषणानर्थक्यमिति देश्यम्, तन्न साधु; पुरोवर्त्तिविशेष्यकत्वावच्छेदेन प्रामाण्यग्रहस्यैव पुरोवर्त्तिनि प्रवर्तकतया अस्यैव स्वतस्त्वपरतस्त्वविवादास्पदतया तद्विशेष्यकज्ञानप्रामाण्ये तद्विशेष्यकत्वावच्छेदेन यावत्स्वाश्रयग्राहकग्राह्यत्वस्यैव परैः साधनीयतया तत्सार्थक्यात् ।

---

लौकिकप्रत्यक्षमेव सम्भवति, आहार्यत्वं च तद्विरोधिधर्मधर्मितावच्छेदककतत्प्रकारकज्ञानत्वम् । तथा चाऽऽहार्येण तदभावाधिकरणरूपधर्मिज्ञानसम्पादनाद् भ्रमत्वस्याऽऽहार्यलौकिकप्रत्यक्षं भवतीत्याह—वस्तुतस्तु इति । भ्रमत्वमिति । लौकिकप्रत्यक्षभ्रमविषये इत्यनेनान्वयः । तदभावधर्मितावच्छेदककाहार्यभ्रम इति । घटत्वाभाववान् घटत्ववानिति आहार्यभ्रमे इत्यर्थः । लौकिकप्रत्यक्षविषय इति । तथा च भ्रमत्वभ्रमजनकदोषः साक्षात्कारित्वग्रहप्रयोजकः सम्भवत्येवेति तस्य च प्रमात्वलौकिकप्रत्यक्षप्रतिवन्धकत्वाद् बाधवारणाय तद्दलसार्थक्यमिति भावः ।

यत्त्विति । अप्रामाण्यारोपकालेऽपीति । इदं ज्ञानमप्रमेति भ्रमत्वभ्रमकालेऽपीत्यर्थः । तादृशभ्रमजनकदोषस्य लौकिकप्रमात्वग्रहप्रतिवन्धकत्वेऽपीति यावत् । निर्धर्मितावच्छेदककेति । प्रमात्वभानस्य धर्मितावच्छेदकमिदन्त्वविशिष्टज्ञानत्वम्, तद्रहितेत्यर्थः । प्रामाण्यभानसम्भवादिति । निर्धर्मितावच्छेदककबुद्धेरप्रतिबध्यत्वादिति भावः । अत्र साध्ये । विशेषणानर्थक्यमिति । इदं ज्ञानमप्रमेति भ्रमत्वभ्रमारोपसामग्र्याः साध्यघटकत्वेऽपि तज्जन्यो यो निर्धर्मितावच्छेदककप्रमात्वग्रहः तद्विषयत्वस्य प्रमात्वे सत्त्वेन बाधानवकाशात् । यत्तु मतं निरस्यति—तन्नेति । पुरोवर्त्तिविशेष्यकत्वावच्छेदेनेति । पुरोवर्त्तिविशेष्यकेत्यर्थः । प्रामाण्यग्रहस्यैवेति । प्रमात्वप्रकारकग्रहस्यैवेत्यर्थः । पुरोवर्ती घट इति ज्ञानं प्रमेति ग्रहस्यैवेत्यर्थः । एवकारेण निर्धर्मितावच्छेदककप्रमात्वग्रहव्यावृत्तिः । पुरोवर्त्तिनि घटादौ । अस्यैवेति । प्रवृत्तिजनकपुरोवर्त्तिविशेष्यकं प्रमात्वग्रहस्यैवेत्यर्थः । एवकारेण निर्धर्मितावच्छेदककप्रमात्वग्रहस्य व्यवच्छेदः । स्वतस्त्वपरतस्त्वविवादास्पदतयेति । स्वविषयकज्ञानोत्पादकसामग्रीप्रयोज्यत्वतादृशसामग्रीप्रयोज्यत्वाभावरूपविवादगर्भतया । पुरोवर्त्तिविशेष्यकज्ञानप्रामाण्ये पुरोवर्त्तिविशेष्यकज्ञाननिष्ठप्रामाण्ये । तद्विशेष्यत्वावच्छेदेनेति । पुरोवर्त्तिविशेष्यकत्वावच्छेदेनेत्यर्थः । तथा च स्वाश्रयग्राहकेत्यत्र स्वपदेन पुरोवर्त्तिविशेष्यकज्ञाननिष्ठप्रमात्वस्यैव ग्रहणम्, न तु केवलं प्रमात्वस्येति भावः । ग्राह्यत्वस्यैवेति । एवकारेण निर्धर्मितावच्छेदककप्रमात्वाश्रयज्ञानग्राह्यत्वस्य व्यवच्छेद परैः मीमांसकैः । तत्सार्थक्यादिति । अप्रामाण्याग्राहकत्वदलसार्थक्यादित्यर्थः । पुरोवर्त्तिविशेष्यकज्ञाननिष्ठप्रामाण्यस्य पक्षत्वे तदाश्रयज्ञानग्राहकसामग्रीग्राह्यत्वस्यैव साध्यत्वम्, न तु केवलं प्रमात्वाश्रयज्ञानग्राहकसामग्रीग्राह्यत्वस्य, स्वपदेन पक्षस्यैव ग्रहणाद् भ्रमत्वारोपकाले पुरोवर्त्तिविशेष्यकत्वावच्छेदेन प्रमात्वाश्रय-

न चैवं ज्ञाने साध्ये साध्यप्रसिद्धिकथनं न सङ्गच्छत इति वाच्यम्। यथाश्रुतसाध्याभिप्रायेण आपाततस्तत्कथनात्। उपदर्शितसाध्याभिप्रायेण प्रामाण्यघटकघटत्वादिकमुपेक्ष्य ज्ञानत्वपर्यन्तानुसरणात्। न चानुव्यवसायादेः पुरोवर्त्तिविशेष्यकत्वं धर्मितावच्छेदकीकृत्य ज्ञानत्वावगाहित्वानियमात् न ज्ञानत्वेऽपि उक्तसाध्यप्रसिद्धिसम्भव इति वाच्यम्। तद्विशेष्यकत्वावच्छिन्ने ज्ञानत्ववैशिष्ट्यग्राहकसामग्र्या एव साध्येऽन्तर्भावनीयतया तादृशसामग्रीजन्ययावद्ग्रहविषयतया ज्ञानत्वे प्रसिद्धिसौलभ्यादित्यलमतिविस्तरेण।

---

ज्ञानग्राहकसामग्रीजन्यग्रहपदेन निर्धर्मितावच्छेदककप्रमात्वग्रहस्य धर्त्तुमशक्यतया भ्रमत्वारोपसामग्र्याः सधर्मितावच्छेदककप्रमात्वलौकिकप्रत्यक्षप्रतिबन्धकतया प्रमात्वाग्रहाद् बाधवारणाय प्रामाण्यविरोध्यग्राहकत्वविशेषणस्य सार्थक्यादिति भावः।

शङ्कते—न चेति। एवं पुरोवर्तिविशेष्यकत्वावच्छेदेन प्रमात्वाश्रयज्ञानग्राहकयावत्सामग्रीग्राह्यत्वस्य साध्यत्वे। न सङ्गच्छत इति। पुरोवर्त्तिविशेष्यतावच्छेदकत्वं धर्मितावच्छेदकीकृत्य ज्ञानप्रामाण्ये स्वाश्रयज्ञानग्राहकयावत्सामग्रीग्राह्यत्वरूपसाध्यविरहात् तत्तज्ज्ञानव्यक्तीनामनुव्यवसाये आत्मत्वं धर्मितावच्छेदकीत्यैव भानात्। आत्मत्वं धर्मितावच्छेदकीकृत्यैवानुव्यवसायात्मकग्रहविषयत्वस्य ज्ञाने प्रसिद्धिः, न तु पुरोवर्त्तिविशेष्यकत्वावच्छेदेनेति भावः। यथाश्रुतसाध्याभिप्रायेणेति। स्वाश्रयज्ञानग्राहकयावत्सामग्रीग्राह्यत्वरूपसाध्याभिप्रायेणेत्यर्थः। आपाततः पुरोवर्त्तिविशेषकत्वावच्छेदेनेति निवेशमज्ञात्वा। तत्प्रसिद्धिकथनादिति। साध्यप्रसिद्धिकथनादित्यर्थः। उपदर्शितसाध्याभिप्रायेणेति। पुरोवर्त्तिविरोध्यकत्वावच्छेदेन प्रमात्वाश्रयज्ञानग्राहकसामग्रीग्राह्यत्वरूपसाध्याभिप्रायेणेत्यर्थः। घटत्वादिकमुपेक्ष्येति। घटत्वादौ पुरोवर्त्तिविशेष्यकत्वावच्छेदेन स्वाश्रयज्ञानग्राहकसामग्रीग्राह्यत्वे नास्ति पुरोवर्त्तिविशेष्यकत्वं धर्मितावच्छेदकीकृत्य घटत्वस्यानुव्यवसायादौ अभानात्, घटत्वे साध्यप्रसिद्धिर्न सम्भवतीति दीधितिकृतोपेक्षितमिति भावः। ज्ञानत्वपर्यन्तानुसरणादिति। ज्ञानत्वे विधिकोटिप्रदर्शनादित्यर्थः। पुरोवर्त्तिविशेष्यकत्वं धर्मितावच्छेदकीकृत्य ज्ञानत्वभानादिति यावत्।

ज्ञानत्वे विधिकोटिप्रसिद्धिर्न सम्भवतीति शङ्कते—न चेति। अनुव्यवसायादेरिति। घटमहं जानामीत्यनुव्यवसायादेरित्यर्थः। आदिना व्यवसायज्ञाततालिङ्गकानुमित्योः परिग्रहः। पुरोवर्त्तिविशेष्यकत्वं धर्मितावच्छेदकीकृत्येति। इदन्त्वं धर्मितावच्छेदकीकृत्येति यावत्। ज्ञानत्वावगाहित्वानियमादिति। ज्ञानत्वाभानादित्यर्थः। ज्ञानत्वस्य पुरोवर्त्तित्वस्य च एकत्र द्वयमिति रीत्या तदुभयसमं वा भानसम्भवादिति भावः। घटमहं जानामीत्यनुव्ययसाये ज्ञानत्वस्य भानं न पुरोवर्त्तिविशेष्यकत्वावच्छेदेन प्रमात्वस्यैव पुरोवर्त्तिविशेष्यकत्वावच्छेदेन भानात्, पुरोवर्त्तिविशेष्यकत्वावच्छेदेन प्रमात्वग्रह इत्यनुभवात्, पुरोवर्त्तिविशेष्यकत्वावच्छेदेन घटत्वज्ञानग्रह इत्यनुभवविरहाच्च। तथा च साध्याप्रसिद्धिरिति भावः। समाधत्ते—तद्विशेष्यकत्वावच्छिन्न इति। पुरोवर्त्तिविशेष्यकत्वावच्छिन्ने इत्यर्थः। ज्ञानत्ववैशिष्ट्यग्राहकसामग्र्या इति। ज्ञानत्ववैशिष्ट्यावगाही यो

घटत्वनिष्प्रकारकत्वादिघटितप्रामाण्यग्रहे तद्विरोधिनो घटत्वादेरवश्यं ग्रहात् तदिति लुप्तसप्तमीकम् ।

---

तदप्रामाण्याग्राहकेत्यत्र तत्पदप्रयोजनमाह—घटत्वेति । घटत्ववतीत्यादि प्रामाण्यग्राहकसामग्र्या घटादिरूपविषये तत्प्रामाण्यविरोधिघटत्वादेरवश्यं ग्रहात्प्रकृतप्रामाण्यविरोध्यग्राहकतद्ग्राहकसामग्र्या अप्रसिद्धेरित्यर्थः । अप्रामाण्यपदस्य यदि साक्षात्प्रमात्वग्रहप्रतिबन्धकं यज्ज्ञानं तद्विषयार्थकतोपेयते, उक्तयुक्त्या भ्रमत्वारोपसामग्र्याः प्रमात्वलौकिकप्रत्यक्षाप्रतिबन्धेन भ्रमत्वापरिग्रहेऽपि क्षतिविरहात्, तदा घटत्वादिकमादाय

---

ग्रहः पुरोवर्त्तिविशेष्यकत्वावच्छिन्नज्ञानत्वविशिष्टज्ञानवानहमित्याकारकानुव्यवसायस्तज्जनकसामग्र्या इत्यर्थः । साध्येऽन्तर्भावनीयतयेति । साध्यघटकतयेत्यर्थः । तादृशसामग्रीजन्यग्रहविषयतयेति । पुरोवर्त्तिविशेष्यकत्वावच्छिन्नज्ञानत्ववैशिष्ट्यग्राहकसामग्रीजन्यग्रहविषयतयेत्यर्थः । ज्ञानत्वे प्रसिद्धिसौलभ्यादिति । पुरोवर्त्तिविशेष्यकत्वावच्छिन्ने ज्ञानत्ववैशिष्ट्यग्राहकसामग्रीजन्यो यः पुरोवर्त्तिविशेष्यकत्वावच्छिन्नज्ञानत्वविशिष्टज्ञानवानहमिति ग्रहस्तद्विषयत्वस्य ज्ञानत्वे निर्विवादत्वादिति भावः । एतादृशग्रहविषयत्वस्य निर्धर्मितावच्छेदकप्रमात्वे विरहान्नाऽप्रामाण्याग्राहकत्वदलवैयर्थ्यमिति तत्त्वम् ।

ननु प्रामाण्यविरोध्यग्राहकत्वनिवेशेनैव यत्रादौ अयं घट इति ज्ञानं तत इदं ज्ञानमप्रमेति ज्ञानग्रहस्तज्जनकसामग्र्या अपि ज्ञानग्राहकसामग्र्यन्तर्गततया तज्जन्यग्रहविषयत्वस्य प्रमात्वे विरहेण प्रसक्तबाधस्य प्रामाण्यविरोध्यग्राहकत्वविशेषणेनैव वारणात्तत्पदं किमर्थमित्याशङ्कायामाह—तदप्रामाण्याग्राहकेत्यत्रेति । दीधितौ घटत्वनिष्प्रकारकत्वादिघटितप्रामाण्यग्रह इति । घटत्ववद्विशेष्यकत्वावच्छिन्नत्वविशिष्टघटत्वप्रकारकज्ञानत्वरूपप्रामाण्यग्रहे इत्यर्थः । तद्विरोधिनः प्रामाण्यविरोधिनः । घटत्वादेरिति । विरोधित्वं च यन्निरूपित प्रमानिष्ठाधिकरणता प्रामाण्यावच्छेदकानवच्छिन्नत्वावच्छिन्नत्वोभयाभाववती तदन्यत्वम्, एवं च प्रमानिष्ठाधिकरणतायां घटत्वनिरूपितत्वाभावाद्यत्पदेन घटत्वादेर्वारणासम्भवात्तदन्यत्वस्य घटत्वादौ सत्त्वाद् विरोधित्वम् । अवश्यं ग्रहादिति । तथा च प्रामाण्यविरोध्यग्राहकज्ञानग्राहकसामग्र्यप्रसिद्ध्या साध्याप्रसिद्धिरिति भावः । तदेवाह—घटत्ववतीत्यादि प्रामाण्यग्राहकसामग्र्या इति । घटत्ववद्विशेष्यकत्वावच्छिन्नत्वविशिष्टघटत्वप्रकारकज्ञानत्वरूपप्रामाण्यग्राहकसामग्र्या इत्यर्थः । घटादिरूपविषये विशेष्यीभूतघटे । तत्प्रामाण्येति । अयं घट इति ज्ञाननिष्ठप्रामाण्येत्यर्थः । तद्ग्राहकेति । स्वाश्रयज्ञानग्राहकेत्यर्थः । अप्रसिद्धेरिति । अयं घट इति ज्ञानानुव्यवसायसामग्र्याः प्रमात्वविरोधि घटत्वग्राहकत्वेन प्रामाण्यविरोध्यग्राहकसामग्र्या अप्रसिद्धत्वादिति भावः । साक्षादिति । प्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वं निवेश्यते इति भावः । तथा च साक्षात्प्रमात्वग्रहप्रतिबन्धकज्ञानविषयाग्राहिका स्वाश्रयज्ञानग्राहिका या सामग्री तज्जन्यग्रहविषयत्वोक्तौ न साध्याप्रसिद्धिः, घटत्वादेरविरोधित्वात् । घटत्ववत्प्रमात्वाभाववदिति निश्चयकालीनस्य घटत्ववदिदमिति निश्चयस्याऽप्रतिबन्धकत्वात् । ननु भ्रमत्वारोपस्य भ्रमत्ववत्प्रमात्वाभाववदिति निश्चयविशिष्टभ्रमत्ववदिदमिति निश्चयस्य साक्षात्प्रमात्वग्रहा-

दोषाऽप्रसक्तावपि इदं निष्प्रकारकमित्यादिज्ञानीयनिष्प्रकारकत्वादिमति इत्यादिप्रामाण्यग्राहकसामग्र्या निष्प्रकारकत्वादिग्राहकत्वस्यावश्यकत्वात्तादृशप्रामाण्यपक्षकस्थलेऽनुपपत्तिर्दुर्वारैवेत्याशयेनाह—निष्प्रकारकत्वेति ।

प्रमात्वविरोधिज्ञानवृत्तिधर्माग्राहकत्वनिवेशे घटत्वादिग्राहकतामादाय दोषानवकाशाद्वा निष्प्रकारकत्वाद्यनुसरणम् । घट इत्यादिज्ञाने निर्विशेषणघटत्वादिरूपप्रकारांशे निष्प्रकारकत्वसत्त्वात्तत्सम्बन्धावगाहिज्ञानप्रामाण्यविरोधिनस्तत्सम्बन्धेन तत्प्रकारकत्वाभावस्य च ज्ञानेऽतिसुलभत्वात् ज्ञानवृत्तित्वविशेषणेन तद्वारणाऽसम्भवात् ।

---

विरोधितया तत्सामग्र्याः साध्यान्तर्गततया तज्जन्यग्रहविषयत्वस्य प्रमात्वेऽसत्त्वाद् बाध इत्यत आह—उक्तयुक्त्येति । साक्षात्कारित्वग्रहप्रयोजकदोषघटितभ्रमत्वारोपसामग्र्या एव लौकिकप्रमात्वग्रहविरोधित्वमिति पूर्वोक्तयुक्त्येत्यर्थः । भ्रमत्वापरिग्रहेऽपीति । प्रामाण्याविरोधित्वेन भ्रमत्वस्याऽसङ्ग्रहेऽपीत्यर्थः । क्षतिविरहादिति । भ्रमत्वारोपसामग्र्याः साध्यघटकत्वेऽपि तज्जन्यग्रहविषयत्वस्य प्रमात्वे सत्त्वेन बाधविरहादिति भावः । तदा प्रतिबन्धकज्ञानविषयत्वरूपविरोधित्वोक्तौ । दोषाप्रसक्तावपि घटत्वादेर्विरोधित्वाभावेन साध्याप्रसिद्धिविरहेऽपि इदं निष्प्रकारकमित्यादीति । आदिना इदं निर्विशेष्यमिति ज्ञानपरिग्रहः । निष्प्रकारकत्ववतीत्यादिप्रामाण्यग्राहकसामग्र्या इति । निष्प्रकारकत्ववति निष्प्रकारकत्वप्रकारकज्ञानत्वरूपप्रामाण्यस्य यो निष्प्रकारकज्ञानवानहमित्यनुव्यवसायस्तज्जनकसामग्र्या इत्यर्थः । निष्प्रकारकत्वादिग्राहकत्वस्येति । प्रामाण्यविरोधिनो निष्प्रकारकत्वस्य यो ग्रहस्तज्जनकत्वस्येत्यर्थः । आवश्यकत्वादिति । निष्प्रकारकत्वादेः अयं घट इति ज्ञाननिष्ठप्रामाण्यविरोधित्वात् प्रामाण्यस्य प्रकारताघटितत्वादिति भावः । तादृशप्रामाण्यपक्षकस्थल इति । इदं निष्प्रकारकमिति ज्ञाननिष्ठप्रामाण्यपक्षकस्थले इत्यर्थः । अनुपपत्तिरिति । साध्याप्रसिद्धिरित्यर्थः । निष्प्रकारकत्वादिमतीत्यादिप्रामाण्यज्ञानग्राहकसामग्र्याः अयं घट इति ज्ञाननिष्ठप्रामाण्यविरोधिनिष्प्रकारकत्वग्राहकत्वेन प्रामाण्यविरोध्यग्राहकत्वाऽप्रसिद्ध्या साध्याप्रसिद्धिरिति भावः । दीधितौ निष्प्रकारकत्वादीति । निष्प्रकारकत्वादिघटितप्रामाण्यग्रह इति । निष्प्रकारकत्ववद्विशेष्यकत्वावच्छिन्नत्वविशिष्टनिष्प्रकारकज्ञानत्वरूपप्रामाण्यग्रहे इत्यर्थः । तद्विरोधिनः प्रामाण्यविरोधिनः, घटत्वादेरित्यादिपदग्राह्यनिष्प्रकारकत्वस्य । अवश्यं ग्रहादिति । तथा च प्रामाण्यविरोध्यग्राहकज्ञानग्राहकसामग्र्यप्रसिद्ध्या साध्याप्रसिद्धिरित्यर्थः । निवेशे इति । प्रामाण्यविरोधी यो ज्ञानवृत्तिधर्मस्तदग्राहकत्वस्य सामग्रीविशेषणत्वे इत्यर्थः । दोषानवकाशादिति । साध्याप्रसिद्ध्यनवकाशादित्यर्थः । घटत्वादेर्ज्ञानवृत्तित्वविरहादिति भावः । वा इत्यनेन निष्प्रकारकत्वाद्यनुसरणे बीजान्तरं प्रदर्शितमिति भावः । निष्प्रकारकत्वं तु निर्विकल्पकज्ञानवृत्तीति ध्येयम् ।

ननु निर्विकल्पकानङ्गीकर्तृमीमांसकमते निष्प्रकारकत्वस्यापि ज्ञानावृत्तितया ज्ञानवृत्तित्वविशेषणेनैव तद्वारणादित्याशङ्कायामाह—घट इत्यादिज्ञान इति । निर्विशेषणेति । विशेषणशून्येत्यर्थः । घटत्वस्य स्वरूपतो भानादिति भावः । तत्सम्बन्धावगाहि स्वरूपसम्बन्धावगाहि, तत्सम्बन्धेन स्वरूपसम्बन्धेन । स्वरूपसम्बन्धावच्छिन्नप्रतियोगि-

तस्याऽप्रामाण्यं तदप्रामाण्यमिति षष्ठचन्तार्थस्य प्रामाण्येनाऽन्वयात्तदीयप्रामाण्यविरोधिपर्यवसितमिति मिश्रव्याख्यायां निष्प्रकारकत्वादेः सकलप्रामाण्यविरोधितया उक्तदोषोद्धाराऽसम्भवात्सप्तमीसमासाभिप्रायेणाह—लुप्तसप्तमीकमिति।

ननु तदप्रामाण्याग्राहकपदस्य सप्तमीसमासेन तद्विशेष्यकाऽप्रामाण्यग्रहाजनकत्वमर्थः। एवं च घटत्वादिप्रकारकज्ञानग्राहकसामग्र्यास्तज्ज्ञानांशे प्रामाण्यघटकघटत्वादिग्राहकत्वाभावेन उक्तदोषवारणेऽपि अन्यथाख्यातिमनभ्युपगन्तुर्गुरोर्ज्ञानविशेष्यकाऽप्रामा-

ताकयत्किञ्चित्प्रकारकत्वाभावरूपनिष्प्रकारकत्वस्य स्वरूपसम्बन्धेन निष्प्रकारकं घट इति ज्ञानं तन्निष्ठप्रामाण्यविरोधिनस्तादृशनिष्प्रकारकत्वस्य घट इति ज्ञाने सुलभतेति भावः। तद्वारणासम्भवादिति। निष्प्रकारकत्वस्य वारणासम्भवादित्यर्थः। तस्य ज्ञानवृत्तित्वादिति भावः। निर्विकल्पकास्वीकारेऽपि सर्वमतसाधारण्यायैतत्प्रयासः। तदीयप्रामाण्यविरोधिपर्यवसितमिति। यज्ज्ञानगतप्रामाण्यं ग्राह्यं तज्ज्ञाननिष्ठं यत्प्रामाण्यं तादृशप्रामाण्यविरोध्यग्राहिका स्वाश्रयज्ञानग्राहिका या सामग्री तज्जन्यग्रहविषयत्वं पर्यवसितमित्यर्थः। मिश्रव्याख्यायामिति। निष्प्रकारकत्वादेरिति। आदिना निर्विशेष्यकत्वपरिग्रहः। सकलप्रामाण्यविरोधितयेति। प्रमानिष्ठाधिकरणतायां निष्प्रकारकत्वनिरूपितत्वविरहेण यत्पदेन निष्प्रकारकत्वग्रहणासम्भवादित्यर्थः। प्रामाण्यस्य प्रकारताघटितत्वादिति भावः। निष्प्रकारत्वस्य इदं निष्प्रकारकमिति ज्ञानगतप्रामाण्यस्यापि विरोधित्वादिति यावत्। उक्तदोषोद्धाराऽसम्भवादिति। उक्तसाध्याप्रसिद्धिरूपदोषोद्धाराऽसम्भवादित्यर्थः। इदं निष्प्रकारकमिति ज्ञानीयनिष्प्रकारकत्वादिमति निष्प्रकारकज्ञानत्वरूपप्रामाण्यग्राहकसामग्र्यां निष्प्रकारकत्वप्रामाण्यविरोधिग्राहकत्वेन प्रामाण्यविरोध्यग्राहकज्ञानग्राहकत्वाऽप्रसिद्धेरिति भावः। सप्तमीसमासाभिप्रायेणेति। तथा च तदिति अप्रामाण्यविशेषणम्। एवं च यज्ज्ञाने प्रमात्वं गृह्यते तज्ज्ञाननिष्ठविशेष्यतानिरूपिततत्प्रामाण्यविरोधि 'अप्रमात्व'निष्ठप्रकारताशालिग्रहाजनिका या स्वाश्रयज्ञानग्राहिका या सामग्री तज्जन्यग्रहविषयत्वं पर्यवसितम्। निष्प्रकारकत्वनिष्ठप्रकारता इदं ज्ञाननिष्ठविशेष्यतानिरूपिता न तु तज्ज्ञाननिष्ठप्रमात्वाश्रयज्ञाननिष्ठविशेष्यतानिरूपिता इति तादृशविशेष्यतानिरूपिततत्प्रामाण्यविरोधि 'अप्रमात्व'प्रकारताशालिग्रहाजनकत्वेन इदं निष्प्रकारकमिति ज्ञाननिष्ठप्रमात्वाश्रयज्ञानग्राहकसामग्री अपि धर्तुं शक्यते इति न साध्याप्रसिद्धिरिति भावः।

गुरुमतेन साध्याप्रसिद्धिमाशङ्कते—नन्विति। तद्विशेष्यकाप्रामाण्यग्रहाजनकत्वमिति। यद् ज्ञाने प्रमात्वं गृह्यते तज्ज्ञाननिष्ठविशेष्यतानिरूपितप्रामाण्यविरोधिनिष्ठप्रकारताशालिग्रहाजनकत्वमित्यर्थः। एवं च। तदप्रामाण्याग्राहकत्वमित्यस्य निरुक्तार्थकत्वे च। घटत्वप्रकारकज्ञानग्राहकसामग्र्याः घटत्वप्रकारकं यद् अयं घट इति ज्ञानं तस्य यो घटमहं जानामीत्यनुव्यवसायात्मको ग्रहः तज्जनकसामग्र्याः, तज्ज्ञानांशे प्रमात्वाश्रयीभूते अयं घट इति ज्ञाने। प्रामाण्यघटकघटत्वादिग्राहकत्वाभावेनेति। अयं घट इति ज्ञानविशेष्यकप्रामाण्यविरोधिघटत्वप्रकारकम् अयं घट

अप्रामाण्यग्रहः इदं ज्ञानमप्रमेति व्यवहारजनको ग्रहः ।

---

व्यग्रहाऽप्रसिद्धया साध्याप्रसिद्धिर्दुर्वारैव, ज्ञानेऽप्रामाण्याऽसत्त्वेन तत्प्रकारकज्ञानस्याऽन्यथाख्यातित्वेन तेनाभ्युपगमासम्भवात् ।

अप्रामाण्यग्रहस्याऽप्रामाण्यावगाहित्वमात्रेण निवेशे ज्ञानेऽप्रामाण्यप्रकारकविसंवादीच्छाप्रसिद्धया साध्याप्रसिद्धिवारणे तु ज्ञानग्राहकसामग्र्यां तादृशेच्छाद्यजनकत्वस्याव्यावर्तकतया अप्रामाण्यभ्रमात्मकज्ञानग्राहकसामग्र्या प्रामाण्याग्रहेण बाधो दुर्वार इत्याशयेनाह—अप्रामाण्यग्रह इति । व्यवहारजनक इति । तादृशशब्दप्रयोगजनक इत्यर्थः । प्रामाण्यविरोधिप्रकारतानिरूपिततज्ज्ञाननिष्ठविशेष्यतानिरूपक इति यावत् । गुरुमते भ्रमस्थले विभिन्नज्ञानगोचरयोरपि धर्मधर्मिणोर्विशेष्यविशेषणभावोपगमात् न तन्मतसिद्धाऽप्रामाण्यभ्रमासङ्ग्रहः ।

---

इति ज्ञानं तज्जनकत्वाभावेनेत्यर्थः । उक्तदोषवारणेऽपीति । साध्याप्रसिद्धिवारणेऽपीत्यर्थः । तथा च घटमहं जानामीत्यनुव्यवसायसामग्री न अयं घट इति ज्ञाननिष्ठप्रमात्वाश्रयीभूताऽयं घट इति ज्ञानविशेष्यकप्रमात्वविरोधि घटत्वप्रकारकाऽयं घट इति ज्ञानजनिका ( किन्तु आत्मविशेष्यकघटत्वप्रकारकज्ञानप्रकारकग्रहजनिका ) इति तादृशानुव्यवसायसामग्र्याः प्रामाण्यविरोध्यग्राहकत्वेन प्रसिद्धत्वादिति भावः। तत्प्रकारकज्ञानस्येति । अप्रामाण्यप्रकारकज्ञानस्येत्यर्थः । तदभाववति तत्प्रकारकज्ञानस्येति यावत् । तेन गुरुणा, ननु अप्रामाण्याग्राहकत्वेनेत्यस्य अप्रामाण्यप्रकारकग्रहाजनकत्वं नार्थः किन्तु प्रामाण्यविरोधिनिष्ठप्रकारताशाली यस्तदजनकत्वम्, एवं च प्रामाण्यविरोधिनिष्ठप्रकारताशालिनी विसंवादिनी इच्छैव प्रसिद्धेत्यत आह--अप्रामाण्यावगाहित्वमात्रेण निवेश इति । मात्रपदेन ग्रहव्युदासः । ज्ञानग्राहकसामग्र्यां प्रमात्वाश्रयज्ञानग्राहकसामग्र्याम् । तादृशेच्छाद्यजनकत्वस्येति । प्रमात्वाश्रयतज्ज्ञानधर्मिकप्रामाण्यविरोधिप्रकारकेच्छाद्यजनकत्वस्येत्यर्थः । आदिना कृतेः परिग्रहः । अव्यावर्त्तकतयेति । इदं ज्ञानमप्रमा, इदं ज्ञानं भ्रमः इत्यनुव्यवसायजनकसामग्र्यवारकतयेत्यर्थः । बाधो दुर्वार इति । इदं ज्ञानमप्रमेत्याद्यनुव्यवसायसामग्र्या अपि प्रमात्वाश्रय अयं घट इति ज्ञानविशेष्यकप्रामाण्यविरोधिप्रकारकत्वेन गुरुमते प्रसिद्धाय इच्छायाः जनकत्वेन साध्यान्तर्गततया तज्जन्यग्रहविषयत्वस्य प्रमात्वे विरहाद् बाध इति भावः। दीधितौ—व्यवहारजनको ग्रह इति । व्यवहारः शब्दप्रयोगः, तज्जनक इत्यर्थः। अर्थज्ञानमिति भावः । अर्थं बुद्ध्वा रचयतीति न्यायात् । शब्दप्रयोगं प्रति अर्थज्ञानस्य हेतुत्वे विवादादाह—प्रामाण्यविरोधिप्रकारतानिरूपितेति । तज्ज्ञाननिष्ठेति । प्रमात्वाश्रयज्ञाननिष्ठेत्यर्थः । घटोऽयमिति ज्ञानं भ्रमः इति ज्ञानीयभ्रमत्वनिष्ठप्रकारतानिरूपितविशेष्यतानिरूपक इत्यर्थः । ननु गुरुमते भ्रमस्य ज्ञानद्वयात्मकतया तादृशविशेष्यतानिरूपकग्रहाप्रसिद्धया साध्याप्रसिद्धिर्दुर्वारैवेत्यत आह—गुरुमत इति । विशेष्यविशेषणभावोपगमादिति । गुरुमते भ्रमानङ्गीकारेऽपि इदं रजतमिति ज्ञानमप्रमेति व्यवहारानुरोधेन भेदाग्रहनिबन्धनो विभिन्नज्ञानविषयीभूतधर्मधर्मितन्निष्ठप्रकारताविशेष्यतयोर्निरू-

एतेन शब्दप्रयोगेऽर्थज्ञानकारणतायाः निर्युक्तत्वात् सयुक्तिकत्वेऽपि 'इदं ज्ञानमप्रमा' इति वाक्यस्यानुपूर्वीपुरस्कारेण निवेशेऽप्रामाणपदस्य शक्तिभ्रमेण आधुनिकसङ्केतेन वा-प्रामाण्यप्रकारकबोधेऽपि हेतुतया प्रामाण्यग्रहस्यापि तादृशशब्दप्रयोगजनकतया प्रामाण्य-ग्राहकसामग्र्यास्तादृशशब्दप्रयोगजनकग्रहाऽजनकत्वाप्रसिद्धेः। अप्रमाशब्देन प्रमाविरोधि-त्वेन प्रमाभेदवत्त्वेन च बोधनात्, प्रमात्वाभावभ्रमत्वत्वादिनाऽबोधके तत्र ताद्रूप्येण भ्रमत्वादिग्रहहेतुतायाश्चासम्भवदुक्तिकत्वात्।

---

प्यनिरूपकभावोऽङ्गीक्रियते एव। तथा च प्रामाण्यविरोधिनिष्ठप्रकारतानिरूपित-तज्ज्ञाननिष्ठविशेष्यतानिरूपकग्रहप्रसिद्धया न साध्याप्रसिद्धिरिति भावः। **तन्मतसिद्धेति।** गुरुमतसिद्धेत्यर्थः। एतेन तदप्रामाण्याग्राहकपदस्य प्रामाण्यविरोधिनिष्ठप्रकारतानि-रूपिततज्ज्ञाननिष्ठविशेष्यतानिरूपकग्रहाजनकेत्यर्थकरणेन अस्य यथाश्रुतासङ्गतावपीत्य-नेनान्वयः। **शब्दप्रयोगेऽर्थज्ञानकारणतायाः** शब्दप्रयोगनिरूपिताऽर्थज्ञातनिष्ठकारणतायाः, **निर्युक्तिकत्वात्** अर्थज्ञानंविनैव शुकस्य अर्थानभिज्ञस्य च शब्दप्रयोगदर्शनात्। व्यतिरेक-व्यभिचारादिति यावत्। बुबोधयिषापूर्वकशब्दप्रयोगे एवार्थज्ञानस्य हेतुत्वे त्वाह— **सयुक्तिकत्वेऽपीति। निवेशे इति।** इदं ज्ञानमप्रमेति वाक्यप्रयोगजनकग्रहाजनकेत्यादि-निवेशे इत्यर्थः। **अप्रमापदस्येति।** प्रामाण्यप्रकारकबोधे त्वनेनान्वयः। **शक्तिभ्रमेणेति।** प्रमा अप्रमा पदवाच्येति शक्तिभ्रमेणेत्यर्थः। आधुनिकसङ्केतेन अप्रमापदात् प्रमा बोद्धव्येति सङ्केतेन। **प्रामाण्यग्रहस्यापीति।** अपिनाऽप्रामाण्यग्रहस्य समुच्चयः। तादृश-शब्दप्रयोगजनकतया इदं ज्ञानमप्रमेति शब्दप्रयोगजनकतया। **तादृशशब्दप्रयोगग्रहा-ऽजनकत्वाऽप्रसिद्धेरिति।** इदं ज्ञानमप्रमेति शब्दप्रयोगजनको यः प्रमात्वग्रहः तदजन-कत्वाप्रसिद्धेरित्यर्थः। प्रमात्वज्ञानस्यापि इदं ज्ञानमप्रमेति शब्दप्रयोगजनकतया प्रमात्व-ज्ञानजनकसामग्र्या अपि इदं ज्ञानमप्रमेति शब्दप्रयोगजनकग्रहजनकत्वादिति भावः। तथा च साध्याप्रसिद्धिः।

दोषान्तरमाह—**अप्रमाशब्देनेति।** इदं ज्ञानमप्रमेत्यत्रेत्यादिः। **प्रमाविरोधित्वेनेति** सावधारणम्। प्रमाविरोधित्वेनैवेत्यर्थः। न तु प्रमात्वाभावत्वेनेति यावत्। **प्रमात्वा-भावस्येति** शेषः। **अबोधक इति।** प्रथमान्तानुयोगिवाचकपदसमभिव्याहृतनञोभेद-बोधनादिति भावः। तत्र अप्रमाशब्दे। **ताद्रूप्येण** प्रमात्वाभावत्व-भ्रमत्वत्वरूपेण। **असम्भवदुक्तिकत्वादिति।** इदं ज्ञानमप्रमेति शब्दप्रयोगे इदं ज्ञानं प्रमा विरोधि इदं ज्ञानं भ्रमः इति ज्ञानस्यैव हेतुतया इदं ज्ञानं प्रमात्वाभाववत् इदं ज्ञानं भ्रमत्ववदिति ज्ञानस्य वा हेतुताया असम्भवदुक्तिकत्वादित्यर्थः। तथा च इदं ज्ञानमप्रमेति शब्द-जनकग्रहाजनिका या इदं ज्ञानं प्रमात्वाभाववत् इदं ज्ञानं भ्रमत्ववदिति ग्रहजनिका सामग्री तज्जन्यग्रहविषयत्वस्य प्रमात्वे विरहाद् बाध इति भावः। केचित्तु शक्तिभ्रमा-जन्यत्वे सति आधुनिकसङ्केतग्रहाजन्यो यः इदं ज्ञानमप्रमेति शब्दप्रयोगजनको ग्रहस्तद-जनकत्वनिवेशे उक्तसाध्याप्रसिद्धयसम्भवाद्दोषान्तरमाह—अप्रमाशब्देनेत्याहुः। अप्रमा-शब्देन प्रमात्वाभावज्ञानस्य भ्रमत्वप्रकारकज्ञानस्य सङ्ग्रहेऽपि गुरुमते भ्रमत्वप्रकारकत्व-

तदंशे वस्तुगत्या प्रमात्वविरोधिधर्मप्रकारिका या प्रतीतिस्तत्परशब्दजनकज्ञानत्वेन इदं ज्ञानं भ्रम इत्यादिज्ञानसङ्ग्रहस्य च तदंशे तत्प्रकारकत्वस्य गुरुमतसिद्धभ्रमत्वादिप्रकारकभ्रमसाधारणस्य दुर्वचतयाऽशक्यत्वात् । सुवचत्वेऽपि तेनैवंरूपेण इदं ज्ञानं भ्रम इत्यादिसकलज्ञानसङ्ग्रहसम्भवे तद्रूपेण प्रतीतिमादाय तत्परवाक्यजनकत्वेन तादृशसङ्ग्रहस्य शिरोवेष्टनेन नासिकास्पर्शतुल्यत्वाद्यथाश्रुतासङ्गतावपि न क्षतिः ।

केचित्तु व्यवहारजनक इत्यस्य प्रमात्वविरोधिप्रकारकत्वेन तद्भानविषयको योऽभिप्रायस्तदधीनवाक्यजनक इत्यर्थः । अभिप्रायश्चेच्छात्मको व्यधिकरणप्रकारकोऽपि गुरूणामनुमतः । अर्थबोधयिषापूर्वकवाक्ये अर्थज्ञानं हेतुरिति मतमवलम्ब्येदमित्याहुः ।

---

माह—तदंश इति । प्रमात्वाश्रयज्ञानधर्मिकेत्यर्थः । वस्तुगत्या प्रमात्वविरोधिधर्मेति । वस्तुगत्येति प्रतिपादनात्प्रमात्वाभावभ्रमत्वयोः सङ्ग्रहः । तत्प्रकारिका प्रतीतिः इदं ज्ञानं प्रमात्वाभाववत्, इदं ज्ञानं भ्रमत्ववदिति प्रतीतिः । तत्परशब्दजनकज्ञानत्वेन तादृशप्रतीतिजनको यः इदं ज्ञानं प्रमात्वाभाववत्, इदं ज्ञानं भ्रम इति शब्दः तज्जनकज्ञानत्वेनेत्यर्थः । इत्यादीति । आदिपदादिदं ज्ञानं प्रमात्वाभाववदिति ज्ञानसङ्ग्रहः । सङ्ग्रहस्य चेति । अशक्यत्वादित्यनेनान्वयः । तथा च शब्दजनको यः इदं ज्ञानं भ्रम इत्यादिग्रहस्तदजनिका सामग्रीपदेन इदं ज्ञानं भ्रम इत्यादिग्रहजनिका सामग्री धर्त्तुं न शक्यते इति बाधवारणेऽपि अशक्यत्वादिति भावः । अशक्यत्वे हेतुमाह—तदंश इति । तद् ज्ञाने इत्यर्थः । तत्प्रकारकत्वस्य वस्तुगत्या प्रमात्वविरोधिधर्मप्रकारकत्वस्य, अस्य दुर्वचतयेत्यनेनान्वयः । गुरुमतसिद्धभ्रमत्वादिप्रकारकभ्रमसाधारणस्य गुरुमतसिद्धो यो भ्रमत्वादिप्रकारको भ्रमः इदं रजतमिति प्रमाधर्मिकभ्रमत्वप्रकारको ग्रहः इदं ज्ञानं भ्रमः इति साधारणस्य । दुर्वचतयेति । अन्यथाख्यात्यनभ्युपगन्तृगुरोर्मते तज्ज्ञानधर्मिकप्रामाण्यविरोधिभ्रमत्वप्रकारकत्वस्य इदं ज्ञानं भ्रम इति ज्ञानेऽस्वीकारात् । तथा च तत्साधारण्यविरहे भ्रमजनकसामग्री अपि प्रमाविरोधिग्रहाजनिकेति बाधो दुर्वार इति भावः । सुवचत्वेऽपीति । गुरुमते भ्रमस्थले विभिन्नज्ञानगोचरयोरपि धर्मधर्मिणोर्विशेष्यविशेषणभावोपगमात् तज्ज्ञाननिष्ठविशेष्यतानिरूपितप्रामाण्यविरोधिनिष्ठप्रकारतानिरूपकत्वस्य निवेशे गुरुमतसाधारण्यं सुवचमिति भावः । तेनैवंरूपेणेति । तज्ज्ञाननिष्ठविशेष्यतानिरूपितप्रमात्वविरोधिधर्मनिष्ठप्रकारताकत्वेनैव रूपेणेत्यर्थः । तद्रूपेण प्रतीतिमादाय तत्परवाक्यजनकत्वेनेति । तज्ज्ञाननिष्ठविशेष्यतानिरूपितप्रामाण्यविरोधिनिष्ठप्रकारतानिरूपकप्रतीतिपरशब्दजनकज्ञानज्ञानत्वेनेत्यर्थः । तादृशसङ्ग्रहस्य तादृशसकलज्ञानसङ्ग्रहस्य । शिरोवेष्टनेन नासिकास्पर्शतुल्यत्वादिति । तज्ज्ञाननिष्ठविशेष्यतानिरूपितप्रामाण्यविरोधिधर्मनिष्ठप्रकारतानिरूपकप्रतीतीच्छयोच्चरितशब्दज्ञानजनकत्वेन सकलज्ञानसङ्ग्रहापेक्षया लघुभूततज्ज्ञाननिष्ठविशेष्यतानिरूपितप्रामाण्यविरोधिधर्मनिष्ठप्रकारतानिरूपकज्ञानत्वेन सकलज्ञानसङ्ग्रहस्य न्याय्यत्वादिति भावः । न क्षतिः । न गुरुमतसिद्धभ्रमाऽसङ्ग्रहः । प्रकारान्तरेण दीधितिग्रन्थसङ्गतिं प्रदर्शयतां मतमाह—केचित्तु इति । तद्भानविषयकः प्रमात्वविरोधिभानविषयकः । इच्छात्मक इति । इच्छा च प्रमात्व-

स च मिश्रादिमते विशिष्टं ज्ञानम् । गुरूणां तु स्वातन्त्र्येण अप्रामाण्योपस्थितौ धर्मिज्ञानम् ।

---

स च तादृशग्रहश्च । विशिष्टज्ञानमिति । तेषां मते अन्यथाख्यात्युपगमात् एकज्ञानगोचरधर्मधर्मिणोरेव विशेषणविशेष्यभावादिति भावः । स्वातन्त्र्येणेति । स्वतन्त्रोपस्थिताऽप्रामाण्यप्रकारतानिरूपितधर्मिनिष्ठविशेष्यतानिरूपकतज्ज्ञानगोचरानुभवरूपज्ञानान्तरमित्यर्थः ।

एतेनाऽप्रामाण्याऽग्राहकपदस्याऽप्रामाण्यविषयकज्ञानाजनकार्थतया ज्ञानग्रहजनकसामग्र्याश्च गुरुमते स्वतन्त्राऽप्रामाण्यग्रहाजनकतयाऽनुपपत्तेर्ज्ञानरूपधर्म्यगृहीतासंसर्गकस्वतन्त्राप्रामाण्यग्राहकसामग्र्यसमवहितार्थकतया तत्पदव्याख्यानं मिश्राणामनुपादेयमिति सूचितम् । मिश्रमते क्षणद्वयात्मककालघटितयौगपद्यमेव समवधानं बोध्यम् ।

---

विरोधिप्रकारकत्वेन प्रमात्वविरोधिज्ञानं जायतामित्याकारिका । तदधीनवाक्यजनक इति । तादृशेच्छाप्रयोज्यवाक्यजनको ग्रह इत्यर्थः । इदम्—व्यवहारजनक इति वाक्यम् । तादृशग्रहश्च इदं ज्ञानमप्रमेति व्यवहारजनको ग्रहश्च । प्रामाण्यविरोधिनिष्ठप्रकारतानिरूपिततज्ज्ञाननिष्ठविशेष्यतानिरूपकग्रहश्चेति यावत् । दीधितौ—विशिष्टज्ञानं इदं ज्ञानमप्रमेति ज्ञानम्, इदं रजतमिति ज्ञानमिति यावत् । तेषां मिश्रभट्टानाम् । एकज्ञानगोचरधर्मधर्मिणोरेवेति । इदं रजतमिति ज्ञानविषयशुक्तिरजतत्वयोरेवेत्यर्थः । एवकारेण विभिन्नज्ञानगोचरयोस्तयोर्व्यावृत्तिः । एवमिदं ज्ञानमप्रमेति ज्ञानविषयीभूताऽप्रामाण्यज्ञानयोर्विशेषणविशेष्यभावो बोध्यः । दीधितौ—गुरूणां तु गुरूणां मते तु, स्वातन्त्र्येण विशेष्यतया, अप्रामाण्योपस्थितौ इच्छायां न भूतस्याऽप्रामाण्यस्योपस्थितौ । धर्मिज्ञानमिति । तादृशग्रह इत्यनेनाऽन्वयः । स्वतन्त्रोपस्थितेति । स्वतन्त्रोपस्थितो योऽप्रामाण्यप्रकारस्तन्निष्ठप्रकारतानिरूपिता या ज्ञानरूपधर्मिनिष्ठविशेष्यता तन्निरूपको यस्तज्ज्ञानगोचरानुभवस्तद्रूपमित्यर्थः । मिथोभेदाऽग्रहात्समानकालीनविभिन्नविषयतयोरपि निरूप्यनिरूपकभावस्वीकारेण एकस्य विशिष्टज्ञानस्याऽसम्भवेऽपि अप्रामाण्योपस्थितिकालीनधर्मिज्ञानस्य इदं ज्ञानमप्रमेति व्यवहारजनकत्वादिति भावः । एतेन स्वातन्त्र्येणाऽप्रामाण्योपस्थितिकालीनधर्मिज्ञानस्य इदं ज्ञानमप्रमेति व्यवहारजनकत्वेन । ज्ञानग्रहजनकसामग्र्याश्चेति । इदं ज्ञानमप्रमेति भ्रमत्वभ्रमघटकस्य इदं ज्ञानमित्यनुभवस्य जनिका या सामग्री तस्याश्चेत्यर्थः । स्वतन्त्राप्रामाण्यग्रहाजनकतयेति । अनुभवसामग्र्याः प्रामाण्योपस्थित्यजनकतयेत्यर्थः । तादृशानुभवस्य स्मृत्यन्यत्वेन स्वतन्त्रोपस्थिताऽप्रामाण्यग्रहाजनकत्वेनेति यावत् । अनुपपत्तेरिति । बाधादित्यर्थः । प्रमात्वाग्रहेणेत्यादिः । गुरुमते इदं ज्ञानमप्रमेति ज्ञाने इदं घटज्ञानमिति अनुभवात्मकं अप्रमेति स्मरणात्मकम् । तत्रेदं ज्ञानमित्यनुभवजनकसामग्र्या अप्रामाण्याग्राहकतया तदप्रामाण्याग्राहकस्वाश्रयज्ञानग्राहकसामग्र्यन्तर्गततया तज्जन्यग्रहविषयत्वस्य प्रमात्वे विरहाद् बाध इति भावः । ज्ञानरूपधर्म्यगृहीतासंसर्गकेति । बाधनिश्चयाभावसहकृतेत्यर्थः । तादृशो यः स्वतन्त्राप्रामाण्यग्रहस्तदसमवहितेत्यर्थः । तत्पदव्याख्यानमिति ।

यत्र च तादृशग्रहादिः कदापि न जातस्तत्राऽग्राहकान्तं नोपादेयं प्रयोजनाभावादिति वदन्ति ।

ननु इदं घटत्वप्रकारकं ज्ञानं सविशेष्यकमित्यादेर्ज्ञानग्राहकस्य प्रामाण्याऽग्राहकत्वाद् वाधः ।

---

क्रमिकज्ञानद्वयसामग्र्योरेकक्षणेऽसत्त्वनियमात् । ननु यादृशप्रामाण्याश्रयज्ञाने कदाचिदपि अप्रामाण्यभ्रमो न जातस्तत्प्रामाण्यपक्षकस्थले तदप्रामाण्यग्राहकाप्रसिद्ध्या साध्याप्रसिद्धिरित्यत आह—यत्र चेति । ग्रहादीत्यादिपदात्तत्राप्रामाण्यप्रकारकगुणान्तरपरिग्रहः । तेन तादृशज्ञानाप्रसिद्धावपि तादृशेच्छाप्रसिद्धौ अग्राहकशरीरे ज्ञानत्वमनन्तर्भाव्य अप्रामाण्यावगाह्यजनकनिवेशे प्रसिद्धिः सम्भवति । तादृशेच्छाद्यसत्त्वे तु ज्ञानाद्यपरित्यागेऽपि अप्रसिद्धिरिति सूचितम् । प्रयोजनाभावादिति । बाधाप्रसक्तेरिति भावः।

---

तदप्रामाण्याग्राहकपदव्याख्यानमित्यर्थः । नोपादेयमिति । ज्ञानग्राहकसामग्र्याः स्वतन्त्रोपस्थिताऽप्रामाण्यप्रकारतानिरूपितज्ञानरूपधर्मिनिष्ठविशेष्यतानिरूपकग्रहाजनकत्वाभावादिति भावः ।

ननु गुरुमते उक्तानुभवस्मृत्यात्मकद्वयं युगपत् क्रमेण वा । आद्ये दोषविरहेऽपि द्वितीयपक्षे बाधनिश्चयाभावसहकृतस्वतन्त्राप्रामाण्यग्राहकसामग्र्यसमवहितत्वनिवेशेऽपि न प्रतीकारः, इदं ज्ञानानुभवसामग्र्या अप्रामाण्यस्मृतिसामग्र्यसमवहितत्वात्, तदानीं तत्स्मृतिसामग्रीसत्त्वेऽनुभवोत्पत्तिकालेऽपि स्मृतेर्दुर्वारतापत्तेः । स्मृतिसामग्र्यपेक्षयाऽनुभवसामग्र्या वलवत्त्वेऽनुभवसामग्र्यां स्मृतिसामग्री समवहितत्वस्यात्यन्तमसम्भावितत्वाच्चेत्यत आह—मिश्रमते इति । क्षणद्वयात्मककालघटितयौगपद्यमेवेति । एवकारेण एकक्षणघटितयौगपद्यव्युदासः । तेनाऽप्रामाण्यग्राहकसामग्र्याः प्रमात्वाश्रयज्ञानग्राहकसामग्र्याश्च एकक्षणावच्छेदेनैकाधिकरणेऽसत्त्वेन ज्ञानग्राहकसामग्र्याः अप्रामाण्यग्राहकसामग्र्यसमवहितत्वेन तादृशज्ञानग्राहकसामग्र्या अपि साध्यान्तर्गतत्वेन तज्जन्यग्रहविषयत्वस्य प्रमात्वे विरहेऽपि न बाधः, एकक्षणघटितयौगपद्यस्य व्युदासादिति ध्येयम् । एकक्षणे एकात्मनि च सामग्रीद्वयस्य समवधानाभावं दर्शयति—क्रमिकेति । गुणान्तरपरिग्रह इति । इच्छादिपरिग्रह इत्यर्थः । तेन गुणान्तरपरिग्रहेण, तादृशज्ञानाप्रसिद्धावपि अप्रामाण्यग्रहाप्रसिद्धावपि, तादृशेच्छाप्रसिद्धौ अप्रामाण्यप्रकारकेच्छाप्रसिद्धौ, अप्रामाण्यावगाह्यजनकनिवेशे तादृशस्थले इति शेषः । प्रामाण्यविरोध्यवगाही यस्तदजनकत्वस्य सामग्र्यां निवेशे इत्यर्थः । तादृशेच्छाद्यसत्त्वे अप्रामाण्यप्रकारकेच्छाद्यसत्त्वे । बाधाप्रसक्तेरिति । इदं ज्ञानमप्रमेति ज्ञानमप्रमेति ज्ञानग्राहकसामग्रीमादायेत्यादिः । तादृशाऽप्रामाण्यग्रहविरहादिति भावः ।

प्रामाण्यस्य स्वतस्त्वपरतस्त्वविचाराङ्गसंशयजनकविप्रतिपत्तिघटकपदानां कृत्यं समाप्य मीमांसकाभिमतविधिकोटिपरिष्करणाय बाधमाशङ्कते दीधितौ—नन्विति । इत्यादेरिति । एतादृशशब्दादेरिति । आदिना घटत्वप्रकारकं ज्ञानं सविशेष्यकमित्यस्य परिग्रहः । ज्ञानग्राहकस्य घटत्वप्रकारकत्वविशिष्टज्ञानविषयकशाब्दबोधात्मकग्रहजन-

इत्यादेः—एतादृशशब्दादेः। ज्ञानग्राहकस्येत्यनेन तज्जन्यग्रहस्य स्वाश्रयग्राहकसामग्रीजन्ययावद्ग्रहान्तर्गतत्वं सूचितम्। बाध इति।

यद्यपि ज्ञानं घटज्ञानं वा गुण इत्यादेर्ज्ञानग्राहकस्य प्रामाण्याऽग्राहकत्वादपि बाधसम्भवः, तथापि तद्धर्मप्रकारकत्वेन सविशेष्यकत्वेन च ज्ञानग्रहपर्यन्तनिवेशे तद्वारणसम्भवादुक्तग्रहपर्यन्तानुधावनम्।

---

कस्य, अनेन दीधित्युक्तविशेषणेन, तज्जन्यग्रहस्य घटत्वप्रकारकं ज्ञानं सविशेष्यकमिति शब्दजन्यग्रहस्य। स्वाश्रयग्राहकसामग्रीजन्ययावद्ग्रहान्तर्गतत्वं सूचितमिति। स्वं प्रमात्वं, तदाश्रयीभूतघटत्वप्रकारकज्ञानविषयको यः घटत्वप्रकारकं ज्ञानं सविशेष्यकमिति शाब्दबोधात्मकग्रहस्तदन्तर्गतत्वं सूचितमित्यर्थः। न च घटत्वप्रकारकज्ञानस्य न प्रमात्वाश्रयत्वं घटत्ववद्विशेष्यकत्वावच्छिन्नघटत्वप्रकारकज्ञानत्वस्यैव प्रमात्वादिति वाच्यम्। प्रमात्वात्वाश्रयत्वस्योपलक्षणत्वात्। उपलक्षणत्वं च प्रतियोगिव्यधिकरणतदभावाभाववत्त्वम्। न च प्रमात्वविशिष्टविषयकग्रहजनकसामग्रीजन्यत्वनिवेशे घटत्वप्रकारकज्ञानस्य वारणमिति वाच्यम्। तथासति प्रमात्वविशिष्टविषयकत्वेन इदं ज्ञानं प्रमेति ज्ञानस्यैव ग्रहणं स्यान्न त्वनुव्यवसायादेः तज्जनकसामग्रीजन्यग्रहः इदं ज्ञानं प्रमेति ज्ञानमेव तद्विषयत्वस्य प्रमात्वे नैयायिकैरपि स्वीकारेण सिद्धसाधनापत्तेः। दीधितौ—प्रामाण्याग्राहकत्वादिति। घटत्वप्रकारकज्ञानं सविशेष्यकमिति शब्दादेरिति पूर्वेणान्वयः। प्रामण्यग्रहाजनकत्वादित्यर्थः। तादृशशब्दजन्यग्रहविषयत्वस्य प्रमात्वेऽभावादिति यावत्। बाध इति। घटत्वप्रकारकं ज्ञानं सविशेष्यकमिति वाक्यजन्यशाब्दबोधस्यापि तदप्रामाण्याग्राहकस्याश्रयज्ञानग्राहकसामग्रीजन्ययावद्ग्रहान्तर्गततया तद्विषयत्वस्य प्रमात्वे विरहाद् बाध इति भावः।

घटत्वप्रकारकं ज्ञानं सविशेष्यकमित्यत्र प्रकारकत्वविशेष्यकत्वोपादानस्य प्रयोजनं दर्शयति—यद्यपीत्यादिना। बाधसम्भव इत्यनेनान्वयः। तथा च ज्ञानं गुण इति वाक्यजन्यशाब्दबोधस्यापि तादृशयावद्ग्रहान्तर्गततया। तद्विषयत्वस्य प्रमात्वेऽसत्त्वाद् बाध इति भावः। ननु विषयविषयकत्वाश्रयज्ञानग्राहकसामग्रीजन्ययावद्ग्रहविषयत्वसाध्यत्वे नायं दोष इत्यत आह—घटज्ञानमिति। आदिपदाद् घटज्ञानवानित्याद्यनुमितिस्मृतिपरिग्रहः। तथा च तादृशशाब्दबोधानुमितिस्मृत्यादिकमादाय बाधो दुर्वार इति भावः।

न च गुरुमते ज्ञानं स्वनिष्ठप्रामाण्यमवश्यं गृह्णातीति नियमः, तथा चानुमितिः शाब्दबोधश्च घटत्ववति घटत्वप्रकारकज्ञानत्वं गृह्णातीति न बाध इति वाच्यम्। घटत्ववति घटत्वप्रकारकत्वस्य ज्ञानभेदेन भिन्नतयाऽनुमित्यादिवृत्तेस्तस्य ग्रहेऽपि अनुमितिविषयीभूतज्ञानवृत्तेस्तस्याऽग्रहेण बाधतादवस्थ्यात्। भट्टमिश्रमते बाधस्य दुर्वारत्वाच्च। ज्ञानग्राहकस्य घटज्ञानं गुणाभिन्नमिति शाब्दबोधात्मको यो ज्ञानग्रहस्तज्जनकस्य। प्रामाण्याग्राहकत्वादपीति। घटज्ञानं गुण इत्यादेरित्यनेनान्वयः। प्रामाण्यग्रहाजनकत्वादित्यर्थः। तादृशशब्दजन्यग्रहविषयत्वस्य प्रमात्वेऽसत्त्वादिति यावत्। बाध इति। घटज्ञानं गुण इति वाक्यजन्यशाब्दबोधस्यापि तदप्रामाण्याग्राहकस्वाश्रयज्ञानग्राहकसामग्री-

अथ विशेष्ये ज्ञानस्य तत्प्रकारकत्वप्रकारतया ग्राहकत्वं वाच्यम् ।

**विशेष्ये इति । विशेष्यांशे यत्प्रकृतप्रामाण्यघटकप्रकारप्रकारकत्वं तेन प्रकारेण ज्ञानस्य ग्राहकत्वं साध्ये प्रवेश्यमित्यर्थः ।**

जन्ययावद्ग्रहान्तर्गततया तद्विषयत्वस्य प्रमात्वेऽसत्त्वाद् बाध इति भावः । समाधत्ते—**तथापीति । तद्धर्मप्रकारकत्वेनेति ।** प्रामाण्यघटकप्रकारकत्वेनेत्यर्थः । घटत्वप्रकारकं ज्ञानं गुण इति शब्दवारणायाह—**सविशेष्यकत्वेनेति ।** किञ्चिन्निष्ठविशेष्यतानिरूपकत्वेनेत्यर्थः । **ज्ञानग्रहपर्यन्तनिवेशे इति ।** स्वाश्रयज्ञानविषयकग्रहे निवेशेत्यर्थः । **तद्वारणसम्भवादिति ।** ज्ञानं गुणः घटज्ञानं ज्ञानं गुणशब्दजन्यग्रहवारणादित्यर्थः । तत्स्थलीयबाधदोषनिराकरणमिति यावत् । तथा च प्रकृतप्रामाण्यघटकप्रकारकत्वेन सविशेष्यकत्वेन च प्रकृतप्रमात्वाश्रयीभूतज्ञानविषयको यो ग्रहस्तज्जनकसामग्रीजन्यग्रहविषयत्वं साध्यं पर्यवसितम् । ज्ञानं गुण इति शब्दस्य ज्ञानत्वेनैव प्रमात्वाश्रयीभूतज्ञानविषयकग्रहजनकत्वं न तु तद्धर्मप्रकारकत्वेन सविशेष्यकत्वेन तथेति तादृशशब्दस्य प्रकृतप्रामाण्यप्रकारप्रकारकत्वेन सविशेष्यकत्वेन च प्रकृतप्रमात्वाश्रयीभूतज्ञानविषयको यो ग्रहस्तत्सामग्रीत्वेनाऽग्रहणमिति भावः । एवं घटज्ञानं गुण इति शब्दस्यापि बोध्यम् । **उक्तग्रहपर्यन्तानुधावनमिति ।** इदं घटत्वप्रकारकं ज्ञानं सविशेष्यकमिति शब्दजन्यग्रहपर्यन्तानुधावनमित्यर्थः ।

प्रमात्वाश्रयीभूतस्य सप्रकारकमिदमिति ज्ञानस्य यः सप्रकारकमिदं ज्ञानं सविशेष्यकमिति शाब्दात्मकग्रहः तज्जनकसामग्रीजन्यग्रहविषयत्वस्य प्रमात्वे विरहेण प्रसक्तस्य बाधस्य समाधानमाह दीधितौ—अथेत्यादिना । विशेष्ये घटे, विशेष्यकत्वं सप्तम्यर्थः । तस्य ज्ञानेऽन्वयः । **ज्ञानस्येति ।** षष्ठ्यर्थो विषयकत्वम् । तस्य ग्राहकत्वघटकग्रहेऽन्वयः । **तत्प्रकारकत्वप्रकारतयेति ।** अस्यापि ग्रहेऽन्वयः । **वाच्यमिति ।** तथा च घटविशेष्यकज्ञानविषयको यो घटत्वप्रकारकत्वप्रकारको ग्रहस्तज्जनकसामग्रीजन्यग्रहविषयत्वमित्यर्थः । घटत्वप्रकारकं ज्ञानं सविशेष्यकमिति शाब्दबोधात्मकग्रहस्य घटे प्रकारीभूतं यत्प्रामाण्यघटकघटत्वं तत्प्रकारकत्वप्रकारकत्वाभावेन साध्यानन्तर्गतत्वादिति भावः । गादाधर्यां—**विशेष्यांश इति ।** घटे इत्यर्थः । अस्य ज्ञानस्येत्यनेन सम्बन्धः । **यदिति ।** अस्य प्रकारकत्वेनेत्यनेन सम्बन्धः । प्रकृतप्रामाण्यं यथाऽयं घट इति ज्ञानवृत्तिप्रामाण्यस्य पक्षत्वे घटत्ववति घटत्वप्रकारकत्वरूपं तद्घटकः प्रकारः घटत्वं तत्प्रकारकत्वं तेन रूपेणेत्यर्थः । अस्य ग्राहकत्वघटकग्रहेऽन्वयः । तथा च घटविशेष्यकज्ञानविषयकस्तेन रूपेण ग्रहस्तज्जनकसामग्रीत्यादि । प्रामाण्याश्रयीभूतं घटोऽयमिति ज्ञानं तस्य प्रामाण्यघटकघटत्वप्रकारकत्वेन ग्रहः मिश्रमते घटत्ववति घटत्वप्रकारकज्ञानवानहमित्यनुव्यवसायात्मकं ज्ञानं मिश्रमते । गुरुमते व्यवसाय एव । भट्टमते इयं ज्ञातता घटत्वप्रकारकघटविशेष्यकज्ञानजन्या इत्यनुमितिः । न्यायमते च घटत्वप्रकारकज्ञानवानहमित्यनुव्यवसायः तज्जनकसामग्री चक्षुरादिसंयोगः मनःसन्निकर्ष-परामर्शादिरूपात्तज्जन्यग्रहविषयत्वं प्रमात्वे मीमांसकमते । न्यायमते तदभावः ।

पुरोवर्त्तिनि घटत्वप्रकारकं ज्ञानमिति ज्ञानेन च प्रामाण्यं गृह्यत एव। तत्र तस्य प्रकारत्वं तत्र भासमानवैशिष्ट्यप्रतियोगित्वम्।

---

नन्वेवमपि पुरोवर्त्तिनि घटत्वप्रकारकमिदं ज्ञानमित्याकारकशाब्दादिज्ञानस्योक्तप्रकारेण ज्ञानावगाहिनः पुरोवर्त्तिरूपधर्मिणि घटत्वादिवैशिष्ट्यानवगाहिनो धर्मिनिष्ठघटत्वादिमत्त्वघटितप्रामाण्यानवगाहित्वाद् बाधो दुर्वार एवेत्याशङ्क्य तादृशज्ञानेनापि धर्मिनिष्ठघटत्वादिवैशिष्ट्यस्य प्रकारताघटकत्वेनावगाहनेन प्रामाण्यग्रहान्न बाध इत्याह—पुरोवर्त्तिनीति। उपदर्शितज्ञानस्य पुरोवर्त्तिनिष्ठघटत्वादिवैशिष्ट्यावगाहितां स्पष्टयितुं प्रकारतापदार्थं विवृणोति—तत्र तस्येति। तत्र भासमानेति। भासमानं यत्तन्निष्ठवैशिष्ट्यं तत्प्रतियोगित्वमर्थोऽत्र वैशिष्ट्येन तत्रेत्यस्य सम्बन्धाभिमानेनाभिमतः।

---

पुरोवर्त्तिनिष्ठविशेष्यतानिरूपिता या प्रामाण्यघटकप्रकारनिष्ठाप्रकारता तदाश्रयप्रकारकत्वनिष्ठप्रकारतानिरूपितस्वाश्रयज्ञाननिष्ठविशेष्यताशालिग्रहजनकसामग्रीजन्ययावद्ग्रहविषयत्वं निष्कर्षः। यद्यपि न्यायमतेऽप्यनुव्यवसायस्य विशेष्यांशे "तद्वति" तत्प्रकारकत्वप्रकारेण ज्ञानविषयकतया तद्विषयत्वस्य प्रमात्वे सत्त्वाद् बाधः, तथापि न्यायमते अभातविशेष्यांशे एव तथा कल्पनाददोषः। अनुपदमेव च विवेचयिष्यते।

आशङ्कते—नन्विति। एवमपि विशेष्यांशे प्रकृतप्रकृतप्रामाण्यघटकप्रकारप्रकारकत्वेन ज्ञानग्राहकत्वनिवेशेऽपि। शाब्दादीति। आदिना अनुमित्यादिपरिग्रहः। उक्तप्रकारेणेति। पुरोवर्त्तिविशेष्यांशे यत्प्रकृतप्रामाण्यघटकप्रकारप्रकारकत्वप्रकारेणेत्यर्थः। ज्ञानावगाहिनः प्रामाण्याश्रयज्ञानविषयकस्य, शाब्दबोधात्मकग्रहस्येति यावत्। एतावता पुरोवर्त्तिनि घटत्वप्रकारकमिदं ज्ञानमिति वाक्यजशाब्दस्य विशेष्यीभूतपुरोवर्त्तिनि प्रकृतप्रामाण्यघटकघटत्वप्रकारकत्वप्रकारकज्ञानविशेष्यग्रहरूपत्वात्तस्य साध्यान्तर्गतत्वं सूचितम्। धर्मिनिष्ठघटत्वादिमत्त्वघटितेति। प्रामाण्यं हि तद्धर्मवन्निष्ठतद्धर्मप्रकारकत्वम्, एवं च धर्मिनिष्ठधर्मवत्त्वबोधनेन घटत्वादिमत्त्वघटितेत्यर्थः। प्रामाण्यानवगाहित्वादिति। उक्तशाब्दस्येति भावः। तथा चोक्तशाब्दविषयत्वस्य प्रमात्वेऽसत्त्वादिति यावत्। धर्मिणि घटत्वादिमत्त्वस्य शाब्देनाऽविषयीकरणादिति तत्त्वम्। तादृशज्ञानेनापि। पुरोवर्त्तिनि घटत्वप्रकारकं ज्ञानमिति ज्ञानेनापि। प्रकारताघटकत्वावगाहनेनेति। वक्ष्यमाणप्रकारतापदार्थघटकतया विषयीकरणेनेत्यर्थः। प्रामाण्यग्रहादिति। पक्षीभूतप्रामाण्यस्य विषयीकरणादित्यर्थः। न बाध इति। पुरोवर्त्तिनि घटत्वप्रकारकं ज्ञानमिति शाब्दविषयत्वस्य प्रमात्वे सत्त्वादिति भावः। परन्तु न्यायमते न बाध इति विभावनीयम्। उपदर्शितज्ञानस्येति। पुरोवर्त्तिनि घटत्वप्रकारकमिति ज्ञानस्येत्यर्थः। पुरोवर्त्तिनिष्ठघटत्वादिवैशिष्ट्यावगाहितां प्रामाण्यघटकपुरोवर्त्तिनिष्ठघटत्वादिवैशिष्ट्यविषयकत्वम्, स्पष्टयितुं सप्रमाणं ज्ञापयितुं, प्रकारतापदार्थं पुरोवर्त्तिनि घटत्वप्रकारकं ज्ञानमिति ज्ञानविषयघटत्वप्रकारकत्वघटकप्रकारतापदार्थं, विवृणोति परिष्करोति। दीधितौ—तत्र घटे, तस्य घटत्वस्य, प्रकारत्वं लक्ष्यप्रतीकमेतत्, तत्र पुरोवर्त्तिनि। भासमान-

वैशिष्ट्ये भासमानत्वविशेषणात् पुरुष इत्यादिज्ञाने स्वरूपसत्पुरुषादिनिष्ठवैशिष्ट्य-प्रतियोगित्वमादाय दण्डादेर्न प्रकारता। तत्पदार्थेऽपि भासमानत्वं निवेश्यम्, अन्यथा घटो द्रव्यमित्यादौ घटादाविव पटादावपि द्रव्यत्वादेः प्रकारतापत्तेः। प्रतियोगित्वमपि भासमानत्वेन विशेष्यम्, अन्यथा दण्डपुरुषसंयोग इत्यादौ दण्डादेः प्रकारतापत्तेः। न चैवं वैशिष्ट्ये भासमानत्वरूपविशेषणस्योक्तव्यावृत्त्यसङ्गत्या तद्वैयर्थ्यमिति वाच्यम्। प्रतियोगी दण्डपुरुष इत्यादौ दण्डादेः प्रकारतावारणस्यापाततस्तत्प्रयोजनत्वात्।

वैशिष्ट्यप्रतियोगित्वमिति। लक्षणनिर्देशः। तदर्थमाह—भासमानमिति। विषयीभूतं यत्तन्निष्ठं वैशिष्ट्यं विशेष्यवृत्तिसंसर्गः, तत्प्रतियोगित्वमित्यर्थः। अथ इत्यस्याग्रेतनाऽभिमत इत्यनेनाऽन्वयः। अभिमतौ स्वाभिमानमाह—अत्रेत्यादिना। अत्र लक्षणघटकीभूतपुरोवर्तिनिष्ठेत्यर्थक तत्रेति पदस्य। वैशिष्ट्येन सह वैशिष्ट्यबोधकपदेन सह, सम्बन्धाभिमानेन अन्वयकल्पनेन।

भासमानं यत्पुरोवर्त्ति तन्निष्ठं भासमानं यद्वैशिष्ट्यं तन्निरूपितं भासमानं यत्प्रतियोगित्वं तत्प्रकारतापदार्थः। तत्र प्रथमं वैशिष्ट्ये भासमानत्वविशेषणस्य व्यावृत्तिमाह—वैशिष्ट्ये इति। तन्निष्ठभासमानवैशिष्ट्यप्रतियोगित्वरूपप्रकारताघटकवैशिष्ट्ये इत्यर्थः। इत्यादिज्ञाने इति। सप्तम्यर्थो निरूपितत्वम्। तथा च पुरुषत्वेतरधर्माप्रकारकज्ञाननिरूपिता अस्याश्च "वाक्यान्तस्थ"प्रकारतायामन्वयः। स्वरूपदिति। स्वरूपसत् पुरुषत्वमात्रेण प्रतीयमानः, न तु दण्डादिप्रकारेणापि। तादृशपुरुषनिष्ठं यद्वैशिष्ट्यं दण्डवैशिष्ट्यं तत्प्रतियोगित्वं दण्डस्येत्यर्थः। दण्डादेरिति। षष्ठ्यर्थो निष्ठत्वम्, तच्च प्रकारत्वान्वयि। तथा च पुरुषः इति ज्ञाननिरूपितप्रकारता न दण्डादिनिष्ठेति पर्यवसितम्। अथवा न दण्डादेः प्रकारत्वापत्तिरित्यर्थः। वैशिष्ट्ये भासमानत्वनिवेशे तु दण्डादेर्न भासमानवैशिष्ट्यप्रतियोगित्वमिति न दोषः। तत्पदार्थेति। लक्षणघटकविशेष्यवृत्तित्वबोधकमूलप्रकृतिभूततत्पदस्यार्थेऽपीत्यर्थः। अन्यथा विशेष्यीभूततत्पदार्थे भासमानत्वानिवेशे, घटो द्रव्यमित्यादौ घटो द्रव्यमित्यादिज्ञाने। घटनिष्ठविशेष्यतानिरूपितद्रव्यत्वनिष्ठप्रकारताशालिज्ञाने इत्यर्थः। प्रकारतापत्तेरिति। पटे स्वरूपसत् "अभासमाने" अथ च घटवृत्तितया भासमाने यद्वैशिष्ट्यं तत्प्रतियोगित्वस्य द्रव्यत्वे सत्त्वेनोक्तज्ञानीयद्रव्यत्वनिष्ठप्रकारतायां घटनिष्ठविशेष्यतानिरूपितत्वमिवोदासीनपटादिनिरूपितत्वमपि भासेतेति भावः। तदुक्तौ भासमानविशेष्यवृत्तितया भासमानं यद्वैशिष्ट्यं पर्यवसितम्, तथा च न दोषः। प्रतियोगित्वमपीति। प्रकारीभूतवैशिष्ट्यस्य संसर्गरूपं प्रतियोगित्वमपीत्यर्थः। अन्यथा। प्रतियोगित्वे भासमानत्वानिवेशे। दण्डपुरुषसंयोग इत्यादौ। दण्डपुरुषसंयोगत्वप्रकारकज्ञाने। अत्र भासमानविशेष्ये पुरुषे भासमानवैशिष्ट्यस्य "संयोगात्मकस्य" प्रतियोगित्वं दण्डेऽस्तीति दण्डस्य प्रकारतापत्तिः। प्रतियोगित्वे भासमानत्वविवक्षणे तु प्रतियोगित्वस्याऽभासमानत्वेन न दोषः। शङ्कते—न चेति। एवं प्रतियोगित्वे भासमानत्वनिशे। उक्तव्यावृत्त्यसङ्गत्येति। पुरुष इति ज्ञाने दण्डादेः प्रकारत्वव्यावृत्त्यसङ्गत्येत्यर्थः। प्रतियोगित्वे भासमानत्वविशेषणेनैव

यद्यप्येवमपि संयोगप्रतियोगी दण्डः पुरुषश्चेत्यादौ दण्डादेः प्रकारत्वं दुर्वारम्, तथापि स्वविषयतद्धर्मिनिष्ठं यत्संसर्गविधया स्वविषयीभूतं वैशिष्टचं तदीयसंसर्गविधया स्वविषयो यत्तदीयप्रतियोगित्वं तदेव स्वीयं तद्धर्म्यंशे प्रकारत्वमिति विवक्षया न दोषः।

प्रतियोगितासम्बन्धेन पुरुषादिनिष्ठसंयोगादिप्रकारकदण्डादिविशेष्यकज्ञाने दण्डादेः प्रकारतावारणाय वैशिष्टचस्य संसर्गताख्यविषयताविशेषनिवेशः। स्वनिष्ठसंयोगादि-प्रतियोगित्वसम्बन्धेन दण्डादौ पुरुषादिप्रकारके पुरुषे दण्ड इत्यादिज्ञाने दण्डादेः प्रकार-तावारणाय प्रतियोगित्वस्यापि संसर्गे संसर्गविधया विषयत्वनिवेशनम्। उक्तपरम्परा-सम्बन्धावगाहिज्ञाने संसर्गतया भासमानवैशिष्टचस्य सम्बन्धतया न प्रतियोगित्वभान-

---

वारणादिति भावः। तद्वैयर्थ्यमिति। वैशिष्टचे भासमानत्वविशेषणवैयर्थ्यमित्यर्थः। प्रतियोगी दण्डपुरुष इत्यादाविति। प्रतियोगिताप्रकारकदण्डपुरुषविशेष्यकज्ञाने इत्यर्थः। तत्प्रयोजनत्वात् वैशिष्टचे भासमानत्वविशेषणप्रयोजनत्वात्। तथा च तदनिवेशे भासमानपुरुषविशेष्येऽभासमानदण्डवैशिष्टचप्रतियोगित्वमादाय दण्डादेः प्रकारतापत्तिः। तन्निवेशे तु वैशिष्टचस्याऽभासमानत्वाद् भासमानवैशिष्टचप्रतियोगित्वविरहान्न दोष इति भावः।

एवमपि विशेष्ये वैशिष्टचे प्रतियोगित्वे भासमानत्वनिवेशेऽपि, संयोगप्रतियोगी दण्डः पुरुषश्चेत्यादाविति। संयोगप्रतियोगित्वनिष्ठप्रकारतानिरूपितानादण्डनिष्ठविशेष्यता या पुरुषनिष्ठविशेष्यता तच्छालिज्ञाने इत्यर्थः। दण्डादेरिति। प्रकृतज्ज्ञानविशेष्यीभूत-दण्डादेरित्यर्थः। प्रकारत्वं दुर्वारमिति। भासमानपुरुषरूपविशेष्यवृत्तिभासमानसंयोग-रूपं यद्वैशिष्टचं तदीयभासमानप्रतियोगित्वस्य दण्डादौ सत्त्वादिति भावः। वैशिष्टच-तत्प्रतियोगित्वयोः आकाङ्क्षया भानमादृत्य पुरोवर्त्तिनिष्ठभासमानवैशिष्टचप्रतियोगित्वं परिष्करोति—तथापीति। स्वविषयतद्धर्मिनिष्ठं यज्ज्ञानीयप्रकारत्वं निर्वाच्यं तज्ज्ञान-मेव स्वपदार्थः। स्वविषयीभूतो यस्तादृशो धर्मी, तन्निष्ठं यदित्यस्य वैशिष्टचेऽन्वयः। संसर्गविधयेति। संसर्गतयेत्यर्थः। स्वविषयीभूतं तादृशज्ञानविषयीभूतं, वैशिष्टचं संसर्गः। तदीयसंसर्गविधया स्वविषयो यदिति। वैशिष्टचनिरूपितसंसर्गतया तज्ज्ञान-विषयीभूतम्। यत्तदीयप्रतियोगित्वमिति। वैशिष्टचनिरूपितप्रतियोगित्वम्। तदेव तादृश-वैशिष्टचप्रतियोगित्वमेव, स्वीयं तादृशज्ञाननिरूपितं, तद्धर्म्यंशे तादृशज्ञानविशेष्यांशे, प्रकारत्वं प्रकारतापदार्थः। इति विवक्षया न दोष इति। वैशिष्टच-प्रतियोगित्वयोः संसर्ग-मर्यादया ज्ञानविषयत्वनिवेशात् नातिप्रसङ्गरूपो दोष इत्यर्थः। तथा च संयोगप्रतियोगी दण्डः पुरुषश्चेति समूहालम्बनज्ञानविषयीभूतदण्डात्मकधर्मिनिष्ठं यत्संसर्गमर्यादया भासमानं संयोगप्रतियोगित्ववैशिष्टचं "न तु संयोगवैशिष्टचं संयोगस्य संसर्गमर्या-दयाऽभासमानत्वात्" तदीयसंसर्गविधया ज्ञानविषयीभूत यत्संयोगप्रतियोगित्ववैशिष्टच-प्रतियोगित्वं तस्य संयोगप्रतियोगित्वे एव सत्त्वान्नातिप्रसङ्ग इति भावः। ज्ञान इति। पुरुषनिष्ठसंयोगवान्दण्ड इति ज्ञाने इत्यर्थः। वैशिष्टचस्य संयोगस्य। निवेश इति। वैशिष्टचे संसर्गविधयेत्युक्तमिति भावः। उक्तपरम्परासम्बन्धावगाहिज्ञाने स्वनिष्ठसंयो-

तच्च तत्र वैशिष्ट्याग्रहे दुर्ग्रहमिति ।

मिति नातिप्रसङ्गः । संसर्गीयप्रतियोगित्वानुयोगित्वयोरपि विशिष्टधीविषयत्वमिति मतेनेदम् । एवं टीकाकारानुमतं भ्रमे विशेष्यानुयोगिकविशेषणप्रतियोगिकाऽलीक-वैशिष्ट्यभानमवलम्ब्येदम् । अन्यथा भ्रमप्रकाराऽसङ्ग्रहात् ।

तच्चेति । तादृशप्रकारत्वं चेत्यर्थः । वैशिष्ट्याग्रहे=धर्म्युपरागेण तत्तद्धर्मप्रति-योगिकत्वोपरागेण च वैशिष्ट्याज्ञाने । ईदृशप्रकारताघटितस्य तदंशे तत्प्रकारकत्वस्य तन्निष्ठवैशिष्ट्यनिरूपिततत्तद्धर्मिनिष्ठप्रतियोगितावगाहितारूपस्य भाने तद्घटकतया तद्धर्मिनिष्ठप्रकारवैशिष्ट्यभानमावश्यकमिति प्रामाण्यभाने न किञ्चिदवशिष्यते इति भावः ।

गादिप्रतियोगित्वसम्बन्धावगाहिज्ञाने, भासमानवैशिष्ट्यस्य स्वनिष्ठसंयोगादिप्रतियोगि-त्वस्य । न प्रतियोगित्वभानमिति । किन्तु पुरुषसंसर्गत्वेन भानमिति भावः । नातिप्रसङ्ग इति । न दण्डादेः प्रकारतापत्तिरित्यर्थः । संसर्गीयप्रतियोगित्वानुयोगित्वयोरपीति । अपिना संसर्गविशेष्यप्रकाराणां समुच्चयः । इदम् । भासमानप्रतियोगित्वम् । संसर्गीय-प्रतियोगित्वानुयोगित्वयोर्विशिष्टधीविषयत्वानुपगमे वैशिष्ट्यप्रतियोगित्वे भासमानत्वं न स्यादिति भावः । अन्यथा तादृशवैशिष्ट्यस्याऽभासमानत्वे, भ्रमप्रकाराऽसङ्ग्रहादिति । ह्रदो वह्निमान् इदं रजतमिति भ्रमे प्रकारस्य प्रकारत्वानुपपत्तिप्रसङ्गादित्यर्थः । दीधितौ—तच्च पुरोवर्त्तिनि घटत्वप्रकारकमिदं ज्ञानमिति शाब्दविषयीभूतघटत्व-प्रकारकत्वघटकप्रकारत्वं च, तत्र पुरोवर्त्तिनि घटत्वप्रकारकमिदं ज्ञानमिति ज्ञाने वैशि-ष्ट्याग्रहे धर्मिनिष्ठधर्मवत्त्वरूपवैशिष्ट्यस्याविषयकत्वे सतीत्यर्थः । दुर्ग्रहमिति । अशक्य-त्वादित्यर्थः । तथा च तादृशप्रकारत्वभानार्थं धर्मिनिष्ठधर्मत्वरूपवैशिष्ट्यभानमाव-श्यकमिति तादृशवैशिष्ट्यघटितप्रामाण्यस्य तादृशशाब्देनापि विषयीकरणान्न बाध इति भावः । टीकायां—तादृशप्रकारत्वं चेति । पुरोवर्त्तिनि घटत्वप्रकारकमिदं ज्ञानमिति शाब्द-बोधविषयीभूतघटत्वप्रकारकत्वघटकप्रकारत्वं चेत्यर्थः । दीधितौ—तत्र पुरोवर्त्तिनि घट-त्वप्रकारकमिदं ज्ञानमिति ज्ञाने । धर्म्युपरागेणेति । उपरागः सम्बन्धः । तत्तद्धर्मप्रति-योगिकत्वोपरागेण चेति । धर्मिवृत्तिधर्मप्रतियोगिकत्वविषयकत्वेनेत्यर्थः । वैशिष्ट्याज्ञाने इति । धर्मिनिष्ठधर्मवत्त्वरूपवैशिष्ट्यस्याभाने इत्यर्थः । दुःखेनाऽशक्यो ग्रहो यस्येति व्युत्पत्त्या अशक्यज्ञानमित्यर्थः । ईदृशप्रकारताघटितस्येति । धर्मिनिष्ठवैशिष्ट्यप्रतियोगि-त्वरूपप्रकारताघटितस्येत्यर्थः । तदंशे तत्प्रकारकत्वस्येति । पुरोवर्त्तिनि घटत्वतत्प्रकार-कत्वस्येत्यर्थः । तन्निष्ठवैशिष्ट्यनिरूपिततत्तद्धर्मनिष्ठप्रतियोगित्वावगाहितारूपस्येति । घटादिनिष्ठं यद्वैशिष्ट्यं तन्निरूपिता घटत्वादिनिष्ठा या प्रतियोगिता तद्विषयकत्व-रूपस्येत्यर्थः । भाने पुरोवर्त्तिनि घटत्वप्रकारकमिदं ज्ञानमिति शाब्दज्ञानविषयत्वे, तद् घटकतया धर्मिनिष्ठधर्मवैशिष्ट्यनिरूपितप्रतियोगितावगाहित्वरूपतदंशे तत्प्रकार-कत्वान्तःपातितयेत्यर्थः । तद्धर्मिनिष्ठप्रकारवैशिष्ट्यभानमिति । घटादिरूपधर्मिनिष्ठो यः घटत्वादिरूपप्रकारः तद्वैशिष्ट्यस्य विषयत्वमित्यर्थः । आवश्यकम् उचितम् । इति

यद्यप्येवं प्रामाण्यघटकसकलपदार्थभानेऽपि विलक्षणविशेषणविशेष्यभावापन्न-विशेष्यप्रकारादिरूपपदार्थघटितं तद्वति तत्प्रकारकत्वरूपविशिष्टप्रामाण्यं न भातम्, एवं भ्रमे विशेष्यानुयोगिकाऽलीकवैशिष्ट्यावगाहितास्वीकारे तत्साधारण्यवारणाय संसर्गे सत्त्वमधिकं प्रामाण्यशरीरेऽवश्यमेव निवेशनीयम्, तथा च पुरोवर्त्तिनि घटत्व-प्रकारकमिदमित्यादिज्ञाने तदनवगाहनाद् बाधवारणाऽसम्भवः।

एतेन विशेष्यनिष्ठं यद्वैशिष्ट्यं तद्धर्मनिष्ठप्रतियोगितावगाहितारूपप्रामाण्यमेव

---

अतः, घटादिनिष्ठघटत्वादिप्रकारवैशिष्ट्यस्यावश्यकत्वादिति यावत्, प्रामाण्यभाने घट-निष्ठघटत्ववत्त्वघटिततद्वति तत्प्रकारकत्वरूपप्रामाण्यस्य विषयीकरणे न किञ्चिदव-शिष्यते इति। न किञ्चिदवशिष्टमित्यर्थः, यद्विना प्रामाण्यभानाभावः स्यादिति न बाध इति भावः।

अथेत्याद्युक्तसमाधानं दीधितौ तन्नेत्यादिनाऽन्वयानुपपत्तिमुद्भाव्य दूषयिष्यते। परन्तु बाधसिद्धसाधनयोः प्रसक्तयोरेव सम्भवेऽन्वयानुपपत्तिरेव कथमुद्भाव्यते इत्याशङ्कां मनसि निधाय समाधातुं दोषानुपक्रमते—यद्यपीत्यादिना। एवमिति। प्रकारत्वघटित-प्रकारकत्वघटितत्वे इत्यर्थः। प्रामाण्यघटकसकलपदार्थभानेऽपीति। पुरोवर्त्तिनि घटत्व-प्रकारकमिति बोधे इत्यादिः। तदंशे तत्प्रकारकत्वात्मकप्रामाण्यघटकधर्मिनिष्ठधर्मवत्त्व-रूपपदार्थानां तादृशबोधविषयत्वेऽपीत्यर्थः। विलक्षणेति। त्वदुक्त पुरोवर्त्तिधर्मिनिष्ठ-संसर्गप्रतियोगिताभिन्नेत्यर्थः। विशेषणविशेष्यभावापन्नविशेष्यप्रकारादिरूपपदार्थ-घटितमिति। तादृशविशेषणत्वविशेष्यत्वविशिष्टप्रकारविशेष्यसंवलितमित्यर्थः। तद्वति तत्प्रकारकत्वरूपविशिष्टप्रामाण्यमिति। तद्वद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्वरूप-विशिष्टप्रामाण्यमित्यर्थः। न पुरोवर्त्तिनि घटत्वप्रकारकं ज्ञानमिति बोधविषयः। तथा च बाधो दुर्वार इति भावः। ननु तद्वद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्वं ज्ञानत्वं न प्रमात्वं किन्तु तद्धर्म्यनुयोगिकसंसर्गनिरूपिततद्धर्मप्रतियोगिकत्वमेव तच्च प्रामाण्यं भानमवेत्यत आह—एवमिति। भ्रमे शुक्तौ इदं रजतमिति भ्रमे। विशेष्यानुयोगिकाऽली-कवैशिष्ट्यावगाहितास्वीकार इति। धर्मिवृत्ति असद्वैशिष्ट्यविषयकत्वाभ्युपगमे इत्यर्थः। प्रकारतासङ्ग्रहायेति भावः। तत्साधारण्यवारणायेति। भ्रमवृत्तित्ववारणायेत्यर्थः। संसर्गे। प्रकारत्वघटकवैशिष्ट्यसंसर्गे इति भावः। प्रामाण्यशरीर इति। तद्वति तत्प्रकार-कत्वशरीरे इत्यर्थः। प्रकारकत्वघटकप्रकारतैकदेशवैशिष्ट्यरूपसंसर्गे इति यावत्। अवश्यमेवेति। अन्यथा प्रामाण्यघटकप्रकारकत्वघटकप्रकारत्वस्य भ्रमीयप्रकारत्ववैल-क्षण्यानुपपत्त्या भ्रमप्रमयोरविशेषापत्तेः सत्त्वमधिकमिति। तद्धर्म्यनुयोगिको यत्सत्त्वव-त्संसर्गस्तत्प्रतियोगित्वावगाहित्वं प्रमात्वमिति भावः। तथा च प्रामाण्यशरीरे संसर्गांशे सत्त्वप्रवेशे च। तदनवगाहनादिति। तद्धर्म्यनुयोगिको यत्संसर्गस्तत्प्रतियोगित्वरूप-प्रामाण्यस्याविषयीकरणादित्यर्थः। पुरोवर्तिनि घटत्वप्रकारकमिति ग्रहविषयत्वस्य तादृशप्रामाण्येऽसत्त्वादिति यावत्। एतेन वक्ष्यमाणसिद्धसाधनदोषेण। विशेष्यनिष्ठ-मिति। घटादिरूपधर्मिनिष्ठमित्यर्थः। यादृशघटत्वादेर्वैशिष्ट्यं संसर्गः। तादृशघटत्वा-दिधर्मनिष्ठविषयकत्वरूपप्रामाण्यमेवेत्यर्थः। एवकारेण तद्वद्विशेष्यकत्वावच्छिन्नतत्प्रकार-

तत्प्रकारकप्रवृत्त्यौपयिकम्, तादृशस्यैव पक्षतेत्युक्तावपि न प्रतीकारः, एवं यदि धर्मिणि तद्वैशिष्ट्यावगाहित्वं प्रमात्वं तच्च विशेष्यांशे तत्प्रकारकत्वशरीरान्तर्भूतं तदा पर्यवसितं, प्रामाण्यस्य स्वतोग्राह्यत्वविवादेन तादृशस्य तद्वति तत्प्रकारकत्वस्य ग्राहकसामग्र्या न्यायमतेऽपि नियमतः प्रामाण्यग्रहात् ।

तथापि इदन्त्वादिना भासमानविशेष्यांशे घटत्वादिप्रकारकत्वं तत्प्रमात्वं न्यायमतेऽपि अनुव्यवसायेनावश्यं गृह्यते। तज्ज्ञानं चेदुक्तयुक्त्या प्रामाण्यभाननियतं तदा नैयायिकानां प्रामाण्यग्रहस्य स्वतस्त्वखण्डनाय विचारारम्भणं महासाहसिकतेति मन्वानो

---

कत्वरूपप्रामाण्यस्य व्यवच्छेदः। तत्प्रकारकप्रवृत्त्यौपयिकम्। घटत्वादिप्रकारकप्रवृत्तिजनकम्। तादृशस्यैवेति। तद्धर्म्यनुयोगिकसंसर्गनिरूपिततद्धर्मनिष्ठप्रतियोगित्वावगाहित्वरूपप्रामाण्यस्यैवेत्यर्थः। एवकारेण तद्वद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्वव्यवच्छेदः। पक्षतेति। प्रकृतानुमित्युद्देश्यतेत्यर्थः। तथा च तादृशप्रामाण्यग्रहस्यैव प्रवृत्तिजनकत्वेन तादृशप्रमात्वं पक्षीकृत्य स्वतोग्राह्यत्वं साध्यम्। तादृशप्रमात्वस्य पुरोवर्त्तिनि घटत्वप्रकारकमिति शाब्दात्मकग्रहविषयत्वसत्त्वाद् बाधवारणेऽपि आह—न प्रतीकार इति। न दोषोद्धार इत्यर्थः। दोषमाह—एवमिति। न च तद्धर्म्यनुयोगिकसत्संसर्गप्रतियोगित्वावगाहित्वात्मकप्रमात्वे पुरोवर्त्तिनि घटत्वप्रकारकमिदमिति शाब्दात्मकग्रहविषयत्वस्याऽसत्त्वाद् बाध एवेति वाच्यम्। सत्त्वस्योपलक्षणत्वादाह—एवमितीति केचित्। धर्मिणि तद्वैशिष्ट्यावगाहित्वमिति। धर्म्यनुयोगिकसंसर्गप्रतियोगित्वावगाहित्वमित्यर्थः। तत्प्रमात्वं प्रवृत्तिप्रयोजकप्रमात्वम्, तच्च धर्म्यनुयोगिकसंसर्गप्रतियोगित्वावगाहित्वरूपप्रमात्वं च। विशेष्यांशे तत्प्रकारकत्वशरीरान्तर्भूतमिति। तद्वति तत्प्रकारकत्वरूपप्रमात्वान्तर्गतमित्यर्थः। तत्र भासमानवैशिष्ट्यप्रतियोगित्वस्य प्रकारतारूपतया घटांशे घटत्वप्रकारकत्वशरीरान्तर्गतमिति भावः। तदा पर्यवसितमिति। प्रकारतायास्तादृशप्रतियोगितारूपत्वे तद्वति तत्प्रकारकत्वं पर्यवसितमितमित्यर्थः। स्वतोग्राह्यत्वे स्वाश्रयज्ञानग्राहकसामग्राह्यत्वे, विवादेन मीमांसकैरित्यादिः, तादृशस्य धर्मिणि तद्वैशिष्ट्यावगाहित्वघटितस्य, तद्वति तत्प्रकारकत्वस्य प्रामाण्यस्य। ग्राहकसामग्र्येति। तादृशप्रमात्वाश्रयग्रहविषयको ग्रहः इदं ज्ञानं प्रमेति ग्रहस्तज्जनकसामग्र्या इत्यर्थः। न्यायमतेऽपि परतः प्रामाण्याभ्युपगन्तृमतेऽपि। प्रामाण्यग्रहादिति। तादृशसामग्रीजन्यग्रहविषयत्वस्य नैयायिकैरपि स्वीकारादित्यर्थः। तथा च धर्म्यनुयोगिकसंसर्गप्रतियोगित्वावगाहित्वं प्रामाण्यं स्वतोग्राह्यं तदा तदा तादृशप्रमात्वस्य तद्वति तत्प्रकारकत्वान्तर्गततया न्यायमतेऽपि पुरोवर्त्तिनि घटत्वप्रकारकमिदमिति शाब्दात्मकग्रहविषयत्वस्य प्रमात्वे सत्त्वात्सिद्धसाधनम्, स्वाश्रयग्राहकसामग्रीजन्ययावद्ग्रहविषयत्वस्य प्रमात्वे उभयमतसिद्धत्वादिति भावः। समाधत्ते—तथापीति। अनुव्यवसायेन घटत्वप्रकारकज्ञानवानहमित्याकारकेण। तज्ज्ञानं चेदिति। पुरोवर्त्तिनि घटत्वप्रकारकमिदं ज्ञानमिति ज्ञानं यदीत्यर्थः। उक्तयुक्त्येति। धर्मिनिष्ठधर्मवैशिष्ट्यप्रतियोगितारूपप्रकारताघटितघटत्वप्रकारकत्वभाने धर्मिनिष्ठधर्मवैशिष्ट्यभानावश्यकत्वेन प्रामाण्यभाने न किञ्चिदवशिष्यते इत्युक्तयुक्तेत्यर्थः।

तन्न। तत्र भासमानवैशिष्ट्येत्यत्र तत्रेत्यस्य भासमानेनैवान्वयात्, न तु वैशिष्ट्येनापि।

अन्यथा तदभाववति तत्प्रकारकत्वमप्रामाण्यं न ज्ञायेत, तदभावग्रहे तद्वैशिष्ट्यस्य दुर्ग्रहत्वात्। एवमेकत्र विरुद्धोभयप्रकारकत्वरूपं संशयत्वमपि।

---

विशेष्ये तत्प्रकारकत्वस्य शरीरे प्रामाण्यान्तर्भावनिर्वाहकं तत्रेत्यस्य संसर्गान्वयित्वम सहमानस्तदेव दूषयति—तन्नेत्यादिना। भानेनैव। भानं—विषयता। तथा च तद्धर्मनिरूपिता या वैशिष्ट्यस्य संसर्गता इत्येवंरीत्या एव निवेशात् वैशिष्ट्यांशे तन्निष्ठत्वं न तदंशे तत्प्रकारकत्वघटकमिति तज्ज्ञानेऽपि प्रामाण्यघटकस्य वैशिष्ट्ये धर्मिनिष्ठत्वस्याभानान्नोक्तज्ञानानां प्रामाण्यविषयकत्वमिति भावः।

---

प्रामाण्यभाननियतमिति। प्रामाण्यविषयकत्वेन व्याप्तमित्यर्थः। तदा प्रामाण्यस्य नियमतः स्वाश्रयग्राहकसामग्रीजन्यग्रहविषयत्वे, नैयायिकानां प्रामाण्यस्य स्वाश्रयग्राहकसामग्रीजन्यग्रहविषयत्वाभावमभ्युपगच्छतां, स्वतस्त्वखण्डनाय प्रामाण्याश्रयज्ञानोत्पादकसामग्रीप्रयोज्यत्वनिरासाय, विचारारम्भणं न्यायप्रयोगरूपविचारोपक्रम इत्यर्थः। महासाहसिकतेति। अनुचितमित्यर्थः। इति मन्वानः इति मनसि निधाय, विशेष्ये पुरोवर्त्तिनि, तत्प्रकारकत्वस्य शरीरे इति। घटत्वप्रकारकत्वे, प्रामाण्यान्तर्भावनिर्वाहकं धर्मिनिष्ठधर्मवत्त्वरूपवैशिष्ट्यघटितप्रामाण्यस्य घटकतया समावेशप्रयोजकं, तत्रेत्यस्य तत्र भासमानवैशिष्ट्यप्रतियोगित्वमिति लक्षणघटक—तत्रेति पदस्य, संसर्गान्वयित्वं वैशिष्ट्यान्वयित्वं, असहमानः अस्वीकुर्वाणः, तदेव तत्रेतिपदस्य संसर्गान्वयित्वमेव दूषयति वैशिष्ट्ये तत्रेत्यस्यान्वयदोषमुद्भाव्यान्वयं निरस्यति।

दीधितौ एवकारव्यवच्छेद्यमाह—न तु वैशिष्ट्येनापीति। तथा च वैशिष्ट्ये धर्मिणीत्यर्थकतत्रेत्यस्यानन्वयात्, धर्मिणि तद्वैशिष्ट्यावगाहित्वरूपप्रमात्वस्यालाभेन तदात्मक तद्वति तत्प्रकारकत्वस्याप्यलाभाप्रसिद्धसाधनमिति भावः। इत्येवंरीत्यैव निवेशादिति। तद्धर्मिविषयतानिरूपिता या वैशिष्ट्यसंसर्गतातदाश्रयप्रतियोगित्वादिरीत्यैवेतत्प्रकारतापदार्थनिर्वचनादित्यर्थः। एवकारेण वैशिष्ट्यांशे विशेष्यनिष्ठत्वव्यवच्छेदः। निवेशलभ्यार्थमाह—वैशिष्ट्यांशे तन्निष्ठत्वमिति। न तदंशे तत्प्रकारकत्वमिति। न पुरोवर्त्तिनि घटत्वप्रकारकत्वं निविष्टम्। इति अतः, तज्ज्ञानेऽपि पुरोवर्त्तिनि घटत्वप्रकारकत्वज्ञानेऽपि, प्रामाण्यघटकस्य धर्मिनिष्ठधर्मवत्त्वघटितप्रामाण्यघटकस्य, नोक्तज्ञानानां न पुरोवर्त्तिनि घटत्वप्रकारकमिदं ज्ञानमित्यादिज्ञानानाम्। प्रामाण्यविषयकत्वमिति। तद्वति तत्प्रकारकत्वरूपप्रामाण्यावगाहित्वमित्यर्थः। धर्मिनिष्ठत्वघटितस्य वैशिष्ट्यस्यावगाहित्वस्य न प्रमात्वरूपता किन्तु संसर्गतानिष्ठतद्धर्मिनिरूपितत्वस्यैवेति नोक्तज्ञानानामुक्तप्रामाण्यावगाहित्वमिति निष्कर्षः। दीधितौ—अन्यथा पुरोवर्त्तिनिष्ठतया वैशिष्ट्यभाने, न ज्ञायेत अनाहार्यनिश्चयो न स्यादित्यर्थः। तदभावग्रहे रजतत्वाभाववद्वृत्तिरजतत्वसंसर्गस्य। दुर्ग्रहत्वादिति। रजतत्वाभाववद्वृत्तिरजतत्वसम्बन्धः

अन्यथा तत्र तत्प्रकारकत्वग्रहे तत्र तद्वैशिष्ट्यावश्यं भाने। न ज्ञायेत—अनाहार्य-निश्चयेन न कदापि विषयीक्रियेत। तदभावेति। तदभाववत्तया गृह्यमाणे तद्वैशिष्ट्य-स्यानाहार्यज्ञानागोचरत्वादित्यर्थः। निर्वह्निर्वह्निमानित्यादिवद्वह्न्यभाववति वह्निसम्बन्ध इत्यादिज्ञानानाम् आहार्यत्वनियमादित्यर्थ इति भावः।

संशयत्वमपि न ज्ञायेत—न निश्चयेनाऽवगाह्येतेत्यर्थः। एकधर्मिणि विरुद्धोभय-प्रकारकत्वस्य भवन्मते एकधर्मिणि विरुद्धोभयधर्मवैशिष्ट्यघटितत्वान्निश्चयेन च विरुद्धो-भयवैशिष्ट्यस्य एकधर्मिनिष्ठतयाऽनवगाहनात्, एकधर्मिणि तद्वैशिष्ट्यग्रहे तद्विरुद्ध-वैशिष्ट्यावगाहिनिश्चयस्य विरोधित्वादिति भावः। एवं धर्मिनिरूपितत्वस्य वैशिष्ट्य-

---

"तादृशसम्बन्धप्रतियोगितारूपप्रकारतायाः" अनाहार्यज्ञानात्मकनिश्चयासम्भवादि-त्यर्थः। तद्धर्मिनिष्ठविषयतानिरूपितसंसर्गताप्रतियोगित्वस्य प्रकारत्वे तादृशप्रतियोगि-त्वावगाहित्वस्य प्रमात्वे इदं ज्ञानं रजतत्वाभाववति रजतत्वप्रकारकमित्यप्रमात्वज्ञानस्या-नाहार्यत्वमिति भावः। टीकायां—तत्र तत्प्रकारकत्वग्रहे विशेष्ये घटत्वप्रकारकग्रहे, पुरोवर्त्तिनि घटत्वप्रकारकमिदं ज्ञानमित्याकारके, तत्र तद्वैशिष्ट्यावश्यं भाने पुरोवर्त्ति-निष्ठतया वैशिष्ट्यस्य भाने, अनाहार्यनिश्चयेन स्वविरोधिधर्मधर्मितावच्छेदककत्व-प्रकारकज्ञानमाहार्यम्, तद्भिन्नेनेत्यर्थः। न कदापि विषयीक्रियेतेति। न कदापि अव-गाह्येतेत्यर्थः। धर्मिनिष्ठतया वैशिष्ट्यस्य तदभाववति तत्प्रकारकमिदं ज्ञानमिति ज्ञाने भानासम्भवात्। तदभाववत्तयेति। रजतत्वाभाववत्तयेत्यर्थः। गृह्यमाणे विशेष्ये ज्ञायमाने सति, तद्वैशिष्ट्यस्य रजतत्ववैशिष्ट्यस्य। अनाहार्यज्ञानागोचरत्वादिति। अनाहार्य-ज्ञानाविषयत्वादित्यर्थः। आहार्यत्वनियमादिति। स्वाभाववत्तया गृह्यमाणनिष्ठस्व-सम्बन्धावगाहिज्ञानस्याहार्यत्वादिति भावः। धर्मिनिष्ठवैशिष्ट्यसंसर्गप्रतियोगित्वस्य प्रकारतास्वीकर्तृमते इदं ज्ञानं रजत्वाभाववति रजतत्वप्रकारकमिति ज्ञाने तत्प्रकार-कत्वघटकतया धर्मिनिष्ठवैशिष्ट्यभानादाहार्यापत्तिः स्यादिति यावत्। न निश्चयेनाऽव-गाह्येतेति। न अनाहार्यनिश्चयेन विषयीक्रियेते इत्यर्थः। निश्चयपदेन शब्दे नित्यत्वा-नित्यत्वोभयप्रकारकज्ञानमिदं संशय इति निश्चयो ग्राह्यः। वस्तुत एतादृशो यथार्थ-निश्चय एव न स्यात्, विषयस्याऽसिद्धत्वादिति भावः। विषयासिद्धिं दर्शयति—एक-धर्मिणीत्यादिना। एकधर्मिणि शब्दादौ। विरुद्धोभयप्रकारकत्वस्येति। नित्यत्वानित्य-त्वोभयप्रकारकत्वस्येत्यर्थः। भवन्मते तत्तत्प्रकारकत्वभाने तद्घटकप्रकारकत्वघटकतया वैशिष्ट्यांशे धर्मिनिष्ठत्वभानावश्यं भाववादिनमते। एकधर्मिणि विरुद्धोभयधर्मवैशिष्ट्य-घटितत्वादिति। शब्दे नित्यत्वनित्यत्वाभावोभयवैशिष्ट्यनिवेशादित्यर्थः। निश्चयेन चेति। तद्वति तत्प्रकारकनिश्चयेन संशयान्यज्ञानेनेति यावत्। विरुद्धोभयवैशिष्ट्यस्य भावाभावद्वयसम्बन्धस्य। एकधर्मिनिष्ठतयाऽनवगाहनादिति। एकधर्मावच्छिन्नविशेष्य-वृत्तितयाऽविषयीकरणादित्यर्थः। एकधर्मिणीति। एकधर्मावच्छिन्नविशेष्ये। तद्वैशिष्ट्य-ग्रहे तादृशधर्मसम्बन्धग्रहं प्रतीत्यर्थः। तद्विरुद्धसम्बन्धावगाहिनिश्चयस्य तादृशधर्म-विरोधिधर्मसम्बन्धनिश्चयस्य विरोधित्वात् प्रतिबन्धकत्वात्। वाद्युक्तपक्षे दोषमुद्भाव्य

वस्तुतस्तत्प्रकारकत्वादिकं स्वरूपसम्बन्धविशेष इति वक्ष्यामः। अत्र कस्याञ्चित्सामग्र्यां विषयग्रहनियमः कस्याञ्चिन्नेति सर्वजनसिद्धम्।

---

विषयतायामनिवेशे घटो द्रव्यं रूपवान् घट इत्यादिज्ञाने तद्विषयघटत्वाद्यंशे द्रव्यत्वादेः प्रकारत्वं दुर्वारमित्यपि बोध्यम्।

सम्बन्धविधया प्रतियोगित्वानुयोगित्वयोर्विशिष्टबुद्धौ विलक्षणभानकल्पनमपेक्ष्य प्रकारत्वस्य विलक्षणस्वरूपताभ्युपगम एवोचित इत्याशयेनाह—वस्तुत इति। तत्प्रकारकत्वादिकमित्यादिना विशेष्यत्वपरिग्रहः। स्वरूपेति। प्रकारविशेष्ययोर्ज्ञानस्य स्वरूपानतिरिक्तः सम्बन्धविशेष इत्यर्थः।

उक्तपूर्वपक्षे मिश्रोक्तं समाधानं दूषयितुमुपन्यस्यति—अत्रेति। कस्याञ्चित्सामग्र्याम्—अनुव्यवसायादिसामग्र्याम्। विषयग्रहनियमः—ज्ञानग्रहे तद्विशेषणतया विषय-

---

स्वोक्तविवक्षानादरे दोषमुद्भावयति—एवमिति। तद्धर्मिनिरूपितत्वस्य वैशिष्ट्यविषयतायामनिवेशे। निरूप्यनिरूपकभावापन्नवैशिष्ट्यविषयताया अविवक्षणे। घटो द्रव्यं—रूपवान् घट इति ज्ञाने। घटत्वावच्छिन्नविशेष्यकद्रव्यत्वप्रकारकज्ञाने। एवं घटत्वावच्छिन्नविशेष्यकरूपप्रकारकज्ञाने। तद्विषयघटत्वांशे घटो द्रव्यमित्यादिज्ञानविषयीभूतघटत्वाद्यंशे, द्रव्यत्वादेः घटप्रकारीद्रव्यत्वादेः, आदिना रूपपरिग्रहः। प्रकारत्वं दुर्वारमिति। घटो द्रव्यमिति ज्ञाने घटत्वे द्रव्यत्वादेः प्रकारतापत्तिरित्यर्थः। घटत्ववृत्तिसामानाधिकरण्यात्मकद्रव्यत्ववैशिष्ट्यप्रतियोगित्वस्य द्रव्यत्वे सत्त्वात् एवं घटत्ववृत्ति सामानाधिकरण्यात्मक-रूपवैशिष्ट्यप्रतियोगित्वस्य रूपे सत्त्वात्। उक्तविवक्षायां तु सामानाधिकरण्यात्मकवैशिष्ट्यविषयताया घटनिरूपितत्वाभावान्न दोषः।

सम्बन्धविधया आकाङ्क्षया, दीधितौ—तत्प्रकारकत्वादिकमिति। आदिना विशेष्यत्वपरिग्रहः। प्रकारत्वस्य प्रकारतापदार्थस्य, विलक्षणस्वरूपता स्वरूपसम्बन्धरूपता, प्रकारताघटकपदार्थानां वैलक्षण्यकल्पनमपेक्ष्य तस्या एव वैलक्ष्यकल्पनस्य युक्तत्वादिति भावः।

उक्तपूर्वपक्षे इति। ननु इदं घटत्वप्रकारकं सविशेष्यकमिति शब्दजन्यज्ञानस्यापि स्वाश्रयग्राहकसामग्रीजन्ययावद्ग्रहस्यान्तर्गततया तद्विषयत्वस्य पक्षीभूतप्रामाण्येऽसत्त्वाद् बाध इति उक्तपूर्वपक्षे इत्यर्थः। मिश्रोक्तं आलोककृत्पक्षधरमिश्रोक्तम्, समाधानम् उत्तरं, दूषयितुमुपन्यस्यति—तत्र दोषदर्शनाय तन्मतमुपन्यस्यतीत्यर्थः। अनुव्यवसायादिसामग्र्यामिति। ज्ञानविषयकज्ञानजनकसामग्र्यामित्यर्थः। तथा च मिश्रमतेऽनुव्यवसायस्य ज्ञानविषयकस्याऽत्ममनःसन्निकर्षादिरूपसामग्री भट्टमते ज्ञानविषयकानुमित्यात्मकज्ञानस्य जनिका परामर्शरूपसामग्री गुरुमते स्वस्यैव स्वविषयकज्ञानस्य सामग्री बोध्या। ज्ञानग्रहे ज्ञानविषयकग्रहे, तद्विशेषणतया प्रथमज्ञानविशेषणीभूतस्य, विषयस्यावश्यं ग्रहः प्रथमज्ञानविषयस्य ज्ञानग्रहे अवश्यं भानमित्यर्थः। तथा च घटादिज्ञाननिष्ठलौकिकविषयताशालिज्ञानं घटत्वादिविशिष्टविषयकं घटत्वादिप्रकारकघटादिविशेष्यकनिर्णयजन्यत्वाद् घटवद् भूतलमिति प्रत्यक्षवत्। इत्यनुमानादनुव्यवसायस्य व्यवसायविषय-

तथा च या सामग्री विषयमविषयीकुर्वंती ज्ञानमपि न गृह्णाति।

---

स्यावश्यं ग्रहः। कस्याञ्चित् शाब्दबोधादिसामग्र्याम्। न विषयग्रहनियम इत्यनुषज्यते। ज्ञानपदादितो विषयीभूतघटाद्यविशेषितस्यापि तज्ज्ञानस्य शाब्दादिज्ञानोत्पत्तेरिति भावः।

या सामग्रीति। स्वाश्रयविषयकग्रहोत्पत्तिप्रयोजकयत्सामग्रीघटकनिखिलकारणम्। विषयमिति। विषयितासम्बन्धेन किञ्चिदनवच्छिन्नज्ञानविषयताशालिग्रहाजनकमित्यर्थः।

---

विषयकत्वसिद्धिरिति भावः। न चाऽप्रयोजकत्वम्। अस्य विशिष्टवैशिष्ट्यावगाहिप्रत्यक्षत्वेन विशेषणतावच्छेदकप्रकारकनिश्चयत्वेन कार्यकारणभावरूपानुकूलतर्कसत्त्वात्। अनुव्यवसायो यदि घटत्वादिविषयको न स्यात्तदा घटत्वादिप्रकारकघटादिविशेष्यकनिर्णयजन्यो न स्यादित्यनुकूलतर्को बोध्यः। शाब्दबोधसामग्र्या विषयाविषयकज्ञानजनकत्वं दर्शयति—ज्ञानपदादित इति। ज्ञानपदेन ज्ञानविषयकानुमित्या चेत्यर्थः। विषयीभूतघटाद्यविशेषितस्यापि घटादिरूपविषयानवच्छिन्नस्येत्यर्थः। तत् ज्ञानस्य घटादिज्ञानस्य, शाब्दादिज्ञानोत्पत्तेरिति। ज्ञानवानिति शाब्दानुमित्योरुत्पादादित्यर्थः।

दीधितौ—तथा च शाब्दसामग्र्याः विषयाविषयकज्ञानजनकत्वे च, विषयमविषयीकुर्वंती विषयाग्राहिका, ज्ञानमपि न गृह्णाति ज्ञानग्राहिकापि न भवति इत्यर्थः। एवं च स्वाश्रयज्ञानविषयकग्रहजनकसामग्रीजन्यग्रहविषयत्वस्य न व्यभिचारः, घटत्वप्रकारकं ज्ञानं सविशेष्यकमित्यादिशाब्दसामग्र्याः विषयमविषयीकुर्वंत्याः ज्ञानग्रहजनकतया साध्यघटकत्वाऽसम्भवात्। न च या सामग्री विषयं विषयीकुर्वंती ज्ञानमपि गृह्णातीति कथं नोक्तमिति वाच्यम्। घटत्वप्रकारकं ज्ञानं सविशेष्यकमिति शाब्दसामग्र्यास्तथात्वाद्बाधापत्तेः। स्वाश्रयविषयकग्रहोत्पत्तिप्रयोजकयत्सामग्रीघटकनिखिलकारणमिति। स्वं प्रमात्वं, तदाश्रयीभूतो व्यवसायस्तद्विषयकमनुव्यवसायाद्यात्मकं द्वितीय ज्ञानं तदुत्पत्तिप्रयोजिका मनःसंयोगादिरूपसामग्री तद्घटकं तदन्तर्गतं यन्निखिलकारणमित्यर्थः। विषयितासम्बन्धेन किञ्चिदनवच्छिन्नज्ञानविषयताशालिग्रहाजनकमिति। विषयितासम्बन्धावच्छिन्नविषयानवच्छिन्नज्ञानविषयताशालिग्रहाजनकमित्यर्थः।

तथा च विषयितासम्बन्धावच्छिन्नविषयनिष्ठावच्छेदकत्वानिरूपकज्ञाननिष्ठविषयताशालिग्रहाजनकस्वाश्रयग्रहोत्प्रतिप्रयोजकयादृशसामग्रीघटकनिखिलकारणं तादृशसामग्रीजन्ययावद्ग्रहविषयत्वं फलितम्। अनुव्यवसायसामग्रीघटकसकलकारणं विषयं विषयीकुर्वदेव ग्रहजनकमिति तद्घटितसामग्रीमादाय समन्वयः। घटत्वप्रकारकं ज्ञानं सविशेष्यकमित्यादि शाब्दसामग्र्याः निखिलकारणमध्ये ज्ञानपदजन्यज्ञानोपस्थितिरूपमप्येकं कारणम्, तच्च विषयमविषयीकुर्वदपि ज्ञानग्रहजनकमिति तद्घटितसामग्री न साध्यघटिकेति न तामादाय बाधः। ज्ञाननिष्ठविषयताया ज्ञानत्वावच्छिन्नत्वेन किञ्चिदनवच्छिन्नज्ञाननिष्ठविषयताशालिग्रहाप्रसिद्ध्या साध्याप्रसिद्धिरतो विषयितासम्बन्धेनेत्युक्तम्।

एतेन यथाश्रुते ग्राह्यज्ञानस्यापि क्वचिज्ज्ञाने विषयतया सामान्यतो विषयाविषयकज्ञानग्रहाप्रसिद्धिः, ग्राह्यज्ञानविषयाविषयकज्ञानग्रहविवक्षणेऽपि ज्ञानस्य स्वविषयतानियमेन गुरुमते तदप्रसिद्धिरेव, तज्ज्ञानग्रहे तज्ज्ञानविषयस्य तस्यावश्यम्भावात्, तत्प्रामाण्यघटकविषयाविषयकत्वविवक्षणेऽपि मेयत्वसर्वत्वादिप्रकारकज्ञानीयप्रामाण्यघटकतायाः केवलान्वयित्वेन तत्पक्षके दुर्वारैवाऽप्रसिद्धिरित्यादिकं परास्तम् ।

---

या सामग्रीविषयमविषयीकुर्वती ज्ञानमपि न गृह्णातीति दीधितिवाक्यलब्धस्य विषयाविषयकज्ञानग्रहाजनकत्वरूपार्थस्य परित्यागे हेतुमाह—एतेनेति । विषयितासम्बन्धेन किञ्चिदनवच्छिन्नज्ञाननिष्ठविषयताशालिग्रहाजनकत्वस्य सामग्र्यां विशेषणेनेत्यर्थः । यथाश्रुते विषयाविषयकज्ञानग्रहाजनकत्वार्थकत्वे, ग्राह्यज्ञानस्यापि—ग्राह्यं ज्ञानविषयीभूतं, यज्ज्ञानं व्यवसायस्तस्यापीत्यर्थः । क्वचिज्ज्ञाने विषयतयेति । वस्तुमात्रस्यैव ज्ञानविषयत्वनियमात् । विषयाविषयकग्रहाप्रसिद्धिरिति । ज्ञानग्रहे विषयीभूतस्य ज्ञानस्यापि विषयत्वेन ज्ञानरूपविषयविषयकत्वादिति भावः । तथा च विषयाविषयकज्ञानग्रहाजनकं स्वाश्रयविषयकग्रहोत्पत्तिप्रयोजकसामग्रीघटकनिखिलकारणं तादृशसामग्रीजन्यग्रहविषयत्वरूपसाध्याप्रसिद्धिरिति भावः । ग्राह्यज्ञानविषयाविषयकज्ञानग्रहविवक्षणेऽपीति । ग्राह्यज्ञानस्य विषयो घटादिः तदविषयको यो ज्ञानग्रहः तद्विवक्षणेऽपीत्यर्थः । तथा च न साध्याप्रसिद्धिः, शुद्धज्ञानविषयकशाब्दबोधस्यैव प्रसिद्धेः ग्राह्यं यद्घटज्ञानं तद्विषयीभूतघटाद्यविषयकत्वात् ग्रहस्येति भावः । तथा च ग्राह्यज्ञानविषयाविषयकज्ञानग्रहाजनकं यत्स्वाश्रयज्ञानग्रहोत्पत्तिप्रयोजकसामग्रीघटकं निखिलकारणं तादृशसामग्रीजन्यग्रहविषयत्वं फलितम् । ग्राह्यज्ञानविषयाविषयकज्ञानग्रहविवक्षणेऽपि साध्याप्रसिद्धिमाह—ज्ञानस्येति । ज्ञानसामान्यस्येत्यर्थः । स्वविषयतानियमेन स्वविषयकत्वनियमेन । तदप्रसिद्धिरेवेति । ग्राह्यज्ञानविषयाविषयकज्ञानग्रहस्याप्रसिद्धिरेवेत्यर्थः । तज्ज्ञानग्रहे तज्ज्ञानविषयकग्रहे, जाते, तज्ज्ञानविषयस्य प्रथमज्ञानविषयीभूतस्य, तस्य विषयस्य । अवश्यं भानादिति । विषयत्वादित्यर्थः । तथा च गुरुमते ग्राह्यज्ञानविषयो ग्राह्यज्ञानमेव तद्विषयविषयकत्वज्ञानग्रहस्य न तु तदविषयकत्वमिति ग्राह्यज्ञानविषयाविषयकज्ञानग्रहाप्रसिद्ध्या साध्याप्रसिद्धिर्दुर्वारैवेति भावः ।

तत्प्रामाण्यघटकविषयाविषयकत्वविवक्षणेऽपीति । तत्प्रामाण्यघटकविषयाविषयकज्ञानग्रहाजनकत्वस्य सामग्र्यां विवक्षणेऽपीत्यर्थः । तथा च न साध्याप्रसिद्धिः, तथाहि—घटत्ववति घटत्वप्रकारकज्ञानत्वघटकीभूतघटघटत्वविषयाविषयकशुद्धज्ञानग्रहरूपः शाब्दबोधः तदजनकमथ च स्वाश्रयज्ञानविषयकानुव्यवसायात्मकग्रहोत्पत्तिप्रयोजकं यत् सामग्रीघटकं निखिलकारणं तादृशसामग्रीजन्यग्रहविषयत्वस्य प्रमात्वे प्रसिद्धत्वात् । घटत्ववति घटत्वप्रकारकज्ञानत्वघटकीभूतघटघटत्वविषयकशुद्धज्ञानग्रहरूपशाब्दबोधः तज्जनकत्वस्यैव घटत्वप्रकारकं ज्ञानं सविशेष्यकमिति शाब्दसामग्र्यां सत्त्वेन तादृशशाब्दबोधाजनकत्वविरहेण वारणम् । अत्र तत्प्रामाण्यघटकपदार्थविषयाविषयकेत्यस्य तत्प्रामाण्यघटकयावद्विषयाविषयकत्वमर्थः । तत्र यावत्पदानिवेशे तादृशप्रामाण्यघटक-

घटज्ञानमित्यादिशाब्दबोधादिसामग्रीघटकज्ञानपदोपस्थित्यादेर्निरुक्तनिखिलकारणान्तर्गतस्य विषयानवच्छिन्नविषयकग्रहं प्रत्यपि जनकतया तादृशसामग्रीव्यावृत्तिः। घटपदोपस्थित्यादेर्ज्ञानभानाप्रयोजकस्य च ज्ञानांशे विषयान्वयबोधजनकयोग्यताज्ञानादेरुक्तसामग्रीघटककतिपयकारणस्य विषयानवच्छिन्नज्ञानाग्राहकत्वान्निखिलकारणोपादा-

ज्ञानत्वस्य शुद्धज्ञानविषयकग्रहात्मकशाब्दबोधे भानात्तत्प्रामाण्यघटकविषयाविषयकग्रहाप्रसिद्धिरतो यावत्पदनिवेशः। निवेशे च ज्ञानविषयकशाब्दबोधे ज्ञानत्वस्य भानेऽपि तत्प्रामाण्यघटकसकलपदार्थाभानान्नाप्रसिद्धिः। तत्प्रामाण्यघटकविषयाविषयकत्वविवक्षायामाह—मेयत्वसर्वत्वादिप्रकारकज्ञानीयप्रामाण्यघटकताया इति। मेयं सर्वमिति ज्ञानीय मेयत्ववति मेयत्वप्रकारकज्ञानत्वम् एवं सर्वत्ववति सर्वत्वप्रकारकज्ञानत्वं तद्घटकताया इत्यर्थः। केवलान्वयित्वेनेति। तादृशप्रामाण्यघटकमेयरूपविषयाविषयकग्रहाप्रसिद्धेः, सर्वस्यैव ग्रहस्य मेयविषयकत्वात्। यद्यद्रूपावच्छिन्नस्य यस्य यस्य प्रामाण्यघटकता तत्तद्रूपावच्छिन्नतत्तन्निष्ठविषयताश्रयाविषयकत्वविवक्षणेऽप्रसिद्धिवारणेऽपि घटत्ववति घटत्वप्रकारकज्ञानत्वरूपप्रामाण्यघटकता घटत्वे न किञ्चिद्धर्मावच्छिन्ना, घटत्वनिष्ठघटकताया निरवच्छिन्नत्वात्, एवं च घटत्वावच्छिन्नाविषयको यो ज्ञानग्रहः घटत्वप्रकारकज्ञानवानहमित्याकारकस्तत्सामग्रीजन्यग्रहविषयत्वस्य प्रमात्वेऽसत्त्वाद् बाधो दुर्वार इति ध्येयम्। तत्पक्षके प्रमेयत्ववति प्रमेयत्वप्रकारकज्ञानत्वपक्षके।

घटज्ञानमित्यादीति। घटत्वप्रकारकं ज्ञानं सविषयकमित्यादीत्यर्थः। शाब्दबोधादिसामग्रीघटकज्ञानपदोपस्थित्यादेरिति। तादृशशाब्दबोधनिरूपिता या घटपद-ज्ञानपदज्ञानतादृशपदार्थोपस्थितिरूपा सामग्री तादृशसामग्रीघटककेवलज्ञानपदतज्जन्योपस्थित्यादेः। निरुक्तनिखिलकारणान्तर्गतस्य स्वाश्रयग्रहोत्पत्तिप्रयोजकसामग्रीघटकनिखिलकारणान्तर्भूतस्य। विषयानवच्छिन्नविषयकग्रहं प्रत्यपीति। केवलज्ञानग्रहं प्रत्यपीत्यर्थः। अपिना तादृशशाब्दात्मकग्रहपरिग्रहः। जनकतयेति। विषयितासम्बन्धेन किञ्चिदनवच्छिन्नविषयिताशालिग्रहाजनकत्वाभावेनेति यावत्। तादृशसामग्रीव्यावृत्तिरिति। तथा च इदं घटत्वप्रकारकं सविषयकमित्यादिशाब्दसामग्रीजन्यग्रहविषयत्वस्य प्रमात्वेऽसत्त्वेऽपि न बाधः। तादृशसामग्र्याः साध्यघटकसामग्रीपदेनाऽग्रहणादिति भावः। पूर्वमुक्तमपि स्पष्टार्थमुक्तम्। कारणे निखिलत्वोपादानप्रयोजनमाह—घटपदोपस्थित्यादेरिति। घटज्ञानं सविषयकमिति शाब्दजनकघटपदजन्यघटोपस्थित्यादेरित्यर्थः। ज्ञानभानाप्रयोजकस्येति। घटभानप्रयोजकस्येति यावत्। विषयानवच्छिन्नज्ञानग्रहाजनकस्येति तत्त्वम्। ज्ञानांशे विषयान्वयबोधजनकयोग्यताज्ञानादेरिति। घटज्ञानमित्यत्र ज्ञानधर्मिणि घटरूपविषयान्वयबोधप्रयोजक आकाङ्क्षायोग्यतातात्पर्यज्ञानादेरित्यर्थः। उक्तसामग्रीघटककतिपयकारणस्य स्वाश्रयविषयकग्रहोत्पत्तिप्रयोजकयत्किञ्चित्कारणस्य। घटपदज्ञानघटपदार्थोपस्थित्यादेः। विषयानवच्छिन्नज्ञानाग्राहकत्वादिति। शुद्धज्ञानविषयकग्रहाजनकत्वादित्यर्थः। तथा च निखिलपदानुपादाने घटज्ञानमिति शाब्दसामग्र्या अपि साध्यान्तर्गतत्वाद् बाधो दुर्वार इति भावः। निखिलपदोपादाने तु घटज्ञान-

नम् । अनुव्यवसायादिसामग्रीघटकं च न किञ्चिदपि तादृशं कारणमस्ति, यद्विषयरूपविशेषणानवच्छिन्नं ज्ञानं गृह्णाति, व्यवसायमनःसंयुक्तसमवायादेर्विषयोपरागेणैव ज्ञानादिभासकत्वनियमात् ।

न चाऽऽत्ममनःसंयोगादिरपि तादृशसामग्रीघटकं कारणम्, तच्च विषयानवच्छिन्नज्ञानगोचरस्मृत्यादिजनकमिति कुतस्तादृशसामग्र्यसम्भव इति वाच्यम् । ज्ञानभानप्रयोजकनिखिलकारणस्य विवक्षणीयत्वात् । आत्मादेश्च कार्यतावच्छेदककोटौ ज्ञानविषयत्वाप्रवेशेन तस्याऽतथात्वात् ।

---

सविषयकमिति शाब्दसामग्रीघटकज्ञानपदजन्योपस्थित्यादेरपि निरुक्तनिखिलकारणान्तर्गतस्य केवलज्ञानग्रहं प्रत्यपि कारणतया विषयितासम्बन्धेन किञ्चिदनवच्छिन्नविषयिताशालिग्रहाजनकत्वाभाववत्त्वेन तादृशसामग्र्याः साध्यानन्तर्गतत्वेन न बाध इति भावः । अनुव्यवसायादीति । आदिना व्यवसायज्ञाततालिङ्गकानुमित्योः सङ्ग्रहः । तत्सामग्रीघटकं चेति । न किञ्चिदपि तादृशं कारणमस्ति न किञ्चिदपि तथाविधं कारणमस्ति । यत्कारणं विषयरूपविशेषणानवच्छिन्नं विषयानवच्छिन्नम् । ज्ञानं गृह्णातीति । ज्ञानग्रहजनकमित्यर्थः । विषयानवच्छिन्नज्ञानग्रहजनकत्वाभावे हेतुमाह—विषयोपरागेणैवेति । विषयविषयकत्वेनैव, एवकारेण विषयाविषयकत्वव्यवच्छेदः ।

अनुव्यवसायसामग्रीणामात्ममनःसंयोगादीनां विषयानवच्छिन्नज्ञानभानप्रयोजकत्वमाशङ्कते—न चेति । आत्ममनःसंयोगादिरपीति । आदिनाऽऽत्मनो मनसश्च सङ्ग्रहः । तादृशसामग्रीघटकमिति । स्वाश्रयविषयकग्रहोत्पत्तिप्रयोजकसामग्रीघटकमित्यर्थः । तच्च । आत्ममनःसंयोगादिरूपकारणं च । विषयानवच्छिन्नज्ञानगोचरस्मृत्यादिजनकम् । विषयितासम्बन्धेन विषयानवच्छिन्नं यत् ज्ञानं तद्विषयकस्मृतिजनकम् । इति अतः, आत्ममनःसंयोगादीनां विषयानवच्छिन्नज्ञानगोचरस्मृतिजनकत्वात् । कुतस्तादृशसामग्र्यसम्भव इति । विषयानवच्छिन्नज्ञानगोचरज्ञानाजनकसामग्र्यसम्भव इत्यर्थः । तथा च स्वाश्रयविषयकग्रहोत्पत्तिप्रयोजकयत्सामग्रीघटकनिखिलकारणान्तर्गतात्ममनःसंयोगस्यापि विषयितासम्बन्धेन विषयानवच्छिन्नज्ञानविषयकस्मृतिजनकत्वेन स्वाश्रयविषयकग्रहोत्पत्तिप्रयोजकसामग्रीघटकात्ममनःसंयोगस्य विषयितासम्बन्धेन विषयानवच्छिन्नज्ञानग्रहाजनकत्वाभावेन अनुव्यवसायसामग्र्या अपि साध्यानन्तर्गतत्वेन साध्याप्रसिद्धिरिति भावः । ज्ञानभानप्रयोजकनिखिलकारणस्य विवक्षणीयत्वादिति । स्वाश्रयविषयकग्रहोत्पत्तिप्रयोजकयादृशसामग्रीघटकज्ञानभानप्रयोजकनिखिलकारणं विषयितासम्बन्धेन विषयानवच्छिन्नज्ञानग्रहाजनकं तादृशसामग्रीजन्यग्रहविषयत्वस्य विवक्षणीयत्वादित्यर्थः । कारणे ज्ञानभानप्रयोजकत्वं च ज्ञानविषयकत्वावच्छिन्नप्रयोज्यतानिरूपितप्रयोजकतावत्त्वम्, तच्चात्ममनःसंयोगादीनां न सम्भवति, समवायेन ज्ञानं प्रति तादात्म्येन आत्मनः समवायेन आत्ममनःसंयोगस्य कारणत्वे कार्यतावच्छेदकं विषयकत्वं घटज्ञानादौ असत्त्वेन न्यूनवृत्तित्वात् किन्तु ज्ञानत्वमेव कार्यतावच्छेदकम्, एवं चात्ममनःसंयोगस्य ज्ञानभानप्रयोजकत्वाभावेन ज्ञानभानप्रयोजकनिखिलकारण-

न चात्मादीनामपि गुरुमते ज्ञानभानप्रयोजकत्वमव्याहतम्, तन्मते ज्ञानोत्पादकसामग्र्या एव तत्त्वात्। आत्मादीनामपि तत्सामग्र्यन्तर्गतत्वादिति वाच्यम्। तन्मते तज्ज्ञानप्रागभावमात्रस्य तज्ज्ञानभाने प्रयोजकत्वोपगमात्। आत्मादीनामतथात्वात्। आत्मादिजन्यज्ञानान्तरे तज्जन्यज्ञानान्तराभानेन विनिगमकसम्भवात्। तत्तज्ज्ञानप्रागभावस्य च विषयोपरागेणैव तत्तज्ज्ञानभासकत्वम्, मिश्रादिमतेऽनुव्यवसाय इव गुरुमते व्यवसाये विषयविशेषितस्यैव व्यवसायस्य भानात्।

---

पदेन तदसङ्ग्रहः। तदतिरिक्तज्ञानभानप्रयोजकनिखिलकारणानां विषयानवच्छिन्नज्ञानग्रहाजनकत्वादिति भावः। ननु आत्ममनःसंयोगादिनिष्ठप्रयोजकतानिरूपितप्रयोज्यतायाः ज्ञानविषयकज्ञाने सत्त्वेन कथं तद्वारणमत आह—आत्मादेश्चेति। आत्ममनःसंयोगादेरित्यर्थः। कार्यतावच्छेदककोटौ आत्मनिष्ठकारणतानिरूपितकार्यतावच्छेदककोटौ। ज्ञानविषयत्वाप्रवेशेनेति। ज्ञानविषयकत्वस्य न्यूनवृत्तित्वात्। तस्य ज्ञानविषयकत्वस्य, अतथात्वात् कार्यतानवच्छेदकत्वात्। आत्मकार्यतावच्छेदकं बुद्ध्यादि चतुर्दशवृत्ति चतुर्दशत्वमित्यवधेयम्।

गुरुमतेनाऽप्रसिद्धिमाह—न चेति। आत्मादीनामिति। आदिपदादात्ममनःसंयोगपरिग्रहः। गुरुमते इति। ज्ञानमात्रस्य स्वयम्प्रकाशतया स्वविषयकत्ववादि प्रभाकराणां मते इत्यर्थः। ज्ञानभानप्रयोजकत्वमिति। ज्ञानविषयकत्वावच्छिन्नप्रयोज्यतानिरूपितप्रयोजकत्वम्। अव्याहतम् अक्षतम्, तन्मते गुरुमते। ज्ञानोत्पादकसामग्र्या एवेति। ज्ञानजनकसामग्रीमात्रस्येत्यर्थः। तत्त्वात् ज्ञानविषयकत्वावच्छिन्नप्रयोज्यतानिरूपितप्रयोजकत्वात्। ज्ञानमात्रस्य ज्ञानविषयकत्वादिति भावः। ज्ञानभानप्रयोजकत्वादित्यपि बोध्यम्। तथा च गुरुमतसिद्धस्वाश्रयविषयकग्रहोत्पत्तिप्रयोजकसामग्रीघटकस्यात्मादेः विषयितासम्बन्धेन किञ्चिदनवच्छिन्नज्ञानविषयकस्मृतिजनकत्वेन विषयितासंसर्गेण किञ्चिदनवच्छिन्नज्ञानग्रहाजनकत्वाभावात् तादृशसामग्र्या अप्रसिद्ध्या साध्याप्रसिद्धिरिति भावः। समाधत्ते—तन्मते गुरुमते, तज्ज्ञानप्रागभावमात्रस्य घटज्ञानप्रागभावस्य, तज्ज्ञानभाने घटज्ञाननिष्ठविषयत्वे। प्रयोजकत्वोपगमादिति। प्रयोजकत्वस्वीकारादित्यर्थः। मात्रपदव्यावर्त्यमाह—आत्मादीनामतथात्वादिति। आत्ममनःसंयोगादीनां ज्ञानभानं प्रति अप्रयोजकत्वादित्यर्थः। ननु विनिगमताविरहादात्मादीनामेव ज्ञानभानप्रयोजकत्वमस्तु इत्याशङ्कायां तज्ज्ञानविषयताया आत्मादिनिष्ठकारणतानिरूपितकार्यताऽतिप्रसक्ततया ज्ञानविषयकत्वं नात्मादिकार्यतावच्छेदकमिति किन्तु तज्ज्ञानप्रागभावस्यैवेत्याह—आत्मादिजन्यज्ञानान्तरे आत्मादिजन्यपटज्ञाने, तज्जन्यज्ञानान्तराभानेन आत्मादिजन्यघटज्ञानविषयताया अभावेन, तथा चात्मादिनिष्ठकारणतानिरूपितकार्यतायाः पटज्ञानेऽपि सत्त्वेन तत्र घटज्ञानीयविषयताया असत्त्वात्कार्यत्वातिरिक्तवृत्तितया न कार्यतावच्छेदकत्वस्य तज्ज्ञानविषयतायां सम्भव इति भावः। ननु स्वाश्रयविषयकग्रहोत्पत्तिप्रयोजकनिखिलकारणान्तर्गततत्तज्ज्ञानप्रागभावस्य विषयविनिर्मुक्तज्ञानभासकत्वे स एव दोष इत्यत आह—तत्तज्ज्ञानप्रागभावस्येति। ज्ञानभानप्रयोजकीभूत-

अथ घटज्ञानमित्यादौ विषयोपरक्तज्ञानविषयकशाब्दबोधसामग्रीनिविष्टज्ञानपदाद्युपस्थितिव्यक्त्या विषयानुपरक्तज्ञानविषयकशाब्दबोधाजननात् तादृशसामग्रीव्यावृत्तिर्दुर्घटा ।

न च तथापि उपस्थितिव्यक्त्या शाब्दबोधहेतुभूतविषयानुपरक्तज्ञानविषयकस्मृतेरवश्यं जननात्तद्घटितसामग्रीव्यावृत्तिसम्भव इति वाच्यम् । यादृशज्ञानोपस्थित्या ज्ञानस्मृतौ जन्यमानायाम् उद्बोधकान्तरवशात् ज्ञानांशे पूर्वानुभूतविषयवैशिष्ट्यमपि भातम् । तदुपस्थितिव्यक्तिघटितसामग्र्या उक्तरीत्याप्यवारणादिति चेन्न । ज्ञानमपि न

---

घटादिज्ञानप्रागभावस्येत्यर्थः । विषयोपरागेणैवेति । विषयितासम्बन्धेन विषयविशिष्टतयैवेत्यर्थः । तज्ज्ञानभासकत्वं तज्ज्ञानभानप्रयोजकत्वम् दृष्टान्तमाह—मिश्रादिमते अनुव्यवसाय इवेति । घटविषयकज्ञानवानहमित्यनुव्यवसाये इवेत्यर्थः । विषयविशेषितस्यैव घटादिविषयावच्छिन्नस्यैव । व्यवसायस्य भानादिति । व्यवसायस्य विषयीकरणात् ।

पुनः बाधमाशङ्कते—अथेति । विषयोपरक्तेति । विषयविशिष्टेत्यर्थः । विषयानुपरक्तेति । विषयाविषयकेत्यर्थः । शाब्दबोधाजननादिति । घटादिरूपविषयाविषयककेवलज्ञानवाचकपदघटितज्ञानमित्यादिवाक्यजन्यशाब्दबोधप्रयोजकसामग्रीघटकज्ञानपदाद्युपस्थितिव्यक्तेर्विषयानुपरक्तज्ञानविषयकशाब्दबोधे हेतुत्वेऽपि घटज्ञानमिति वाक्यजन्यशाब्दबोधोत्पत्तिप्रयोजकसामग्रीघटककारणीभूतज्ञानपदाद्युपस्थितिव्यक्त्या घटानुपरक्तज्ञानविषयकशाब्दबोधाजननादित्यर्थः । अनेन विषयितासम्बन्धेन विषयानवच्छिन्नज्ञानग्रहाजनकत्वं सूचितम् । तादृशसामग्री विषयोपरक्तनानविषयकशाब्दसामग्री । तस्या व्यावृत्तिर्दुर्घटेत्यर्थः । तस्याः सङ्ग्रह एवेति भावः । तथा च घटज्ञानमिति वाक्यजन्यशाब्दबोधोत्पत्तिप्रयोजकयादृशसामग्रीघटककारणस्य विषयानवच्छिन्नज्ञानाग्राहकत्वात्तादृशसामग्रीजन्यग्रहविषयत्वस्य प्रमात्वेऽसत्त्वाद् बाध इति भावः ।

केवलज्ञानविषयकशाब्दबोधाजननेऽपि तत्कारणीभूतज्ञानविषयकोपस्थितिसम्भवेन ततो ज्ञानविषयकस्मृतेरवश्यं सम्भवेन । तादृशस्मृतिजनकोपस्थितिप्रयोजकसामग्रीघटककारणस्य विषयानवच्छिन्नज्ञानग्रहाजनकताविरहेण न तादृशसामग्रीसाध्यघटिकेति शङ्कते—न चेति । तया विषयोपरक्तज्ञानविषयकशाब्दसामग्रीनिविष्टज्ञानविषयकोपस्थितिव्यक्त्या । ज्ञानशाब्दबोधहेतुभूतविषयानुपरक्तज्ञानविषयकस्मृतेरवश्यं जननादिति । ज्ञानविषयकशाब्दकारणीभूता या विषयानवच्छिन्नज्ञानविषयकस्मृतिस्तस्या उत्पादनादित्यर्थः । तद्घटितसामग्रीव्यावृत्तिसम्भव इति । विषयानवच्छिन्नज्ञानविषयक'स्मृतिरूप'ग्रहाजनकत्वाभावेन तादृशशाब्दजनकज्ञानपदजन्यज्ञानोपस्थितिघटितसामग्र्या साध्यघटकत्वासम्भव इत्यर्थः । तथा च न बोधस्तदवस्थम् इति भावः । पुनरपि स्थलविशेषे बाधमुपस्थाप्य निराकरोति—यादृशज्ञानोपस्थित्या यादृशज्ञानपदज्ञानेन, ज्ञानस्मृतौ केवलज्ञानविषयकस्मृतौ सत्यां, उद्बोधकान्तदवशात् । घटादिविषयेन्द्रियसन्निकर्षवशात्, ज्ञानांशे स्मृतिविषयीभूतज्ञानांशे । पूर्वानुभूतविषयवैशिष्ट्यमपि भातमिति । पूर्वानुभूतघटादिवैशिष्ट्यमपि स्मृतिविषयीभूतमित्यर्थः । तदुपस्थिति-

गृह्णातीत्यत्र स्वरूपयोग्यतारूपज्ञानग्राहकताया एव विवक्षितत्वात्। उक्तसामग्रीघटकज्ञानपदाद्युपस्थितिव्यक्तेश्च विषयाविषयककालान्तरीणज्ञानशाब्दबुद्धावपि स्वरूपयोग्यतया तादृशसामग्रीवारणसम्भवात्।

यद्यद्रूपेण कारणानां प्रकृतसामग्रीघटकत्वं तत्तद्रूपस्य विषयानुपरक्तज्ञानग्रहस्वरूपयोग्यतानवच्छेदकत्वं विवक्षणीयम्।

तेन गुरुमते तत्तद्व्यवसायप्रागभावस्य प्रागभावत्वेन जन्यमात्रं प्रति स्वरूपयोग्यत्वेऽपि

---

व्यक्तिघटितसामग्र्या तादृशज्ञानजन्यज्ञानोपस्थितिघटितकारणसमुदायस्य, उक्तरीत्यापि ज्ञानपदजन्यज्ञानोपस्थितेः पूर्वानुभूतविषयानवच्छिन्नज्ञानविषयकस्मृतिरूपग्रहाजनकत्वरूपोक्तरीत्यापि, अवारणात्। सङ्ग्रहापत्तेः। तथा च घटज्ञानमिति शाब्दोत्पत्तिप्रयोजकसामग्रीघटककारणान्तर्गतस्य ज्ञानपदज्ञानजन्योपस्थित्यादेः विषयितासम्बन्धेन घटादिविषयानवच्छिन्नज्ञान'ग्रह'स्मृतिविषयत्वस्य प्रमात्वेऽसत्त्वेन वाधो दुर्वार इति भावः। निराकरोति—नेति। ज्ञानमपि न गृह्णातीत्यत्रेति। या सामग्री विषयमकुर्वती ज्ञानमपि न गृह्णातीति दीधितिः। विषयानुपरक्तज्ञानग्रहजनकत्वाभाववती सामग्रीति यथाश्रुतोऽर्थः। तत्र जनकतायां विशेषमाह—स्वरूपयोग्यतारूपेति। जनकतावच्छेदकधर्मवत्स्वरूपेत्यर्थः। ज्ञानग्राहकतायाः ज्ञानग्रहजनकतायाः। विवक्षितत्वादिति। तथा च स्वाश्रयविषयकग्रहोत्पत्तिप्रयोजकयत्सामग्रीघटकनिखिलकारणं विषयानवच्छिन्नज्ञानग्रहनिरूपितस्वरूपयोग्यतारूपज्ञानग्रहनिरूपितकारणतावच्छेदकधर्मवत्त्वरूपजनकताभाववत्, तत्सामग्रीजन्यग्रहविषयत्वम्, साध्यं पर्यवसितम्। एवं च घटज्ञानमिति शाब्दसामग्रीवारणमित्याह—उक्तसामग्रीघटकज्ञानपदाद्युपस्थितिव्यक्तेश्चेति। घटज्ञानमिति शाब्दसामग्रीघटकज्ञानपदज्ञानव्यक्तेरित्यर्थः। उद्बोधकान्तराधीनघटविषयकत्वविशिष्टज्ञानोपस्थितिजनकतादृशज्ञानपदोपस्थितिव्यक्तेरपीति यावत्। विषयाविषयककालान्तरीणज्ञानशाब्दबुद्धावपीति। घटादिविषयविनिर्मुक्तं कालान्तरीणं यज्ज्ञानशाब्दज्ञानं तत्रेत्यर्थः। स्वरूपयोग्यतयेति। ज्ञानत्वरूपजनकतावच्छेदकधर्मावच्छिन्नतयेत्यर्थः। तादृशसामग्रीवारणसम्भवादिति। विषयितासम्बन्धेन विषयानवच्छिन्नज्ञाननिष्ठविषयताशालिशाब्दात्मकज्ञानग्रहनिरूपितस्वरूपयोग्यत्वस्यैव स्वरूपयोग्यतारूपग्रहजनकत्वाभावविरहेण साध्याघटकत्वादिति भावः। तथा च न बाध इत्याशयः।

परिष्करोति—यद्यद्रूपेणेति। यादृशयादृशरूपावच्छिन्नेत्यर्थः। कारणानां व्यवसायआत्ममनःसंयोगादीनां, प्रकृतसामग्रीघटकत्वं स्वाश्रयग्रहोत्पत्तिप्रयोजकसामग्रीघटकत्वमित्यर्थः। विषयानुपरक्तज्ञानग्रहस्वरूपयोग्यतानवच्छेदकत्वं विषयानवच्छिन्नग्रहानिरूपितस्वरूपयोग्यतारूपकारणतानवच्छेदकम्। विवक्षणीयमिति। तथा च स्वाश्रयग्रहोत्पत्तिप्रयोजकयत्सामग्रीघटकतावच्छेदकतापर्याप्त्यधिकरणं यद्यद्रूपं विषयानुपरक्तज्ञानग्रहनिष्ठजन्यतानिरूपितस्वरूपयोग्यतावच्छेदकतापर्याप्त्यनधिकरणं तत्तद्रूपावच्छिन्नघटिततत्सामग्रीजन्यविषयत्वं तत्। यद्यदित्यादिनिवेशव्यावृत्तिमाह—तेनेति। स्वाश्रयग्रहोत्पत्तिप्रयोजकसामग्रीघटकतावच्छेदकरूपस्य विषयानवच्छिन्नज्ञानग्रहस्वरूप-

न तद्घटितव्यवसायसामग्र्या असङ्ग्रहः। व्यवसायात्मकज्ञानोत्पादप्रयोजकसमुदायमध्ये तत्तद्व्यवसायप्रागभावत्वेन तन्निवेशात्तद्रूपेण जन्यमात्रं प्रति स्वरूपयोग्यताविरहात्।

एवं च मिश्रमतेऽनुव्यवसायसामग्रीघटकव्यवसायस्य कालोपाधिविधया जन्यमात्रस्वरूपयोग्यत्वेऽपि न तत्सामग्र्यसङ्ग्रहः। तत्सामग्रीघटकतावच्छेदकेदं विशेष्यकघटत्वादिप्रकारकज्ञानत्वेनाऽतथात्वात्। न च विषयविनिर्मुक्तज्ञानाग्राहकत्वस्य विषयानवच्छिन्नज्ञानभानाप्रयोजकत्वरूपस्य निवेशे उक्तविवक्षामन्तरेणापि सामञ्जस्यम्।

---

योग्यतानवच्छेदकत्वविवक्षणेनेत्यर्थः। तत्तद्व्यवसायप्रागभावस्य तत्तद्विषयकव्यवसायप्रातियोगिकप्रागभावस्य, प्रागभावत्वेन सामान्यतः प्रागभावत्वेन, तद्घटितव्यवसायसामग्र्याः स्वाश्रयीभूततत्तद्व्यवसायघटितसामग्र्याः, न असङ्ग्रहः। सङ्ग्रहप्रकारमाह—व्यवसायात्मकज्ञानोत्पादप्रयोजकसमुदायमध्य इति। स्वाश्रयीभूतेत्यादिः। स्वाश्रयीभूतव्यवसायात्मकज्ञानजनककारणसमुदायमध्ये इत्यर्थः। तत्तद्व्यवसायप्रागभावत्वेन तन्निवेशादिति। तत्तद्व्यवसायप्रागभावस्य निवेशादित्यर्थः। तद्रूपेण तत्तद्व्यवसायप्रागभावत्वेन, जन्यमात्रं प्रतीतिः जन्यत्वेन रूपेण विषयानुपरक्तज्ञानग्रहं प्रतीत्यर्थः। स्वरूपयोग्यताविरहादिति। विषयानुपरक्तज्ञानग्रहनिरूपितजनकतावच्छेदकीभूतप्रागभावत्वरूपधर्मवत्त्वस्य तत्तद्व्यवसायप्रागभावत्वेन तत्तद्व्यवसायप्रागभावसत्त्वेऽपि स्वाश्रयग्रहोत्पत्तिप्रयोजकसामग्रीघटकतत्तत्कारणतावच्छेदकं यत्तत्तद्व्यवसायप्रतियोगिकप्रागभावत्वं तच्च विषयानुपरक्तज्ञानग्रहनिरूपितस्वरूपयोग्यतावच्छेदकतापर्याप्त्यनधिकरणमेवेति तत्तद्रूपावच्छिन्नघटिततत्तद्व्यवसायोत्पादकसामग्रीमादाय साध्यप्रसिद्धिरिति भावः।

एवं चेति। स्वाश्रयग्रहोत्पत्तिप्रयोजकसामग्रीघटककारणतावच्छेदकं विषयानवच्छिन्नज्ञानग्रहनिरूपितस्वरूपयोग्यतावच्छेदकतापर्याप्त्यनधिकरणं तद्रूपावच्छिन्नघटितसामग्रीजन्यग्रहविषयत्वोक्तौ चेत्यर्थः। अनुव्यवसायसामग्रीघटकव्यवसायस्य व्यवसायस्यानुव्यवसायसामग्रीघटत्वं च। विषयतासम्बन्धेन ज्ञानं प्रति तादात्म्येन विषयस्य हेतुत्वाद् बोध्यम्। कालोपाधिविधयेति। कालावच्छेदकतयेत्यर्थः। जन्यमात्रं प्रति कालस्य कारणत्वात्, तदुपाधेरपि तथात्वं बोध्यम्। जन्यमात्रस्वरूपयोग्यत्वेऽपीति। कार्यमात्रं प्रति स्वरूपयोग्यतारूपकारणत्वेऽपीत्यर्थः। विषयानुपरक्तज्ञानग्रहं प्रति जनकतावच्छेदकीभूतज्ञानत्व-विषयत्वादिमत्त्वस्य व्यवसाये सत्त्वेऽपीत्यर्थः। न तत्सामग्र्यसङ्ग्रहः नाऽनुव्यवसायसामग्र्यसङ्ग्रहः। तत्र हेतुमाह—तत्सामग्रीघटकतावच्छेदकेति। स्वाश्रयग्रहविषयकानुव्यवसायोत्पत्तिप्रयोजकसामग्रीघटकतावच्छेदकेत्यर्थः। अतथात्वादिति। इदन्त्वावच्छिन्नविशेष्यकघटत्वादिप्रकारकज्ञानत्वादिना विषयानवच्छिन्नज्ञानग्रहाजनकत्वादित्यर्थः।

शङ्कते—न चेति। विषयविनिर्मुक्तज्ञानाग्राहकत्वस्येति। विषयविनिर्मुक्तज्ञानाग्राहकं यत्सामग्रीघटकनिखिलकारणं तत्सामग्रीजन्यग्रहविषयत्वमित्यत्रेत्यादिः। विषयानवच्छिन्नज्ञानभानाप्रयोजकत्वरूपस्येति। विषयितासम्बन्धेन विषयानवच्छिन्न-

व्यवसायतत्प्रागभावादीनां कालत्वप्रागभावत्वादिना विषयानवच्छिन्नज्ञानविषयकग्रहस्य स्वरूपयोग्यत्वेऽपि तेन रूपेण विषयानवच्छिन्नज्ञानविषयतावच्छिन्नांजनकत्वात्। एवं च गुरुमते आत्मादीनां ज्ञानग्राहकसामग्रीत्वेन ज्ञानग्रहत्वावच्छिन्नं प्रति हेतुत्वेऽपि न क्षतिः, तत्र विषयानवच्छिन्नज्ञानभानप्रयोजकत्वे तद्व्यावृत्तेरनपेक्षितत्वादिति वाच्यम्।

एवमपि मिश्रमते ज्ञानत्वादिप्रकारकव्यवसायस्योपनीतज्ञानग्रहे विषयानवच्छिन्न-

---

ज्ञाननिष्ठविषयत्वाप्रयोजकत्वरूपस्येत्यर्थः। निवेशे इति। तथा च विषयितासम्बन्धेन विषयानवच्छिन्नज्ञाननिष्ठविषयत्वाप्रयोजकं यत्सामग्रीघटकनिखिलकारणं तादृशसामग्रीजन्येत्यादिनिवेशे इत्यर्थः। उक्तविवक्षामन्तरेणापीति। यद्यद्रूपेण कारणानां प्रकृतसामग्रीघटकत्वं तत्तद्रूपस्य विषयानुपरक्तज्ञानग्रहस्वरूपयोग्यतानवच्छेदकत्वविवक्षामन्तरेणापीत्यर्थः। उक्तविवक्षायाम् अवच्छेदकत्वानुधावनस्य तादृशस्वरूपयोग्यत्वानुधावनपर्यन्तस्य च विवक्षया गौरवादिति भावः। सामञ्जस्यमिति। व्यवसायानुव्यवसायसामग्रीसङ्ग्रहरूपं सौविध्यमस्तीति भावः। सङ्ग्रहमेवोपपादयति—व्यवसायतत्प्रागभावादीनामिति। प्रामाण्याश्रयग्रहविषयकानुव्यवसायादिसामग्रीघटकस्य व्यवसायस्य—गुरुमतेन व्यवसायप्रागभावस्य चेत्यर्थः। कालत्वप्रागभावत्वादिना कालत्वेन प्रागभावत्वेन च रूपेण, विषयानवच्छिन्नज्ञानविषयकग्रहस्य, विषयविनिर्मुक्तग्रहग्रहं प्रति स्वरूपयोग्यत्वेऽपि स्वरूपयोग्यतारूपकारणतावत्वेऽपि, तेन रूपेण कालत्वप्रागभावत्वरूपेण। विषयानवच्छिन्नज्ञानविषयत्वावच्छिन्नाजनकत्वादिति। विषयानवच्छिन्नज्ञाननिष्ठविषयत्वाप्रयोजकत्वात् कालोपाधिविधया व्यवसायस्य कारणत्वेऽपि विषयत्वाप्रयोजकत्वादिति भावः। एवं च प्रयोजकत्वविवक्षणे च, आत्मादीनाम् आत्ममनःसंयोगस्य, ज्ञानग्राहकसामग्रीत्वेन प्रमात्वाश्रयज्ञानग्राहकसामग्रीघटकत्वेन, ज्ञानग्रहत्वावच्छिन्नं प्रति प्रमात्वाश्रयज्ञानग्रहं प्रति। न क्षतिरिति। न साध्याप्रसिद्धिरित्यर्थः। तत्र आत्मनि, विषयानवच्छिन्नज्ञानभानाप्रयोजकत्वेन विषयानवच्छिन्नज्ञानभानाप्रयोजकत्वसत्त्वे, विषयानवच्छिन्नज्ञाननिष्ठविषयतात्वावच्छिन्नप्रयोज्यतानिरूपितप्रयोजकताशून्यत्वसत्त्वेनेति यावत्। तद्व्यावृत्तेरनपेक्षितत्वादिति। आत्मव्यावृत्तेरनवकाशादित्यर्थः। स्वाश्रयग्रहोत्पत्तिप्रयोजकयत्सामग्रीघटकज्ञानभानप्रयोजकनिखिलकारणं विषयानवच्छिन्नज्ञानग्रहाजनकं तत्सामग्रीजन्यग्रहविषयत्वस्य पूर्वं विवक्षितम्, तदात्मादीनामपि ज्ञानभानप्रयोजकत्वे साध्याप्रसिद्धिमाशङ्क्य तज्ज्ञानप्रागभावमात्रस्य ज्ञानभानप्रयोजकत्वं च न कर्तव्यम्, आत्मादेर्विषयानवच्छिन्नज्ञानभानाप्रयोजकत्वेन सामग्र्यन्तर्गतत्वादिति भावः। तथा च विषयानवच्छिन्नज्ञाननिष्ठविषयतात्वावच्छिन्नप्रयोज्यतानिरूपितप्रयोजकताशून्यं स्वाश्रयग्रहोत्पत्तिप्रयोजकयादृशसामग्रीघटकनिखिलकारणं तादृशसामग्रीजन्येत्यादि साध्यम्। सामञ्जस्यमिति। साध्याप्रसिद्धिवारणमित्यर्थः।

एवमपीति। विषयानवच्छिन्नज्ञानभानाप्रयोजकत्वविवक्षणेऽपीत्यर्थः। मिश्रमते व्यवसायगतप्रामाण्यस्यानुव्यवसाये भानमभ्युपगन्तुमते, ज्ञानत्वादिप्रकारकव्यवसायस्य,

ज्ञानविषयताप्रयोजकत्वसत्त्वेन तद्घटितानुव्यवसायसामग्र्याः दुःसङ्ग्रहतया तादृशव्यवसायप्रामाण्ये बाधस्य वारणायोक्तविवक्षाया आवश्यकत्वात् । तद्विवक्षणे ज्ञानत्वादिप्रकारकत्वप्रकारकज्ञानत्वस्य ज्ञानोपनीतभानजनकतावच्छेदकत्वेन सामञ्जस्यात् ।

अथैवं घटज्ञानमित्यादिशब्दजन्यशाब्दसामग्रीवारणमशक्यमेव घटान्वितज्ञानविषयकशाब्दबोधे हि घटपदसाकाङ्क्षज्ञानपदज्ञानत्वेनैव हेतुता, न तु केवलज्ञानपदज्ञानत्वेन, परस्पराकाङ्क्षाशून्यघटपदज्ञानपदयोर्ज्ञानादन्वयबोधानुदयात् । तथा च तादृशसामग्रीघटकतावच्छेदकघटपदसाकाङ्क्षज्ञानपदज्ञानत्वावच्छिन्नस्य विषयानालिङ्गितज्ञानविषयताघटितधर्मावच्छिन्नग्रहस्वरूपयोग्यतापि नास्ति ।

---

इदं ज्ञानमिति व्यवसायस्य, उपनीतज्ञानग्रहे ज्ञानलक्षणसन्निकर्षजन्यं ज्ञानं ज्ञातमित्यनुव्यवसाये, विषयानवच्छिन्नज्ञानविषयताप्रयोजकत्वसत्त्वेन घटादिविषयविनिर्मुक्तज्ञानविषयताप्रयोजकत्वस्य सत्त्वेन, तद्घटितानुव्यवसायसामग्र्याः । घटत्वप्रकारकव्यवसायघटिताज्ज्ञानं जातमित्यनुव्यवसायसामग्र्याः दुःसङ्ग्रहतयेति । असङ्ग्रहादित्यर्थः । इदं ज्ञानमिति व्यवसायगतप्रमात्वाश्रयविषयकग्रहोत्पत्तिप्रयोजिकायाः विषयानवच्छिन्नज्ञानभानाप्रयोजिकायाः असङ्ग्रहादिति भावः । तादृशव्यवसायप्रामाण्ये ज्ञानत्वप्रकारकज्ञाननिष्ठप्रमात्वे । बाधस्य वारणायेति । तादृशव्यवसायगतप्रमात्वाश्रयज्ञानस्योपनीतज्ञानग्रहप्रयोजिकायाः विषयानवच्छिन्नज्ञाननिष्ठविषयत्वाऽप्रयोजिकायाः सामग्र्या अप्रसिद्धया 'उक्तोपनीतज्ञानग्रहप्रयोजकसामग्र्याः विषयानवच्छिन्नज्ञानविषयताप्रयोजकत्वात्' प्रसक्तस्य साध्यसत्त्वानिर्वाहरूपस्य बाधस्य वारणायेत्यर्थः । उक्तविवक्षाया आवश्यकत्वादिति । यद्यद्रूपेण कारणानां प्रकृतसामग्रीघटकत्वं तत्तद्रूपस्य विषयानुपरक्तज्ञानग्रहस्वरूपयोग्यतानवच्छेदकत्वं विवक्षाया आवश्यकत्वादित्यर्थः । तद्विवक्षण इति । प्रकृतसामग्रीघटकतावच्छेदकयद्यद्रूपे विषयानवच्छिन्नज्ञानविषयकज्ञानजनकतानवच्छेदकत्वविवक्षणे । ज्ञानत्वादिप्रकारकत्वप्रकारकज्ञानत्वस्येति । ज्ञानत्वप्रकारकज्ञानवानहमित्यनुव्यवसायसामग्रीघटकतावच्छेदकस्येत्यादिः । ज्ञानोपनीतभानजनकतानवच्छेदकत्वेन तद्विषयकप्रत्यक्षं प्रति तद्विषयकज्ञानत्वेन ज्ञानलक्षणायाः कार्यकारणभावः, एवं च तादृशोपनीतभानजनकतावच्छेदकं ज्ञानत्वप्रकारकव्यवसायविषयकत्वमेव, न तु ज्ञानत्वप्रकारकज्ञानत्वमिति । ज्ञानत्वप्रकारकज्ञानवानहमित्यनुव्यवसायसामग्रीजन्यग्रहविषयत्वस्य प्रमात्वे सत्त्वान्न बाध इति भावः ।

शङ्कते—अथेति । एवमिति । स्वाश्रयज्ञानविषयकग्रहप्रयोजकयत्सामग्रीघटकतावच्छेदकं विषयानवच्छिन्नज्ञानभानजनकतानवच्छेदकं तत्सामग्रीजन्यग्रहविषयत्वोक्तौ । घटज्ञानमित्यादीति । आदिना घटत्वप्रकारकं सविशेष्यकमित्यादिपरिग्रहः । घटकतावच्छेदकीभूतं यद् घटपदसाकाङ्क्षज्ञानपदज्ञानत्वं तदवच्छिन्नस्य घटपदसाकाङ्क्षज्ञानपदज्ञानस्येत्यर्थः । विषयानालिङ्गितज्ञानविषयताघटितधर्मावच्छिन्नग्रहरूपयोग्यतापि नास्तीति । घटादिरूपविषयानवच्छिन्नं यज्ज्ञानं तन्निष्ठविषयताघटितो यस्तादृशज्ञानविषयकत्वरूपो धर्मस्तदवच्छिन्नो यः इदं ज्ञानमिति ग्रहः तदीयस्वरूपयोग्यतारूप-

न च घटपदं विनापि ज्ञानपदेन ज्ञानं गुण इत्यादौ शाब्दबोधजननात्तत्साधारणज्ञानगोचरशाब्दबोधत्वरूपसामान्यधर्मावच्छिन्नं प्रति सामान्यतो ज्ञानपदज्ञानत्वेनापि हेतुत्वात् तदवच्छिन्नमपि घटज्ञानमित्यादिशाब्दसामग्रीघटकम्, विशेषसामग्र्याः सामान्यसामग्र्यनुप्रवेशेनैव कार्योपधानप्रयोजकत्वात् । सामग्रीपदेनापि फलोपधानप्रयोजकसामान्यकारणविशेषकारणसमुदायस्यैव विवक्षितत्वादिति वाच्यम् ।

---

कारणतापि नास्तीत्यर्थः । अपिना घटपदसाकाङ्क्षज्ञानपदज्ञानत्वे घटत्ववति घटत्वप्रकारकत्वरूपप्रमात्वाश्रयज्ञानविषयकग्रहजनकसामग्रीघटकतावच्छेदकतावच्छेदकत्वस्य सत्त्वसमुच्चयः । तथा च घटज्ञानमिति वाक्यजन्यशाब्दबोधप्रयोजकसामग्रीघटकतावच्छेदकं यद् घटपदसाकाङ्क्षज्ञानपदज्ञानत्वं तद्धि विषयानवच्छिन्नज्ञानविषयताघटितधर्मावच्छिन्नजन्यतानिरूपितस्वरूपयोग्यतानवच्छेदके तद्रूपावच्छिन्नघटितशाब्दसामग्रीजन्यग्रहविषयत्वस्य घटज्ञानगतप्रमात्वे विरहेण बाध इति भावः ।

पुनस्तादृशशाब्दसामग्र्याः साध्याघटकत्वाय यतते—न चेति । घटपदं विनापीति । घटपदज्ञानाभावेऽपीत्यर्थः । ज्ञानपदेन केवलज्ञानपदविषयकज्ञानात्, ज्ञानं गुण इत्यादौ इत्यादिवाक्यात् । शाब्दबोधजननादिति । ज्ञानविशेष्यकगुणत्वप्रकारकशाब्दबोधजननादित्यर्थः । तत्साधारणज्ञानगोचरशाब्दबोधत्वरूपसामान्यधर्मावच्छिन्नं प्रति ज्ञानं गुण इति वाक्यार्थबोधसाधारणज्ञानविषयकशाब्दबुद्धित्वरूपसामान्यधर्मावच्छिन्नं प्रति, सामान्यतः घटपदानन्वितेन, ज्ञानपदज्ञानत्वेनापि—अपिना घटपदसाकाङ्क्षज्ञानपदज्ञानस्य समुच्चयः । तथा च घटान्वितज्ञानविषयकशाब्दं प्रति घटपदसाकाङ्क्षज्ञानपदज्ञानत्वेनहेतुत्वेऽपि घटादिविषयानवच्छिन्नज्ञानविषयकशाब्दं प्रति ज्ञानविषयकज्ञानत्वेनैव हेतुत्वमिति भावः । तदवच्छिन्नमपि ज्ञानपद ज्ञानत्वावच्छिन्नमपि, अपिना घटपदसाकाङ्क्षज्ञानपदज्ञानत्वस्य समुच्चयः । घटज्ञानमित्यादिशाब्दसामग्रीनिविष्टमिति । घटज्ञानत्वप्रकारकशाब्दबोधजनकसामग्रीनिविष्टम्, अस्तीति शेषः । तथा च स्वाश्रयज्ञानग्रहोत्पत्तिप्रयोजकं यत्सामग्रीघटकतावच्छेदकतावच्छेदकं ज्ञानपदज्ञानत्वमपि तत्र सामग्र्यां विषयानवच्छिन्नज्ञानग्रहाजनकत्वाभावात्तस्याः साध्याघटकत्वान्न बाध इति भावः । ज्ञानपदज्ञानत्वावच्छिन्नस्य घटज्ञानत्वप्रकारकशाब्दसामग्रीघटकत्वे उपपत्तिमाह—विशेषसामग्र्या इति । तत्तत्कार्यवृत्तिविशेषधर्मावच्छिन्नकार्यजनकीभूतसामग्र्या इत्यर्थः । सामान्यसामग्र्यनुप्रवेशेनैवेति । सामान्यधर्मावच्छिन्नकार्यजनकसामग्रीघटिततयैवेत्यर्थः । एवकारेण तादृशसामग्र्यघटितत्वस्य व्यवच्छेदकः । तादृशसामग्र्यघटितत्वे सामान्यघटितविशेषधर्मज्ञानासम्भवादिति भावः । कार्योपधानप्रयोजकत्वादिति । कार्योत्पादकत्वादित्यर्थः । सामान्यघटितविशेषधर्मावच्छिन्ने कार्ये जननीये सामान्यधर्मावच्छिन्नकार्योत्पादकसामग्री अपेक्षिता । ननु प्रकृतप्रामाण्याश्रयज्ञानविषयकग्रहजनकसामग्रीपदेन ज्ञानविशेषकारणसमुदायस्यैव ग्रहणं तादृशसामग्रीघटकतया ज्ञानपदज्ञानरूपस्य ज्ञानविषयकज्ञानसामान्यस्याग्रहणान्न दोष इत्यत आह—सामग्रीपदेनापीति । प्रकृतप्रमात्वाश्रयज्ञानविषयकग्रहजनकसामग्रीपदेनापीत्यर्थः । फलोपधानप्रयोजकसामान्यकारणविशेष-

यत्र विशेषकारणस्य सामान्यकारणतावच्छेदकावच्छिन्नत्वनियमस्तत्र विशेषकार्योपधानप्रयोजकविशेषकारणघटितसमुदाये तादृशसामान्यकारणस्य प्रयोजनविरहेणाऽनिवेशात्; विशेषसत्त्वे सामान्यसत्त्वस्यावश्यकतया सामान्यकारणं विना कार्योपधानाऽसम्भवादिति चेत् ।

मा भूत्केवलं ज्ञानपदज्ञानत्वेन घटज्ञानगोचरशाब्दबोधसामग्रीघटकता, तथापि पदजन्यज्ञानोपस्थितित्वेन पदार्थोपस्थितेः ज्ञानगोचरशाब्दसामान्यहेतुत्वात्, तद्रूपाव-

---

कारणसमुदायस्यैवेति । फलोत्पत्तिप्रयोजकसामान्यकारणसमुदायस्यैवेत्यर्थः । एवकारेण फलानुपधायकसामान्यकारणसमुदायस्य व्यवच्छेदः । इदमुपलक्षणं तादृशविशेषकारणसमुदायस्य चेत्यपि बोध्यम्, एवकारेण तादृशसमुदायान्यतरस्य व्यवच्छेदः ।

एवमपि बाधवारणं न सम्भवतीत्याह—यत्रेति । यादृशकार्यकारणभावे इत्यर्थः । विशेषकारणस्य विशेषधर्मावच्छिन्नकार्यकारणस्य । सामान्यकारणतावच्छेदकावच्छिन्नत्वनियम इति । सामान्यधर्मावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकावच्छिन्नत्वव्याप्तिरित्यर्थः । तत्र तादृशकार्यकारणभावे, विशेषकार्योपधानप्रयोजकविशेषकारणघटितसमुदाये विशेषधर्मावच्छिन्नकार्योत्पत्तिप्रयोजकविशेषकारणघटितसमुदाये, तादृशसामान्यकारणस्य विशेषकारणं सत् यत्सामान्यकारणं तस्य, प्रयोजनविरहेण अनावश्यकत्वेन, अनिवेशात् सामग्रीपदेनाविवक्षणात् प्रयोजनविरहमाह—विशेषसत्त्व इति । विशेषकारणसत्त्वे इत्यर्थः । सामान्यसत्त्वस्यावश्यकतयेति । सामान्यकारणस्यावश्यकतयेत्यर्थः, अर्थात्सिद्धतयेति भावः । व्याप्यसत्त्वे व्यापकसत्त्वस्यावश्यकत्वादिति यावत् । सामान्यकारणं विना कार्योपधानासम्भवात् सामान्यकारणाभावे कार्यानुत्पत्तेरित्यर्थः । विशेषसामग्र्यां सामान्यकारणस्यापि निविष्टतया पुनस्तत्प्रवेशे प्रयोजनविरहादिति भावः । तथा च सामान्यकारणस्य स्वातन्त्र्येण समुदाये न प्रवेशः किन्तु घटपदसाकाङ्क्षज्ञानपदज्ञानत्वेनैव घटपदसाकाङ्क्षज्ञानपदज्ञानस्येति घटज्ञाननिष्ठप्रमात्वाश्रयज्ञानविषयकग्रहोत्पत्तिप्रयोजकयादृश'शब्दादिरूप'सामग्रीघटकतावच्छेदकं घटपदसाकाङ्क्षज्ञानपदज्ञानत्वं तस्य विषयानवच्छिन्नज्ञानग्रहाजनकत्वेन तादृशसामग्रीजन्यग्रहविषयत्वस्य बाधेऽसत्त्वेन बाध इति भावः ।

बाधं निरस्यति—मा भूदित्यादिना । केवलं घटपदाव्यवहितोत्तरत्वशून्येन, ज्ञानपदज्ञानत्वेन ज्ञानपदज्ञानस्येति शेषः । घटपदान्वितज्ञानपदज्ञानस्यैव सामग्री घटकता अस्तु इति भावः । ननु तर्हि घटान्वितज्ञानपदज्ञानस्य सामग्रीघटकत्वे तस्य विषयानवच्छिन्नज्ञानग्रहाजनकतया तादृशसामग्रीजन्यग्रहविषयत्वस्य प्रमात्वेऽसत्त्वेन बाधः स्यादत आह—तथापीति । ज्ञानपदज्ञानत्वस्य घटज्ञानविषयकशाब्दसामग्रीघटकतावच्छेदकत्वाभावेऽपीत्यर्थः । पदजन्यज्ञानोपस्थितित्वेन घटज्ञानपदजन्या या ज्ञानविषयकोपस्थितिस्तत्त्वेन, पदार्थोपस्थितेः ज्ञानविषयकस्मृतेरिति यावत् । 'घटज्ञानपदज्ञानजन्याघटोपस्थितिः ज्ञानविषयकोपस्थितिश्च स्वातन्त्र्येणैव जायते तत्र ज्ञानोपस्थितेर्विषयानवच्छिन्नज्ञानग्रहरूपत्वं घटज्ञानविषयकशाब्दसामग्रीघटकत्वं च बोध्यम्' । ज्ञानगोचर-

च्छिन्नस्य विषयानवच्छिन्नज्ञानभानेऽपि प्रयोजकस्योक्तसामग्रीघटकत्वेन तद्व्यावर्तनसम्भवात्। न हि पदार्थोपस्थितेरपि घटाद्यन्वितज्ञानादिबोधे घटादिपदसाकाङ्क्षज्ञानादिपदज्ञानजन्यज्ञानाद्युपस्थितित्वेन हेतुता कल्प्यते, प्रयोजनविरहात्। तत्तत्पदजन्योपस्थितितत्तत्पदधर्मिकपदान्तराकाङ्क्षाज्ञानघटितसामग्र्याः कार्योपधानप्रयोजकत्वेन निराकाङ्क्षपदजन्योपस्थितिबलादन्वयबोधापत्त्यसम्भवात्।

यदि च आकाङ्क्षाज्ञानं न शाब्दधीकारणम्, अपि तु पदार्थोपस्थितिकारणतायां जन्यतासम्बन्धेनावच्छेदकमेवेति 'नव्यास्तु इत्यादिना' मणिकाराणां स्वं मतमाद्रियते

---

शाब्दसामान्यहेतुत्वादिति। ज्ञानविषयकबुद्धित्वावच्छिन्नजन्यतानिरूपितजनकतावत्त्वादित्यर्थः। तथा च घटज्ञानपदज्ञानस्येव ज्ञानविषयकोपस्थितेः स्वाश्रयज्ञानग्रहप्रयोजकयादृशसामग्रीघटकत्वेऽपि विषयानवच्छिन्नज्ञानग्रहाजनकत्वविरहेण तादृशसाध्याघटकत्वान्न बाध इति भावः। तदेवाह—तद्रूपावच्छिन्नस्येति। घटज्ञानपदज्ञानजन्यज्ञानविषयकोपस्थितेरित्यर्थः। विषयानवच्छिन्नज्ञानभानेऽपि विषयानवच्छिन्नज्ञानविषयकत्वेऽपि, उक्तप्रयोजकस्य प्रमात्वाश्रयज्ञानग्रहप्रयोजकसामग्रीघटकतयेति भावः। तद्व्यावर्तनसम्भवादिति। घटज्ञानमिति वाक्यार्थबोधप्रयोजक'ज्ञानविषयकोपस्थितिघटित'सामग्रीव्यावर्तनसम्भवादित्यर्थः। ननु घटज्ञानविषयकशाब्दं प्रति ज्ञानविषयकोपस्थितेरपि घटज्ञानपदज्ञानजन्योपस्थितित्वेनैव हेतुता न तु केवलज्ञानविषयकोपस्थितित्वेनेति तादृशोपस्थितिसामग्र्याः विषयानवच्छिन्नज्ञानग्रहाजनकत्वेन साध्यघटकत्वाद् बाधवारणं दुःशक्यमेवेत्यत आह—नहीति। पदार्थोपस्थितेरपीति। ज्ञानपदजन्यज्ञानोपस्थितेरपीत्यर्थः। घटाद्यन्वितज्ञानादिबोधे। घटज्ञानविषयकबोधं प्रति। घटादिपदसाकाङ्क्षज्ञानादिपदज्ञानजन्यज्ञानाद्युपस्थितित्वेनेति। घटादिपदसाकाङ्क्षं यद् ज्ञानपदं तद् ज्ञानजन्योपस्थितित्वेनेत्यर्थः। कारणत्वं नहि स्वीक्रियते, प्रयोजनाभावादिति भावः। सामान्यरूपेण कारणत्वे व्यभिचारे सत्येव विशेषरूपेण कारणत्वं स्वीक्रियते इत्याशयः। ननु निराकाङ्क्षघटपदज्ञानपदात् 'घटः ज्ञानमिति पदात्' शाब्दापत्तिरित्यत आह—तत्तत्पदजन्योपस्थितितत्तत्पदधर्मिकपदान्तराकाङ्क्षाज्ञानघटितसामग्र्या इति। तत्तत्पदजन्या या उपस्थितिः एवं तत्तत्पदधर्मिकपदान्तराकाङ्क्षाज्ञानं तद्घटितकारणसमुदायस्येत्यर्थः। कार्योपधानप्रयोजकत्वेन कार्यनिरूपितफलोपधायकतावत्त्वेन, निराकाङ्क्षपदजन्योपस्थितिबलात् केवलज्ञानपदजन्योपस्थितिबलात्। अन्वयबोधापत्त्यसम्भवादिति। घटज्ञानविषयकशाब्दबोधापत्तेरसम्भवादित्यर्थः। तथा चाकाङ्क्षाज्ञानं स्वातन्त्र्येण कारणम्, उपस्थितिजनकतावच्छेदककोटौ तन्निवेशने प्रयोजनाभावादिति भावः।

उक्तशाब्दसामग्र्याः साध्यघटकतया बाधमाशङ्कते—यदि चेति। आकाङ्क्षाज्ञानमिति। अव्यवहितोत्तरत्वसम्बन्धेन तत्पदविशिष्टतत्पदत्वरूपाकाङ्क्षाज्ञानमित्यर्थः। न शाब्दधीकारणमिति। न स्वातन्त्र्येण कारणमित्यर्थः। पदार्थोपस्थितिनिष्ठकारणतायां शाब्दबोधनिरूपितपदार्थोपस्थितिनिष्ठकारणतायाम्। जन्यतासम्बन्धेनावच्छेदकमेवेति।

ज्ञानग्राहकताप्रयुक्तमेव यस्या विषयग्राहकत्वमिति यावत्। तादृशयावत्सामग्रीग्राह्यत्वमर्थः।

---

तदोक्तप्रकारेण घटज्ञानमिति सामग्रीव्युदासासम्भवात्पक्षधरमिश्रा एव प्रकारान्तरमनुसृतवन्तः, तमेव पक्षमुपन्यस्यति—ज्ञानग्राहकताप्रयुक्तमिति। यत्र ज्ञानभासकमेव विषयभासकं विषयभानार्थं नाधिकमपेक्षितं तज्ज्ञानसामग्र्या विषयग्राहकत्वे ज्ञानग्राहकत्वं प्रयोजकम्।

उक्तशाब्दबोधसामग्र्या विषयग्राहकत्वे च न ज्ञानग्राहकत्वं प्रयोजकम्, तत्र ज्ञानभानाप्रयोजकघटादिपदज्ञानस्य अधिकस्य विषयभासकत्वात्। अनुव्यवसायसामग्र्या

---

तादृशकारणतानिरूपितजन्यतासम्बन्धावच्छिन्नावच्छेदकतावदेनेत्यर्थः। तथा च जन्यतासम्बन्धेनाकाङ्क्षाज्ञानविशिष्टपदार्थोपस्थितिः कारणमिति भावः। इतीति। एतादृशमित्यर्थः। 'नव्यास्तु' इति प्रतीकं मणे मणिकाराणां गङ्गेशोपाध्यायानां, स्वं मतमाद्रियते मणिकारमतमभ्युपगम्यते। तदा घटपदसाकाङ्क्षज्ञानपदज्ञानजन्यत्वविशिष्टपदार्थोपस्थितित्वेनैव कारणत्वे। उक्तप्रकारेण स्वाश्रयज्ञानग्रहप्रयोजकत्वेन यादृशसामग्रीघटकस्य घटविषयकज्ञानोपस्थितिरूपकारणस्य विषयानवच्छिन्नज्ञानभानाप्रयोजकतया तद्घटितत्वेन। घटज्ञानमिति सामग्रीव्युदासासम्भवादिति। तादृशसामग्रीसङ्ग्रहादित्यर्थः। तथा च तादृशसामग्रीजन्यग्रहविषयत्वस्य प्रमात्वेऽसत्त्वाद् बाध इति भावः।

दीधितौ—ज्ञानग्राहकताप्रयुक्तमेवेति। ज्ञानग्राहकताप्रयोज्यमित्यर्थः। यस्याः सामग्र्याः, निष्ठत्वं सप्तम्यर्थः। तथा च यन्निष्ठविषयग्राहकत्वं ज्ञानग्राहकताप्रयोज्यं तत्सामग्रीजन्यग्रहविषयत्वमर्थः। घटज्ञानमिति शाब्दसामग्रीनिष्ठविषयग्राहकतायां ज्ञानग्राहकताप्रयोज्यत्वाभावेन तादृशसामग्र्याः साध्यघटकत्वाभावाद् घटज्ञानमिति शाब्दसामग्र्याः वारणम्। ननु घटज्ञानमिति शाब्दसामग्रीनिष्ठविषयग्राहकताऽवश्यं तादृशसामग्रीनिष्ठज्ञानग्राहकताप्रयोज्या उभयोः समनियतत्वेन प्रयोज्यप्रयोजकभावसम्भवादित्यत आह—यत्रेति। सामग्रीविशेषे इत्यर्थः। ज्ञानभासकमेव ज्ञानविषयकत्वप्रयोज्यमेव, विषयभासकं विषयविषयकत्वम्, ज्ञानभासकमेव विषयभानजनकमिति यावत्। एवकारेण ज्ञानभासकातिरिक्तस्य विषयभानजनकत्वव्यवच्छेदः। विषयभानार्थम्—विषयविषयकत्वार्थम्। नाधिकमपेक्षितमिति। ज्ञानभासकादतिरिक्तं नापेक्षते इत्यर्थः। तज्ज्ञानसामग्र्या इति। तादृशप्रमात्वाश्रयज्ञानविषयकज्ञानजनकसामग्र्या इत्यर्थः। निष्ठत्वं षष्ठ्यर्थः। विषयग्राहकत्वे विषयावच्छिन्नग्रहजनकत्वे, ज्ञानग्राहकत्वं ज्ञानग्रहजनकत्वम्, उक्तशाब्दबोधसामग्र्याः घटज्ञानमिति शाब्दबोधजनकीभूतशब्दादिघटितसामग्रीनिष्ठे, विषयग्राहकत्वे सामग्रीजन्यज्ञानस्य विषयविषयकत्वे। न ज्ञानग्राहकत्वं प्रयोजकमिति। ज्ञानविषयकज्ञानजनकत्वं न प्रयोजकमित्यर्थः। तत्र तादृशशाब्दसामग्र्यां, ज्ञानभानाप्रयोजकघटादिपदज्ञानस्य तादृशशाब्दसामग्रीजन्यतामस्य ज्ञानविषयत्वाप्रयोजकं यद्घटादिपदज्ञानं 'प्रयोजकं ज्ञानपदज्ञानं' तदात्मककारणस्य, अधिकस्य ज्ञानभासकादतिरिक्तस्य। विषयभासकत्वादिति। घटात्मकविषयभानप्रयोजकस्य

विषयग्राहकत्वे च ज्ञानग्राहकत्वं प्रयोजकम्, तत्र ज्ञानभानप्रयोजकव्यवसायज्ञानधर्मिक-विषयासंसर्गग्रहाभावयोरेव विषयभासकत्वात् ।

यद्यपि ज्ञानपदसमभिव्याहृतत्वेन घटपदज्ञानस्य ज्ञानविषयतापि जन्यतावच्छेदिका, तथापि तदवच्छिन्नजनकत्वमेव न तत्प्रयोजकत्वरूपं तद्भासकत्वम्, किन्तु एतद्बोध-जनकवाक्येऽमुकपदसत्त्वादस्य बोधस्यैतद्विषयकत्वमित्यादिव्यवहारसिद्धस्वरूपसम्बन्ध-विशेष एव। न हि घटज्ञानबोधे ज्ञानपदात् ज्ञानभानमितिवत् घटपदात् ज्ञानभान-

---

प्रयोजकत्वादित्यर्थः। ज्ञानमिति शाब्दसामग्र्या अतिरिक्तविषयभानाप्रयोजकत्वेऽपि विषयानवच्छिन्नज्ञानग्रहाप्रयोजकत्वविरहान्न साध्यान्तर्गतत्वमिति भावः। तथा चोक्त-घटज्ञानमिति शाब्दसामग्र्या ज्ञानग्राहकताप्रयुक्तविषयग्राहकताकत्वाभावान्न तादृशी सामग्री साध्यघटकसामग्री पदग्राह्येति न बाधः। ग्राह्यसामग्रीमाह—अनुव्यवसाय-सामग्र्या इति। अनुव्यवसायजनकसामग्र्या इत्यर्थः। विषयग्राहकत्वे च व्यवसा-यात्मकविषयग्राहकत्वे च। ज्ञानग्राहकत्वं प्रयोजकमिति। विषयस्य ज्ञानरूपत्वादिति भावः। तत्र—अयं घट इति व्यवसायात्मकज्ञानविषयको यो घटत्वप्रकारकज्ञानवानह-मित्यनुव्यवसायस्तज्जनकात्ममनःसंयोगव्यवसाय-असंसर्गाग्रहघटितसामग्र्याम्। ज्ञान-भानप्रयोजकव्यवसायज्ञानधर्मिकविषयाऽसंसर्गग्रहाभावयोरेवेति। तादृशसामग्रीजन्यानु-व्यवसायात्मकग्रहस्य ज्ञानविषयकत्वप्रयोजकौ यौ घटत्वप्रकारको व्यवसायः, ज्ञाने विषयाऽसंसर्गाग्रहश्च तयोरेव विषयभासकत्वादित्यर्थः। इदमुपलक्षणम्। व्यवसायानु-मिति सामग्र्याऽपि ज्ञानग्राहकताप्रयुक्तमेव विषयग्राहकत्वे बोध्यम्।

ननु यदुक्तं ज्ञानभानाप्रयोजकं घटादिपदज्ञानस्य अधिकस्य विषयभासकत्वादित्य-नेन घटादिपदे ज्ञानमानाप्रयोजकत्वमुक्तम्, घटादिपदज्ञाननिष्ठजनकतानिरूपितजन्य-तावच्छेदिका घटादिविषयतैव न तु ज्ञानविषयतापीति समुदितार्थः। परन्तु प्रकृते ज्ञाननिष्ठविषयताया अपि ज्ञानपदसमभिव्याहृतत्वेन घटपदजन्यतावच्छेदकतया ज्ञान-निष्ठविषयत्वावच्छिन्नजन्यतानिरूपितजनकतायाश्च विनिगमकाभावेन घटपदज्ञानेऽपि सत्त्वेन ज्ञानभानप्रयोजकस्यैव घटपदज्ञानविषयभानप्रयोजकत्वाद् घटज्ञानमिति शाब्द-सामग्रीवारणमशक्यमित्याशङ्कते—यद्यपीत्यादिना। ज्ञानपदसमभिव्याहृतत्वेन घटपद-ज्ञानस्य ज्ञानविषयतापि जन्यतावच्छेदिकेति। घटज्ञानमिति शाब्दबोधजनकं घटज्ञान-मिति पदम्, तत्र यथा ज्ञानपदज्ञाननिष्ठजनकतानिरूपितजन्यतावच्छेदिका ज्ञानविषयता तथैव ज्ञानपदसाकाङ्क्षघटपदज्ञाननिष्ठजनकतानिरूपितजन्यतावच्छेदिकापि इत्याशयः। ज्ञानविषयतापीत्यपिना घटविषयतायाः समुच्चयः। तथापीति। तदवच्छिन्नजनकत्व-मेवेति। ज्ञानविषयत्वावच्छिन्नजनकत्वमेवेत्यर्थः। न तत्प्रयोजकत्वरूपं तद्भासकत्व-मिति। ज्ञानविषयताभासकत्वमित्यर्थः। तथा सति ज्ञानभानप्रयोजकत्वं घटपदज्ञानेऽपि स्यात्। किन्त्विति। तद्भासकत्वं स्वरूपसम्बन्धविशेष इत्यनेनाऽस्यान्वयः। एतद्बोध-जनकवाक्ये घटज्ञानविषयकबोधजनकघटज्ञानमिति वाक्ये, अमुकपदसत्त्वात् घटपद-सत्त्वात्। अस्य बोधस्य घटज्ञानविषयकबोधस्य, एतद्विषयकत्वं घटविषयकत्वम्, ज्ञान-

यद्यपि उभयभासकसामग्र्या नैकग्राहकत्वप्रयुक्तमन्यग्राहकत्वम्, तथापि ज्ञानग्राहकताप्रयोजकसामग्रीप्रयुक्तविषयग्राहकताकत्वं वाच्यम् ।

---

मित्यपि व्यवहारः, विषयोपस्थितिं विना ज्ञानस्य शाब्दबोधे बहुशो भानम्, न तु ज्ञानोपस्थितिं विना क्वचिदपीति ज्ञानविषयोपस्थापकपदयोर्विशेषादिति भावः ।

एतावताऽनुव्यवसायादिस्थले तुल्यकालसम्बन्धिनोर्ज्ञानविषयभानयोरिव तथाविधयोः सामग्रीनिष्ठज्ञानविषयभासकतयोरपि न प्रयोज्यप्रयोजकभावः सिद्धयति, अपितु एकतरभानेऽन्यतरभासकहेतोरेवेति यथाश्रुतेऽसम्भव इत्याशङ्क्य निष्कृष्टार्थमाह—

---

पदसत्त्वात् ज्ञानविषयकत्वम् । इत्यादि व्यवहारसिद्धस्वरूपसम्बन्धविशेष एवेति । तद्भासकत्वमिति पूर्वेणान्वयः । एवकारेण तदवच्छिन्नजनकत्वस्य व्यवच्छेदः । व्यतिरेकदृष्टान्तमाह—नहीति । ज्ञानपदात् ज्ञानभानमिति । प्रयोज्यत्वं पञ्चम्यर्थः । ज्ञानपदप्रयोज्यं ज्ञानभानमित्यर्थः । ज्ञानविषयकत्वमिति यावत् । घटपदात् ज्ञानभानमित्यपीति । घटपदप्रयोज्यं ज्ञानभानमिति व्यवहारो न भवतीत्यर्थः । ज्ञानभानं प्रति ज्ञानोपस्थितेरावश्यकत्वमाह—विषयोपस्थितिं विनेति । घटादिरूपविषयोपस्थित्यभावेऽपीत्यर्थः । ज्ञानस्य शाब्दबोधे बहुशो भानमिति । केवलज्ञानस्य स्वविषयकशाब्दबोधे प्रायो भानमित्यर्थः ।

यादृशसामग्रीनिष्ठविषयग्राहकता ज्ञानग्राहकता प्रयोज्या तादृशसामग्रीजन्येत्यादिपर्यवसितार्थे साध्याप्रसिद्धिमाशङ्कते दीधितौ—यद्यपीत्यादिना । उभयभासकसामग्र्या इति । ज्ञानविषयभानसामग्रीनिष्ठयोर्ज्ञानविषये भासकत्वयोरित्यर्थः । नैकग्राहकत्वप्रयुक्तं ज्ञानग्राहकत्वप्रयोज्यम्, अन्यग्राहकत्वं विषयग्राहकत्वम्, तथा च ज्ञानग्राहकत्वविषयग्राहकत्वयोः प्रयोज्यप्रयोजकभावो नास्तीति भावः । किन्तु ज्ञानभासकसामग्रीविषयभानयोः, एवं विषयभासकसामग्रीज्ञानभानयोरेवेति उभयग्राहकत्वयोः प्रयोज्यप्रयोजकविरहात्साध्याप्रसिद्धिरिति भावः । समाधत्ते—तथापीति । टीकायाम्—एतावतेति । ज्ञानग्राहकताविषयग्राहकतयोः प्रयोज्यप्रयोजकभावं स्वीकृत्य शाब्दसामग्रीवारणं कृतं तावता इत्यर्थः । अनुव्यवसायादिस्थल इति । आदिपदाद्यादृशज्ञानसामग्रीग्राह्या तादृशज्ञानं ग्राह्यम् । तेन व्यवसायस्थले अनुमितिस्थले चेत्यर्थः । तुल्यकालवर्त्तिनोरिति । कालिकसम्बन्धेनैकक्षणे वर्त्तमानयोरित्यर्थः । ज्ञानविषयभानयोरिवेति । अस्य न प्रयोज्यप्रयोजकभावः सिद्धयतीति पूर्वेणान्वयः । तथा चैककालविद्यमानयोर्ज्ञानभानविषयभानयोर्यथा प्रयोज्यप्रयोजकभावो नास्तीति समुदितार्थः । तथाविधयोरिति । समानकालावस्थितयोरित्यर्थः । सामग्रीनिष्ठज्ञानविषयभासकतयोरपीति । प्रकृतप्रामाण्याश्रयविषयकग्रहजनकसामग्र्या वर्तमानाया ज्ञानभानजनकताया च विषयभानजनकता तयोरपीत्यर्थः । तयोरपि प्रयोज्यप्रयोजकभावो न भवतीत्यर्थः । अपि तु एकतरभानेऽन्यतरभासकहेतोरेवेति । विषयभाने ज्ञानभानप्रयोजकहेतुघटितसामग्र्या एव इत्यर्थः । प्रयोजकत्वमिति शेषः । एवकारेण सामग्रीनिष्ठज्ञान-विषयभासकतयोर्व्यवच्छेदः । प्रयोज्यप्रयोजकभावस्य पौर्वापर्यनियतत्वादिति भावः । यथाश्रुते-

यद्यपीति । ज्ञानग्राहकतेति । यादृशसामग्रीजन्यज्ञाने विषयभानं ज्ञानभानप्रयोजकत्वेन तत्प्रयोजकप्रयुक्तं तादृशत्वं सामग्र्यां विशेषणं वक्तव्यमित्यर्थः ।

एतेन यथाश्रुते घटज्ञानमित्यादिशाब्दबोधरूपज्ञानग्रहस्य विषयग्रहरूपतया तत्सामग्रीनिष्ठज्ञानग्रहोपधानरूपज्ञानग्राहकताया विषयग्राहकतातोऽभिन्नतया तुल्यप्रयोजकप्रयुक्तत्वसत्त्वेऽपि न क्षतिः । प्रयोजकत्वेनेति करणात्तादृशशाब्दबोधे योग्यताज्ञानादीना-

---

ऽसम्भवः । ज्ञानग्राहकताप्रयुक्तविषयग्राहकताकसामग्रीत्युक्तौ साध्याप्रसिद्धिरूपाऽसम्भव इत्यर्थः । इत्याशङ्क्य निष्कृष्टार्थमाहेति । यद्यपीत्यादिनाऽऽशङ्क्य तथापीत्यादिना निष्कृष्टार्थमाहेत्यर्थः । यादृशसामग्रीजन्यज्ञान इति । प्रकृतप्रमात्वाश्रयज्ञानग्राहकसामग्रीजन्यग्रहे इत्यर्थः । विषयभानं घटादिरूपविषयविषयकत्वम्, अस्य तत्प्रयोजकप्रयुक्तमित्यत्रान्वयः । ज्ञानभानप्रयोजकत्वेन रूपेण ज्ञानविषयकत्वप्रयोजकत्वरूपेण, वैशिष्ट्यं तृतीयार्थः, तस्यापि तत्प्रयोजकेऽन्वयः । तत्प्रयोजकप्रयुक्तं विषयज्ञानप्रयोजकप्रयुक्तम् । सामग्र्यां विशेषणं वक्तव्यमिति । साध्यघटकसामग्र्यां शाब्दसामग्रीवारणाय साध्यघटकसामग्र्यास्तथाविधार्थो विवक्षणीय इत्यर्थः ।

तथा च यादृशसामग्रीजन्यग्रहवृत्तिविषयविषयकत्वं ज्ञानभानप्रयोजकत्वावच्छिन्नविषयप्रयोजकतानिरूपितप्रयोज्यतावच्छेदकं "यादृशसामग्रीजन्यग्रहवृत्तिविषयविषयकत्वनिष्ठप्रयोज्यतानिरूपितप्रयोजकतावच्छेदकं ज्ञानभानप्रयोजकत्वं वा" तादृशसामग्रीजन्येत्यादि वक्तव्यम् । अयं घट इति व्यवसायविषयकं ज्ञानं मिश्रमते घटत्ववति घटत्वप्रकारकज्ञानवानहमित्यनुव्यवसायः, गुरुमते च स एव, भट्टमते इयं घटवृत्तिज्ञातता घटत्वप्रकारकघटविशेष्यकज्ञानजन्या ज्ञाततायाः इत्यनुमितिः, एतादृशे स्वस्वसामग्रीजन्यज्ञाने घटोऽपि भासते ज्ञानमपि । तादृशघटभानं प्रति व्यवसायस्य ज्ञानधर्मिकविषयासंसर्गग्रहाभावस्य च प्रयोजकत्वम् । तादृशव्यवसायादेरेव च ज्ञानभानप्रयोजकत्वमपि । स्वज्ञानं प्रति स्वस्य तादात्म्येन हेतुत्वात् । तथा चोक्तानुव्यवसायादिसामग्रीजन्यज्ञाने विषयभानस्य ज्ञानभानप्रयोजकत्वेन विषयभानप्रयोजकप्रयुक्तत्वात्, तादृशज्ञानवृत्तिविषयविषयकत्वं ज्ञानभानप्रयोजकत्वावच्छिन्नप्रयोजकतानिरूपितप्रयोज्यतावच्छेदकमस्तीति तादृशसामग्रीसङ्ग्रहः ।

एतेन यादृशसामग्रीजन्यज्ञाने विषयभानं ज्ञानभानप्रयोजकत्वेन प्रयुक्तमित्याद्यर्थकरणेन, यथाश्रुते ज्ञानग्राहकताप्रयुक्तमेव यस्या विषयग्राहकत्वमित्युक्तौ । घटज्ञानमित्यादिशाब्दबोधरूपज्ञानग्रहस्येति । आदिना घटज्ञानं ज्ञानं गुणः—इदं घटत्वप्रकारकं सविशेष्यकमिति ज्ञानानां परिग्रहः । एतादृशशाब्दात्मकं यज्ज्ञानविषयकं ज्ञानं तस्येत्यर्थः । विषयग्रहरूपतया घटादिरूपविषयविषयकतया, तत्सामग्रीनिष्ठज्ञानग्रहोपधानरूपज्ञानग्राहकताया इति । घटपद-ज्ञानपदज्ञानरूपा या तादृशशाब्दबोधजनिका सामग्री तन्निष्ठा या ज्ञानग्रहनिरूपितफलोपधानरूपा ज्ञानग्रहजनकता तस्या इत्यर्थः । विषयग्राहकतातः घटादिरूपविषयग्रहजनकतात इत्यर्थः । अभिन्नतया, तुल्यप्रयोजकप्रयुक्तत्वेऽपि तादृशशाब्दबोधजनकैकसामग्रीरूपप्रयोजकप्रयुक्तत्वसत्त्वेऽपीत्यर्थः । न

घटज्ञानपदाद्यात्मकसामग्र्यास्तु ज्ञानपदाधीनं ज्ञानग्राहकत्वम्, तच्च न घट-ग्राहकत्वे तन्त्रमपि तु घटपदम् ।

---

मुभयभानप्रयोजकत्वेऽपि न दोषः । ज्ञानभानप्रयोजकत्वस्य विषयभासकमध्यनिविष्टघट-पदाद्यसङ्ग्राहकत्वेन विषयभासकतानवच्छेदकत्वात् । तदेव दर्शयति—घटज्ञानपदेति । तादृशसामग्रीजन्यज्ञाने ज्ञानपदाधीनं ज्ञानभानमित्यर्थः । तच्च ज्ञानपदं च । घटग्राहकत्वे = घटविषयकत्वे ।

ननु एवं प्रकृतप्रामाण्यानुमितिग्राह्यत्वमादाय सिद्धसाधनवारकं यावत्पदमनर्थकम्, इदं ज्ञानं घटविषयकं घटेच्छाजनकत्वादित्याद्यनुमानानामिव प्रामाण्यानुमानस्यापि उक्त-

---

क्षतिरिति । न शाब्दसामग्र्याः साध्यघटकत्वमित्यर्थः । साध्याघटकत्वे हेतुमाह—प्रयोजकत्वेनेति । करणादिति । ज्ञानभानप्रयोजकत्वेन तत्प्रयोजकत्वप्रयुक्तमित्यत्र तृतीयाया निर्देशेन करणत्वार्थकतया ज्ञानभानप्रयोजकत्वस्य विषयभासकतावच्छेदकत्व-लाभादित्यर्थः । ज्ञानभानप्रयोजकत्वावच्छिन्नविषयभासकत्वलाभादिति यावत् । तादृशशाब्दबोध इति । घटज्ञानमिति शाब्दबोधं प्रतीत्यर्थः । योग्यताज्ञानादीनामिति । आदिना आकाङ्क्षा तात्पर्यज्ञानोपस्थितीनां परिग्रहः । उभयभानप्रयोजकत्वेऽपि ज्ञान-विषयोभयभानप्रयोजकत्वेऽपि, न दोषः न सामग्र्याः साध्यघटकत्वरूपो दोषः । तत्र हेतु-माह— ज्ञानभानप्रयोजकत्वस्येति । विषयभासकमध्यनिविष्टघटपटाद्यसङ्ग्राहकत्वेन । विषयभानजनकीभूतो यः समुदायस्तदन्तर्गतघटपटादिज्ञानरूपस्य ज्ञानभासकत्वेना-ऽसङ्ग्रहादित्यर्थः । विषयभासकतावच्छेदकत्वादिति । ज्ञानभासकत्वस्य न्यूनवृत्तितया विषयभासकतानवच्छेदकत्वादित्यर्थः । तदेव विवृणोति—घटज्ञानमिति । शाब्दसामग्री-घटकघटपदज्ञानस्य ज्ञानभानप्रयोजकतावच्छेदकानवच्छिन्नत्वं स्फुटयतीत्यर्थः । दीधितौ—घटज्ञानपदाद्यात्मकसामग्र्यास्तु इति । घटपदात्मकसामग्र्यास्तु, ज्ञानपदात्मकसामग्र्या-स्तु इत्यर्थः । तादृशसामग्रीजन्यज्ञाने शाब्दसामग्रीजन्यज्ञाने ज्ञानपदप्रयोज्यं ज्ञानविषय-कत्वमित्यर्थः, तथा च यादृशसामग्रीजन्यज्ञाने ज्ञानभानप्रयोजकत्वावच्छिन्नविषयभान-प्रयोजकप्रयोज्यं विषयभानं तादृशसामग्रीजन्ययावद्ग्रहविषयत्वमर्थः । तथा च शाब्द-सामग्रीजन्यज्ञाने विषयभानप्रयोजकता न ज्ञानभानप्रयोजकत्वावच्छिन्नेति न शाब्द-सामग्र्याः साध्यघटकत्वमिति भावः ।

ज्ञानग्राहकताप्रयुक्तमेव यस्याविषयग्राहकत्वं तत्सामग्रीजन्येत्यादिनिवेशे यावत्पद-मनर्थकमित्याशङ्कते—नन्वित्यादिना । एवं यादृशसामग्रीजन्यज्ञाने ज्ञानभानप्रयोजकत्वा-वच्छिन्नविषयभानप्रयोजकताप्रयुक्तं विषयभानं तादृशसामग्र्याः साध्यघटकत्वे । प्रकृत-प्रामाण्यानुमितिग्राह्यत्वमादायेति । प्रकृतप्रमात्वाश्रयविषयको यः इदं ज्ञानं प्रमा सफल-प्रवृत्तिजनकत्वादित्यनुमित्यात्मको ग्रहस्तज्जनकपरामर्शादिरूपसामग्रीजन्यतादृशानु-मित्यात्मकग्रहविषयत्वमादायेत्यर्थः । सिद्धसाधनवारकं यावत्पदमिति । तथा च मीमांसकमते यावत्सामग्रीग्राह्यत्वाभावात्सिद्धसाधनवारकमित्यर्थः । अनर्थकमिति । प्रामाण्यानुमितिमादाय सिद्धसाधनं सदृष्टान्तं वारयति—इदं ज्ञानमिति । अनुमानाना-

एकयैव शक्त्या विषयोपरक्तज्ञानग्राहकेण प्रमापदेन प्रामाण्यग्राहिणा सिद्धसाधनवारणाय यावदिति ।

---

**विशेषणेनैव वारणात्, तत्रैवाऽत्रापि ज्ञानविषयग्राहकतयोः पृथक्प्रयोजकप्रयुक्तत्वादित्याशङ्क्य एकप्रयुक्तोभयग्राहकताकपदविशेषघटितसामग्रीग्राह्यताप्रयुक्तसिद्धसाधनवारकतां तस्याह—एकयैवेति । पदैक्येऽपि विशेषणविशेष्यभेदेन शक्तिरूपप्रयोजकभेदान्न तादृशसामग्रीसङ्ग्रह इति तदैक्याभिधानम् । विषयोपरक्तेति । विषयघटितयाथार्थ्यविशिष्टेत्यर्थः । उपसर्गस्य द्योतकतया न प्रशब्दस्य याथार्थ्यरूपप्रकर्षे स्वतन्त्रशक्तिरिति भावः ।**

---

मिवेति । इदं ज्ञानं घटविषयकमित्यनुमितौ यथा घटविषयकत्वे व्यापकतावच्छेदकत्वं प्रयोजकम्, ज्ञानविषयकत्वे च पक्षधर्मताज्ञानं प्रयोजकमिति ज्ञानभानप्रयोजकसामग्रीप्रयुक्तविषयग्राहकताकत्वाभावात् तादृशानुमितिसामग्रीणामिवेत्यर्थः । प्रामाण्यानुमानस्यापि इदं ज्ञानं प्रमा सफलप्रवृत्तिजनकत्वादित्यनुमितिसामग्र्याऽपि । उक्तविशेषणेनैव वारणादिति । ज्ञानग्राहकताप्रयुक्तमेव यस्या विषयग्राहकत्वमिति विशेषणेनैव वारणादित्यर्थः । वारणप्रकारमाह—तत्रैवाऽत्रापि इदं ज्ञानं घटविषयकमित्यनुमितिसामग्र्यामिव प्रामाण्यानुमितिसामग्र्यामपि । ज्ञानविषयग्राहकतयोरिति । ज्ञानग्रहजनकतायाः विषयग्रहजनकतायाश्चेत्यर्थः । पृथक्प्रयोजकप्रयुक्तत्वादिति । प्रामाण्यानुमितौ ज्ञानविषयकत्वे धर्मिज्ञानं विषयविषयकत्वे च धर्मितावच्छेदकत्वग्रहः प्रयोजकः इति पृथक् प्रयोजकप्रयुक्तत्वादित्यर्थः । इत्याशङ्क्य यावत्पदवैयर्थ्यमाशङ्क्य । एकप्रयुक्तोभयग्राहकताकपदविशेषघटितसामग्रीग्राह्यताप्रयुक्तसिद्धसाधनवारकतामिति । एका या 'विषयघटितप्रमापदार्थनिरूपिता' प्रमापदनिष्ठा शक्तिः तत्प्रयुक्ता या ज्ञानग्राहकता या च विषयग्राहकता तत्कं यत्प्रमापदं तद्घटितसामग्र्याः साध्यघटकतया तज्जन्यग्रहविषयत्वस्य प्रमात्वे स्वीकारात्तत्प्रयुक्तसिद्धसाधनवारकतामित्यर्थः । तस्याह यावत्पदस्याह, दीधितौ—एकयैव शक्त्या इति । प्रमापदं यथार्थज्ञानविषयकशाब्दजनकं भवतु इति याथार्थ्यविशिष्टज्ञानविषयकबोधजनकत्वप्रकारतानिरूपितभगवदिच्छीयविशेष्यताया एकस्या एव सत्त्वेनेत्यर्थः । विषयोपरक्तज्ञानग्राहकेणेति । घटत्वादिविषयघटितं यद् घटत्ववति घटत्वप्रकारकत्वरूपं याथार्थ्यं तद्विशिष्टज्ञानग्राहकेणेत्यर्थः । प्रामाण्यग्राहिणा तद्वति तत्प्रकारकज्ञानत्वग्राहिणा । सिद्धसाधनवारणायेति । प्रमापदनिष्ठैकशक्तिप्रयुक्ता ज्ञानग्राहकता विषयग्राहकता च तन्निरूपकप्रमापदघटितसामग्रीजन्यग्रहविषयत्वस्य न्यायमतेन प्रमात्वे सत्त्वात्सिद्धसाधनवारणायेत्यर्थः । टीकायां—पदैक्येऽपि प्रमापदस्यैकत्वेऽपि । विशेषणविशेष्यभेदेन तद्वति तत्प्रकारकत्वरूपविशेषणस्य ज्ञानरूपविशेष्यस्य च भेदेन, शक्तिरूपप्रयोजकभेदात् शाब्दबोधप्रयोजिका या भगवदिच्छारूपा शक्तिः तस्या याथार्थ्यरूपविशेषणे ज्ञानरूपे च विशेष्ये पृथग्विषयतासम्बन्धेन सत्त्वादित्यर्थः । न तादृशसामग्रीसङ्ग्रह इति । न तादृशप्रमापदघटितसामग्रीसङ्ग्रह इत्यर्थः । इति हेतोः । तदैक्याभिधानमिति । शक्तिरूपप्रयोजकस्यैक्यमभिहितमित्यर्थः । एकयैव शक्त्येति ग्रन्थेनेति शेषः । तथा च प्रमापदं यथार्थज्ञानविषयकशाब्दं जनयतु इतीच्छाविशेष्यतायाः

तद्धि धात्वर्थतावच्छेदकज्ञानत्वपुरस्कारेणैव यथार्थज्ञानमभिधत्ते ।

---

**ननु प्रमापदं यथार्थानुभवत्वविशिष्टे एव शक्तम्, न तु यथार्थज्ञानत्वविशिष्टे; स्मृतिकरणे प्रमाणव्यवहारविरहात् । एवं चानुभवत्वजातिमङ्गीकुर्वतां नैयायिकानां न प्रमापदस्य ज्ञानत्वघटितप्रामाण्यग्राहकत्वमित्याशङ्कां निरस्यति—तद्धीति । तत्=प्रमापदम् । ज्ञानत्वपुरस्कारेणैवेति । ज्ञानत्वघटितप्रामाण्यप्रकारेणैवेत्यर्थः । एवकारेण यथार्थानुभवत्वविशिष्टव्यवच्छेदः । प्रकर्षादिद्योतकोपसर्गपूर्वकधातोः प्रकर्षादिसहितशक्यतावच्छेदकावच्छिन्नवाचकतानियमादिति भावः । उपसर्गस्तु शक्यतावच्छेदककोटौ निविशतां न वेत्यन्यदेतत् ।**

---

याथार्थ्यविशिष्टज्ञानविषयकशाब्दजनकत्वप्रकारतानिरूपिता भगवदिच्छीयायाः एकस्याः सत्त्वेन विशेषणविशेष्योभयविषयकत्वेन पृथक्प्रयोजकप्रयुक्तेति भावः । **विषयघटितयाथार्थ्यविशिष्टेत्यर्थं इति ।** घटत्ववति घटत्वप्रकारकत्वरूपं यद् घटत्वादिविषयघटितं याथार्थ्यं तद्विशिष्टेत्यर्थः । ननु प्रमाशब्दे प्रशब्देनैव याथार्थ्यरूपप्रकर्ष उच्यते, धातोस्तादृशविशिष्टार्थे शक्तिकल्पने गौरवादिति नैकप्रयोजकप्रयुक्तत्वमत आह – **द्योतकतयेति ।** सूचकतयेत्यर्थः । न याथार्थ्यरूपप्रकर्षे न तद्वति तत्प्रकारकत्वरूपविशेषणे । **स्वतन्त्रशक्तिरिति ।** प्रशब्दात्प्रकर्षरूपोऽर्थो बोद्धव्य इतीश्वरेच्छाया अनङ्गीकारादिति भावः ।

**यथार्थानुभवत्वविशिष्टे एवेति ।** तद्वति तत्प्रकारकानुभवः प्रमेति लक्षणादिति भावः । एवकारव्यवच्छेद्यमाह—**न त्विति । यथार्थज्ञानत्वविशिष्ट इति ।** तद्वति तत्प्रकारकत्वविशिष्टज्ञानत्वावच्छिन्ने न प्रमापदशक्तिरित्यर्थः । तत्र युक्तिमाह - **स्मृतिकरणे इति ।** अनुभवादावित्यर्थः । **प्रमाणव्यवहारविरहादिति ।** तद्वति तत्प्रकारकज्ञानस्य प्रमापदवाच्यत्वे प्रमापदेन स्मृतेरपि ग्रहणात्तत्करणस्य प्रमाणपदवाच्यत्वापत्तेरिति भावः । एवं प्रमापदस्य तादृशानुभवपरत्वे । तद्वति तत्प्रकारकज्ञानत्वापेक्षया गौरवमपि नास्तीत्याह –**अनुभवत्वजातिमङ्गीकुर्वतामिति ।** तथा च नैयायिकैरनुभवत्वजातेः स्वीकारात्तस्य च शक्यतावच्छेदकत्वे न गौरवमिति भावः । प्रमापदस्य तद्वति तत्प्रकारकानुभवपरप्रमापदस्य । **न ज्ञानत्वघटितप्रामाण्यग्राहकत्वमिति ।** तद्वति तत्प्रकारकज्ञानत्वरूपं ज्ञानत्वघटितं यत्प्रामाण्यं तद्विषयकग्रहजनकत्वाभावादित्यर्थः । तथा च प्रमापदजन्यज्ञानसामग्र्या ज्ञानग्राहकत्वाभावेन ज्ञानग्राहकताप्रयुक्तविषयग्राहकत्वाभावेन साध्याघटकतया सिद्धसाधनवारणसम्भवे यावत्पदोपादानं व्यर्थमेव स्यादिति भावः । इत्याशङ्कां यावत्पदवैयर्थ्यशङ्काम् ।

दीधितौ – **तद्धीति ।** प्रमापदं हीत्यर्थः । **धात्वर्थतावच्छेदकपुरस्कारेणैवेति ।** माधात्वर्थतावच्छेदकं यत् ज्ञानत्वं तत्प्रकारेणैवेत्यर्थः । एवकारेणानुभवत्वव्यावृत्तिः । **ज्ञानत्वघटितप्रामाण्यप्रकारेणैवेति ।** ज्ञानत्वघटितं यत्तद्वति तत्प्रकारकज्ञानत्वरूपं प्रामाण्यं तत्प्रकारेणेत्यर्थः । यथार्थज्ञानत्वमेव प्रमापदशक्यतावच्छेदकमिति भावः । तथा च ज्ञानग्राहकताप्रयुक्तविषयग्राहकता या उक्तशाब्दसामग्र्या अपि साध्यघटकतया तामादाय सिद्धसाधनवारणाय यावत्पदोपादानमिति भावः ।

स्मृतिहेतोः प्रमाणान्तरतापत्तेस्तु भीतास्तान्त्रिकाः शास्त्रे प्रमाव्यवहारौपयिकं स्मृतिव्यावृत्तं रूपमनुमन्यन्ते। भ्रमपदेन प्रामाण्याग्रहाद् बाधवारणाय—तदप्रामाण्येति।

---

स्मृतौ तान्त्रिकाणां प्रमाव्यवहारं शास्त्रे प्रमापदस्य पारिभाषिकतया वारयति—स्मृतीति। प्रमाणान्तरतापत्तेरिति। प्रमाणान्तरव्यवहारविषयतापत्तेः। स्मृतिव्यावृत्तं रूपं यथार्थानुभवत्वं प्रमाव्यवहारौपयिकमनुमन्यन्त इत्यन्वयः।

नन्वेवमपि अप्रामाण्याग्राहकेत्यस्य वैयर्थ्यम्, भ्रमग्राहकानुमित्यादेः उक्तविशेषणेन वारणात्, तदग्राह्यत्वेऽपि बाधासम्भवादित्यत आह—भ्रमपदेनेति। एकयैव शक्त्या विषयघटितमूर्तिकभ्रमत्वविशिष्टबोधकेनेति शेषः। न च भ्रमपदस्य प्रामाण्याश्रया-

---

ननु प्रमापदं यदि धात्वर्थतावच्छेदकज्ञानत्वपुरस्कारेणैव यथार्थज्ञानमभिधत्ते तदा स्मृतेरपि प्रमात्वापत्त्या तत्करणस्य प्रमाणान्तरतापत्तिरत आह—स्मृताविति। संस्कारमात्रजन्यज्ञाने इत्यर्थः। तान्त्रिकाणां शास्त्रकाराणां, प्रमाव्यवहारं प्रमापदप्रयोगम्। पारिभाषिकत्वयेति। आधुनिकसङ्केतशालितयेत्यर्थः। यद्वाऽऽधुनिकसङ्केतशालि स्यात्पारिभाषिकमिति जगदीशोक्तेः। प्रमाणान्तरव्यवहारविषयतापत्तेरिति। प्रमाणपदव्यवहार्यतापत्तेरित्यर्थः। अनुमन्यन्त इति। प्रमापदप्रवृत्तिनिमित्तत्वेन यथार्थानुभवत्वं स्वीकुर्वन्ति इत्यर्थः।

एवमपि यावत्पदस्य सार्थक्येऽपि। वैयर्थ्यमिति। तदनुपादाने इदं ज्ञानमप्रमेति ज्ञानग्राहकसामग्रीजन्यग्रहविषयत्वस्य प्रमात्वेऽसत्त्वात् प्रसक्तस्य बाधस्यापत्तिर्न सम्भवति, तादृशसामग्र्या उक्तविशेषणेनैव वारणादित्याह—भ्रमग्राहकानुमित्यादेरिति। इदं ज्ञानं भ्रम इत्याद्यनुमितिसामग्र्या इत्यर्थः। उक्तविशेषणेन ज्ञानग्राहकताप्रयुक्तं यस्या विषयग्राहकत्वमिति विशेषणेन वारणादिति। तदभाववति तत्प्रकारकत्वरूपविषयग्राहकत्वस्य विशेष्यीभूतज्ञानग्राहकताप्रयुक्तत्वाभावेन भ्रमानुमितिसामग्र्याः साध्याघटकत्वादिति भावः। तदग्राह्यत्वेऽपि। इदं ज्ञानं भ्रम इत्याद्यनुमितिसामग्रीजन्यग्रहविषयत्वस्य प्रमात्वेऽसत्त्वेऽपि। बाधासम्भवादिति। भ्रमानुमितिसामग्र्याः साध्याघटकत्वादिति भावः। अतः बाधसम्पादनार्थमिति यावत्। एकयैव शक्त्येति। तदभाववति तत्प्रकारकत्वरूपविशेषणस्य ज्ञानरूपविशेष्यस्य च भेदेऽपि शक्तेरैक्यादिति भावः। विषयघटितमूर्त्तिकभ्रमत्वविशिष्टबोधकेनेति। रजतत्वादिविषयघटितं यद् भ्रमत्वं 'रजतत्वाभाववति रजतत्वप्रकारकज्ञानत्वं' तद्विशिष्टभ्रमबोधकेन भ्रमपदेनेति भावः। तथा च एकाया भ्रमपदनिष्ठा शक्तिः तत्प्रयुक्ता या ज्ञानविषयोभयग्राहकता तन्निरूपकभ्रमपदेनेति यावत्। प्रामाण्याग्रहादिति। तादृशभ्रमपदघटितसामग्रीजन्यग्रहविषयत्वस्य प्रमात्वेऽसत्त्वादित्यर्थः। बाधवारणाय बाधापत्तिवारणायेत्यर्थः।

कस्मिंश्चिदपि प्रमात्वे सामान्यतो यावज्ज्ञानग्राहकसामग्रीग्राह्यत्वं न प्रसिद्धमित्यप्रसिद्धिवारणाय स्वाश्रययावज्ज्ञानग्राहकत्वं सामग्र्यां निवेशितम्, एवं च तत एव भ्रमग्राहकशाब्दसामग्र्या वारणं तस्याः प्रामाण्याश्रयग्राहकत्वाभावादिति अप्रामाण्याग्राह-

ग्राहकत्वात् न तदग्राह्यत्वेऽपि बाध इति वाच्यम् । प्रमाया अप्यंशे भ्रमत्वसम्भवेन भ्रमपदस्य तादृशज्ञानबोधकतया प्रामाण्याश्रयबोधकत्वात् ।

सर्वधीयाथार्थ्यमते भ्रमपदं तदभाववद्धर्मिसाकाङ्क्षतद्विषयकज्ञानत्वेन तत्प्रमामेव बोधयति । एतच्च समाधिसौकर्येण । अग्राहकान्तानुपादाने गुरुमते स्वतन्त्राप्रामाण्योपस्थितिद्वितीयक्षणोत्पन्नप्रामाण्याश्रयविषयकस्वप्रकाशात्मकव्यवसायसामग्र्या मिश्रमते चोपनीताप्रामाण्यविषयकानुव्यवसायसामग्र्या ज्ञानभानाप्रयोजकाप्रामाण्योपस्थितिप्रयुक्ताऽप्रामाण्यघटकविषयग्राहकताकत्वेऽपि तत्प्रयुक्तप्रामाण्यघटकधर्मिग्राहकताकत्वेनोक्तविशेषणेन वारणासम्भवात्, तदग्राह्यतयापि बाधस्य निष्प्रत्यूहत्वादिति वदन्ति ।

---

कत्वदलं व्यर्थमेवेत्याशङ्कते—न चेति । भ्रमपदस्येति । भ्रमत्वबोधकभ्रमपदस्येत्यर्थः । प्रामाण्याश्रयाग्राहकत्वादिति । तद्वति तत्प्रकारकज्ञानत्वाश्रयज्ञानविषयकग्रहाजनकत्वादित्यर्थः । न तदग्राह्यत्वेऽपि बाध इति । तादृशभ्रमपदघटितसामग्रीजन्यग्रहविषयत्वस्य प्रमात्वेऽसत्त्वेऽपि न बाध इत्यर्थः । तादृशभ्रमपदघटितसामग्र्याः प्रामाण्याश्रयग्रहजनकत्वविशेषणेनैव वारणसम्भवादिति भावः । समाधत्ते—प्रमाया अपीति । तद्वति तत्प्रकारकज्ञानस्यापीत्यर्थः । अंशतो भ्रमत्वसम्भवेनेति । आंशिकाऽप्रमात्वसम्भवेनेत्यर्थः । तादृशज्ञानबोधकतया तद्वति तत्प्रकारकज्ञानबोधकतया । प्रामाण्याश्रयबोधकत्वादिति । साध्यघटकप्रामाण्याश्रयग्रहजनकत्वविशेषणेन भ्रमपदस्य सङ्ग्रहादित्यर्थः ।

ननु सर्वेषां ज्ञानानां यथार्थत्वाद् भ्रमपदेनापि यथार्थज्ञानस्यैव ग्रहणात्तद्विषयत्वस्य प्रामाण्ये सत्त्वान्न बाध इत्यत आह—सर्वधीयाथार्थ्यमत इति । प्रभाकरमते इत्यर्थः । तदभाववद्धर्मिसाकाङ्क्षतद्विषयकज्ञानत्वेन तत्प्रमामेव बोधयति तादृशघटत्वाभाववद्धर्मिज्ञानसहकृतं तादृशधर्मविषयकज्ञानत्वेन घटत्वादिप्रमारूपमर्थमभिधत्ते । तथा च तत्र प्रामाण्यस्याऽविषयतया बाधस्तन्मतेऽपि न क्षतिमावहति । एतच्च अप्रामाण्याग्राहकत्वविशेषणस्योक्तरीत्या व्यावृत्तिदानं च, अग्राहकान्तानुपादाने तदप्रामाण्याग्राहकत्वानुपादाने, गुरुमते प्रभाकरमते । स्वतन्त्राप्रामाण्योपस्थितिद्वितीयक्षणोत्पन्नप्रामाण्याश्रयविषयकस्वप्रकाशात्मकव्यवसायसामग्र्या इति । इदं ज्ञानमप्रमेति शब्दात् अप्रामाण्यविषयकस्वतन्त्रोपस्थितिद्वितीयक्षणे उत्पन्नो य इन्द्रियसन्निकर्षादिना प्रामाण्याश्रयविषयकस्वप्रकाशात्मको घटमहं जानामीति व्यवसायः तदीयेन्द्रियसन्निकर्षादिघटिता या सामग्री तस्या इत्यर्थः । अस्याश्चाग्रे ज्ञानभानाप्रयोजकेत्यनेन सम्बन्धः । उपनीताप्रामाण्यविषयकानुव्यवसायसामग्र्याः ज्ञानभानाप्रयोजकाऽप्रामाण्योपस्थितिप्रयुक्ताऽप्रामाण्यघटकविषयग्राहकताकत्वेऽपि । ज्ञानभानप्रयोजको यः व्यवसायात्ममनःसंयोगादिः तद्भिन्ना याऽप्रामाण्योपस्थितिस्तत्प्रयोज्या या तदभाववति तत्प्रकारत्वरूपाऽप्रामाण्यघटकविषयभासकता तत्कत्वस्य सत्त्वेऽपि । तथा च ज्ञानभानप्रयोजकसामग्रीप्रयुक्तविषयग्राहकताकत्वाभावादुक्तसामग्र्यसङ्ग्रह इति भावः । सामग्री गृह्यत एवेति । तत्प्रयुक्तेति । ज्ञानभानप्रयोजकभिन्ना प्रामाण्योपस्थित्यप्रयोज्या या घटत्ववति घटत्वप्रकारकत्वरूपप्रामाण्यनिविष्टघटादिरूपविषयग्राहकतातत्कत्वस्य तत्र सत्त्वेनेत्यर्थः ।

तन्न। गुरुमते विषयग्राहकताया ज्ञानग्राहकताप्रयोजकाप्रयुक्तत्वात्, प्रत्युत विषयग्राहकताप्रयोजकस्यैव ज्ञानग्राहकताप्रयोजकत्वात्। सर्वस्यैव विषयग्रहस्य आत्मविषयत्वात्। अस्तु वा तत्र यथातथाभिधानम्।

---

**विषयग्राहकतायाः**—विषयविषयतायाः। ज्ञानग्राहकताप्रयोजकाप्रयुक्तत्वादिति। ज्ञानभानप्रयोजकत्वेन तत्प्रयोजकाप्रयुक्तत्वादित्यर्थः। एकसामग्र्या एव ज्ञानविषयभासकतयायथाश्रुताऽसङ्गतेः।

अयम्भावः—व्यवसायसामग्र्याः न ज्ञानभानप्रयोजकत्वेन घटादिरूपविषयग्राहकता, ज्ञानं गुण इत्याकारकघटज्ञानादिबोधेऽपि ज्ञानभानप्रयोजकसत्त्वेन घटादिभानप्रसङ्गात्,

---

**उक्तविशेषणेनेति**। ज्ञानग्राहकताप्रयोजकसामग्रीप्रयुक्तविषयग्राहकताकत्वरूपसामग्रीविशेषणेनेत्यर्थः। **वारणाऽसम्भवादिति**। अनुव्यवसायसामग्र्याः सङ्ग्रहापत्त्येत्यर्थः। **तद्ग्राह्यतयाऽपीति**। तादृशसामग्रीजन्यग्रहविषयत्वस्य प्रमात्वेऽसत्त्वेनेत्यर्थः। **बाधस्य निष्प्रत्यूहत्वादिति**। मीमांसकमतेन बाधसम्भवादित्यर्थः। **वदन्तीति**। अत्र केचिदित्यादिना पक्षधरमिश्रा इति शेषः।

यादृशसामग्रीनिष्ठविषयग्राहकता ज्ञानग्राहकताप्रयोज्या तादृशसामग्रीजन्येत्यादिमिश्रमतं दूषयति—**तन्नेति**। विषयग्राहकतायाः विषयभानस्य। **ज्ञानग्राहकताप्रयोजकाप्रयुक्तत्वादिति**। विषयग्राहकता न ज्ञानग्राहकताप्रयोज्येत्यर्थः। **प्रत्युतेति**। किन्तु इत्यर्थः। **विषयग्राहकताप्रयोजकस्यैवेति**। विषयग्राहकताया एवेत्यर्थः। एवकारेण ज्ञानग्राहकताव्यवच्छेदः। **ज्ञानग्राहकताप्रयोजकत्वादिति**। तथा च विषयग्राहकताज्ञानग्राहकताप्रयोजिका इत्यर्थः। तथा च यादृशसामग्रीनिष्ठविषयग्राहकता ज्ञानग्राहकताप्रयोज्या तादृशसामग्र्या अप्रसिद्ध्या साध्याप्रसिद्धेरिति भावः।

ज्ञानग्राहकताप्रयोजकाप्रयुक्तत्वादित्यस्यार्थमाह—**ज्ञानभानप्रयोजकत्वेन तत्प्रयोजकाप्रयुक्तत्वादिति**। ज्ञानभानप्रयोजकत्वावच्छिन्ना या विषयभानप्रयोजकता तन्निरूपितप्रयोज्यत्वाभावादिति भावः। तथा च ज्ञानभानप्रयोजकत्वावच्छिन्ना या विषयभानप्रयोजकता तत्प्रयोज्यत्वं विषयभाने नास्ति। यथाश्रुतार्थे ग्रन्थासङ्गतिमाह—**एकसामग्र्या इति**। गुरुमते स्वविषयकत्वेन ज्ञानस्य एकसामग्र्या एव ज्ञानविषयोभयभासकतया विषयग्राहकतायां ज्ञानग्राहकताप्रयोजकाप्रयुक्तत्वादिति ग्रन्थासङ्गतेरिति भावः। विषयभाने ज्ञानभानप्रयोजकत्वावच्छिन्नविषयभानप्रयोजकतानिरूपितप्रयोज्यताया एव सत्त्वात् भट्टाचार्योक्तार्थे ग्रन्थासङ्गतिर्नास्तीति समाधत्ते—**अयम्भाव इति**। व्यवसायसामग्र्याः अयं घट इति ज्ञानजनकीभूतेन्द्रियार्थसन्निकर्षालोकसंयोगादिसामग्र्याः। **न ज्ञानभानप्रयोजकत्वेन घटादिरूपविषयग्राहकतेति**। तादृशसामग्रीनिष्ठविषयग्राहकता न ज्ञानभानप्रयोजकत्वावच्छिन्नेत्यर्थः। तादृशसामग्रीनिष्ठविषयग्राहकतायां ज्ञानभानप्रयोजकत्वावच्छिन्नत्वस्वीकारे आपत्तिमाह—**ज्ञानं गुण इति**। **घटज्ञानादिबोधेऽपीति**। घटविषयकज्ञानविषयकबाधेऽपीत्यर्थः। अस्य घटादिभानप्रसङ्गादित्यनेनान्वयः। **ज्ञानभानप्रयोजकसत्त्वेनेति**। तादृशशाब्दबोधसामग्र्यां ज्ञानभानप्रयोजकत्वसत्त्वादित्यर्थः।

अपि तु घटतत्सन्निकर्षादिघटितसमुदायत्वेनैव तथात्वमिति । विषयग्राहकताप्रयोजकस्यैवेति । विषयभानप्रयोजकत्वावच्छिन्नस्यैवेत्यर्थः । ज्ञानग्राहकताप्रयोजकत्वात्=ज्ञानभानप्रयोजकत्वात् ।

विषयभासकत्वेन ज्ञानभानप्रयोजकत्वं विपरीतवत्तदा न सम्भवेत् यदि विषयभानप्रयोजकसमुदायसत्त्वेऽपि कदाचिज्ज्ञानभानं न स्यात् । न चैवमित्याह—सर्वस्यैवेति । आत्मेति । दृष्टान्तविधया उक्तम् ।

ननु यत्र ग्रहे ज्ञानविषययोरेकभानप्रयोजकत्वेन अपरभानप्रयोजकता तादृशी सामग्री विवक्षणीया, एवं च स्वप्रकाशकसामग्र्या विषयभासकत्वेन ज्ञानभासकत्वादेव सङ्ग्रहः । मिश्रमते घटज्ञानमिति शाब्दस्थले यथा ज्ञानभासकत्वेन न घटभासकता घटपदासत्त्वे-

---

घटादिभानप्रसङ्गादिति । घटादिविषयभानापत्तेरित्यर्थः । ननु गुरुमते घटादिविषयभानप्रयोजकं किमित्याकाङ्क्षायामाह—अपि तु इति । विषयतासम्बन्धेन प्रत्यक्षं प्रति तादात्म्येन विषयस्य कारणत्वादाह—घटतत्सन्निकर्षेति । समुदायत्वेनैवेति । एवकारेण ज्ञानभानप्रयोजकत्वेन विषयभासकत्वस्य व्यावृत्तिः । तथात्वादिति । विषयभानप्रयोजकत्वादित्यर्थः । विषयभानप्रयोजकत्वावच्छिन्नस्यैवेत्यर्थः । एवकारेण ज्ञानभानप्रयोजकत्वावच्छिन्नस्य व्यावृत्तिः । घटादिरूपविषयविषयताप्रयोजकस्येन्द्रियसन्निकर्षादेरित्यर्थः । ज्ञानभानप्रयोजकत्वादिति । ज्ञानविषयकत्वप्रयोजकत्वादित्यर्थः । विपरीतवदिति । ज्ञानभासकत्वेन विषयभानप्रयोजकत्वमिति विपक्षस्य यथा बाधस्तद्वत् तदा बाधितं भवेदित्यर्थः । यदीति । घटादिरूपविषयभानप्रयोजकेन्द्रियसन्निकर्षादिघटितसमुदायसमवधाने सत्यपि कदाचिज्ज्ञानभानं न भवेदित्यर्थः । न चैवमिति । किन्तु भवत्येवेत्यर्थः । सर्वस्यैवेति । गुरुमते सकलस्यापि ज्ञानस्य स्वविषयकत्वादित्यर्थः ।

यादृशसामग्रीनिष्ठविषयग्राहकता ज्ञानग्राहकताप्रयोजिकेति गुरुमतं सङ्गृह्णाति—नन्विति । यत्र ग्रहे इति । यादृशसामग्रीजन्यग्रहे इत्यर्थः । ज्ञानविषययोरेकभानप्रयोजकत्वेनेति । ज्ञानविषययोर्मध्ये यदेकतरंज्ञानं विषयो वा अन्यतरभानप्रयोजकत्वेन तदन्यभानप्रयोजकता तादृशी सामग्री इत्यर्थः । तथा च ज्ञानभानप्रयोजकत्वावच्छिन्नविषयभानप्रयोजकताकत्वं, विषयभानप्रयोजकत्वावच्छिन्नज्ञानभानप्रयोजकताकत्वैतदन्यतरवत्सामग्रीजन्येत्यादिकं साध्यम् । गुरुमते सङ्गमयति—एवं चेति । एवं विवक्षणे चेत्यर्थः । स्वप्रकाशकसामग्र्या इति । व्यवसायजनकसामग्र्या इत्यर्थः । विषयभासकत्वेनैव । विषयभानप्रयोजकत्वेनैव । ज्ञानभासकत्वादिति । ज्ञानभानप्रयोजकत्वात् । विषयभानप्रयोजकत्वावच्छिन्नज्ञानभानप्रयोजकत्वादित्यर्थः । सङ्ग्रहः साध्यघटकत्वम् । तथा च गुरुमतसिद्धव्यवसायसामग्री विषयभानप्रयोजकत्वावच्छिन्नज्ञानभानप्रयोजकताकं सामग्रीपदेन सङ्ग्राह्या । अथ च तज्जन्यव्यवसायात्मकग्रहविषयत्वस्य प्रमात्वे सत्त्वेन सङ्गतिरिति भावः । घटज्ञानमिति शाब्दसामग्रीं वारयति—मिश्रमत इति । ज्ञानभासकत्वेन न घटभासकतेति । घटभानप्रयोजकता न ज्ञानभानप्रयोजकत्वावच्छिन्नेत्यर्थः ।

तथापि मिश्रमते दुर्वचं ज्ञानविषयग्राहकतयोरनतिप्रसक्तमेकप्रयोजकप्रयोज्यत्वम् ।

ऽपि तद्भानप्रसङ्गात् । तथा घटभासकत्वेनापि न ज्ञानभासकता, ज्ञानपदासत्त्वेऽपि तद्भानप्रसङ्गात् इत्यत आह—अस्तु वेति । तथाभिधानम्=स्वप्रकाशसामग्रीसाधारणविशेषणाभिधानम् ।

दुर्वचमिति । यथाश्रुतस्य योग्यताज्ञानादिकमादाय घटज्ञानमिति शाब्दबोधादिगततदुभयभानसाधारणत्वात् एकप्रयोजकत्वेनापरप्रयोजकताविवक्षणे चानुव्यवसायसामग्रीघटकव्यवसायादेर्ज्ञानविषययोरेकतरभासकत्वेनापरभानप्रयोजकत्वे केवलज्ञानग्रहे विषयस्य, केवलविषयग्रहे च ज्ञानस्य भानप्रसङ्गात्, विनिगमनाविरहाच्च तदुपगमा-

तत्र हेतुमाह—घटपदासत्त्वेऽपीति । तद्भानप्रसङ्गादिति । घटभानप्रसङ्गादित्यर्थः । प्रकृते आह—तथेति । घटभानप्रयोजकत्वावच्छिन्ना न ज्ञानभानप्रयोजकतेत्यर्थः । अत्र हेतुमाह—ज्ञानपदासत्त्वेऽपीति । तद्भानप्रसङ्गादिति । ज्ञानभानप्रसङ्गादित्यर्थः । स्वप्रकाशसामग्रीसाधारणेति । गुरुमतसिद्धव्यवसायसामग्रीसङ्ग्राहकेत्यर्थः । एकप्रयोजकप्रयोज्यज्ञानभानविषयभानप्रयोजकतावती या सामग्रीत्यादिरीत्योभयसाधारणाभिधानमित्यर्थः ।

दीधितौ—तथापीति । यथातथाभिधानमित्यनेन एकप्रयोजकप्रयोज्यज्ञानभानविषयभानप्रयोजकतावती या सामग्रीत्यभिधानेनोक्तानुपपत्तिपरिहारेऽपि इत्यर्थः । मिश्रमते मुरारिमिश्रमते, ज्ञानविषयग्राहकतयोरनतिप्रसक्तमेकप्रयोजकप्रयोज्यत्वं दुर्वचमित्यन्वयः । ज्ञानविषयग्राहकतयोरिति । ज्ञानग्राहकताविषयग्राहकतयोरित्यर्थः । तथा च ज्ञानविषयता विषयविषयतेत्युभयगतमनतिप्रसक्तं सदेकप्रयोजकप्रयोज्यत्वं दुर्वचमिति भावः । अतिप्रसक्तिमाह—यथाश्रुतस्येति । ज्ञानभानप्रयोजकत्वावच्छिन्नविषयभानप्रयोजकताकत्वरूपविशेषणस्येत्यर्थः । योग्यताज्ञानादिकमादायेति । प्रकृतप्रामाण्याश्रयज्ञानग्राहकताप्रयोजकसामग्रीप्रयुक्तविषयग्राहकताकसामग्रीपदेनेत्यादिः । घटज्ञानमिति शाब्दबोधादिगततदुभयसाधारणत्वादिति । घटज्ञानमिति शाब्दवृत्ति यद्विषयज्ञानभानं तादृशोभयभानप्रयोजकसामग्रीसाधारणत्वादित्यर्थः । एतच्च पूर्वमपि एतेन (      ) इत्यादिनोक्तं भट्टाचार्येण । तथा च प्रकृतप्रामाण्याश्रयज्ञानग्राहकताप्रयोजकसामग्रीप्रयुक्तविषयग्राहकताकसामग्रीपदेन घटज्ञानमिति शाब्दसामग्र्या अपि सङ्ग्रहेण साध्यघटकतया तज्जन्यग्रहविषयत्वस्य प्रमात्वेऽसत्त्वेन बाध इति भावः । प्रकारान्तरानुसरणेऽपि दोषमाह—एकप्रयोजकत्वेनापरप्रयोजकताविवक्षणे चेति । ज्ञानविषययोरन्यतरभानप्रयोजकत्वेन तदन्यभानप्रयोजकत्वविवक्षायामित्यर्थः । विषयभानप्रयोजकत्वावच्छिन्नज्ञानभानप्रयोजकता, ज्ञानभानप्रयोजकत्वावच्छिन्नविषयभानप्रयोजकता एतदन्यतरवत्सामग्रीजन्यग्रहविषयत्वविवक्षायामिति भावः । केवलज्ञानग्रहे । विषयस्येति । विषयानवच्छिन्नज्ञानविषयके ज्ञानवानहमिति ज्ञाने घटादेर्भानप्रसङ्गा-

सम्भवेन तादृशसामग्र्या एवासङ्ग्रहात् । एकधर्मिपुरस्कारेण उभयभानप्रयोजकत्वविवक्षणे च घटज्ञानमित्यादौ योग्यताविशेषज्ञानादेस्तादृशज्ञानत्वादिना उभयभानप्रयोजकतया बाधवारणमशक्यम् ।

फलोपधानरूपप्रयोजकत्वविवक्षया एकैकहेतुसाधारणरूपेण ज्ञानादिभानप्रयोजकत्वनिराकरणे अनुव्यवसायादिसामग्रीघटकव्यवसायादेरपि घटज्ञानत्वादिना घटज्ञानादिभानाप्रयोजकतया व्यवसायमनःसंयुक्तसमवायादिसमुदायपर्याप्तधर्मस्यैव ज्ञानविषयोभय-

---

दित्यन्वयः । केवलविषयग्रहे ज्ञानस्य भानप्रसङ्गादित्यन्वयः । विनिगमनाविरहाच्चेति । सविषयज्ञानग्रहे विषयभानं केवलज्ञानग्रहे च न विषयभानमिति एकत्रपक्षपातियुक्तेरभावाच्चेत्यर्थः । तदभ्युपगमासम्भवेनेति । सविषयज्ञानग्रहे एव विषयभानमित्युपगमासम्भवेनेत्यर्थः । तादृशसामग्र्या एवाऽसङ्ग्रहादिति । अनुव्यवसायसामग्र्या एवासङ्ग्रहापातादित्यर्थः । एकप्रयोजकत्वेनाऽपरप्रयोजकत्वाभावादिति भावः । एकधर्मपुरस्कारेणोभयभानप्रयोजकत्वविवक्षणे चेति । प्रकृतप्रामाण्याश्रयग्रहजनकयादृशसामग्रीघटकैककारणतावच्छेदकधर्मावच्छेदेन ज्ञानविषयोभयभानप्रयोजकत्वं, तादृशसामग्रीजन्यग्रहविषयत्वविवक्षणे चेत्यर्थः । तथा चानुव्यवसायादिसामग्रीघटकव्यवसायत्वाद्यवच्छेदेन ज्ञानविषयोभयभानप्रयोजकत्वसत्त्वेन तादृशसामग्रीसङ्ग्रहः । अत्र दोषमाह—घटज्ञानमित्यादाविति । योग्यताविशेषज्ञानादेः तादृशज्ञानत्वादिनेति । प्रामाण्याश्रयशाब्दविषयकग्रहजनकयोग्यताज्ञानत्वादिनेत्यर्थः । उभयभानप्रयोजकतयेति । ज्ञानविषयोभयभानप्रयोजकतयेत्यर्थः । बाधवारणमशक्यमिति । घटज्ञानमिति शाब्दसामग्रीजन्यग्रहविषयत्वस्य प्रमात्वेऽसत्त्वेन बाधवारणाऽसम्भव इत्यर्थः ।

प्रकारान्तरेण निराकर्त्तुं प्रयतते—फलोपधानरूपप्रयोजकत्वविवक्षयेति । प्रमात्वाश्रयज्ञानग्राहकसामग्रीघटकतावच्छेदकावच्छेदेन फलोपधायकत्वरूपज्ञानविषयोभयभानप्रयोजकत्वविवक्षणे चेत्यर्थः । एकैकहेतुसाधारणरूपेणेति । तादृशसामग्रीघटकैककारणसाधारणं यत् 'केवल'योग्यताज्ञानत्वादिकं तदवच्छेदेनेत्यर्थः । ज्ञानादिभानप्रयोजकत्वनिराकरण इति । फलोपधायकत्वरूपज्ञानविषयोभयभानप्रयोजकत्वासत्त्वेन शाब्दसामग्र्या निराकृते इत्यर्थः । अनुव्यवसायादिसामग्रीघटकव्यवसायादेरपीति । अनुव्यवसायव्यवसायानुमितिजनकसामग्रीनिविष्टव्यवसायप्रागभावादीनामपीत्यर्थः । घटज्ञानत्वादिनेति । साधारणघटज्ञानत्व-घटज्ञानप्रागभावत्वादिरूपेणेत्यर्थः । घटज्ञानादिभानाप्रयोजकतयेति । एकैकहेतुघटज्ञानभानाप्रयोजकत्वेनेत्यर्थः । घटज्ञानत्वेन ज्ञानविषयोभयनिरूपितफलोपधायकत्वरूपप्रयोजकत्वाभावेनेति भावः । एतेन शाब्दसामग्रीवदनुव्यवसायादिसामग्र्याः असङ्ग्राह्यत्वं सूचितम् । अस्याः सङ्ग्राह्यत्वे शाब्दसामग्र्या अपि तुल्ययुक्त्या सङ्ग्राह्यत्वं स्यादित्याह—व्यवसाय-मनःसंयुक्तसमवायादिसमुदायपर्याप्तधर्मस्यैवेति । व्यवसायादिरूपा या सकलानुव्यवसायादिसामग्री तद्घटकनिखिलकारणपर्याप्तो यः कश्चिद्धर्मस्तस्यैवेत्यर्थः । एवकारेण तादृशसामग्रीघटकैकहेतु-

किञ्च घटज्ञानवान् घटेच्छावत्त्वादित्याद्यनुमित्या तदग्रहाद् बाधः।

---

भानप्रयोजकतावच्छेदकतया तादृशसामग्रीसङ्ग्रहे तुल्ययुक्त्या घटज्ञानमित्यादिशाब्दबोधनिष्ठतदुभयभानेऽपि घटपदज्ञानपदादिसमुदायपर्याप्तधर्मावच्छिन्नस्य प्रयोजकतया न तत्सामग्रीवारणसम्भव इति भावः।

ननु यत्र ज्ञाने विषयभानं ज्ञानभानाप्रयोजकाप्रयुक्तं तज्ज्ञानसामग्र्येव विवक्षणीया। घटज्ञानमित्यत्र ज्ञानभानाप्रयोजकं घटपदं घटभाने प्रयोजकमित्यत एव तद्व्युदासः, अनुव्यवसाये विषयभानप्रयोजको व्यवसाय एव, स च न ज्ञानभानाप्रयोजक इति तत्सामग्रीसङ्ग्रहः, स्वप्रकाशमते व्यवसायसामग्रीत्वेन व्यवसायस्य सर्वाण्येव कारणानि अविशेषेण ज्ञानभानप्रयोजकानि अतो दूषणान्तरमाह—किञ्चेति।

---

साधारणयोग्यताज्ञानत्वादेर्व्यावृत्तिः। ज्ञानविषयोभयभानप्रयोकतावच्छेदकतयेति। तादृशसामग्रीसङ्ग्रहे इति। अनुव्यवसायादिसामग्रीसङ्ग्रहसम्भवे सति तुल्ययुक्त्या समसमाधानतया, घटज्ञानमित्यादिशाब्दबोधनिष्ठतदुभयभानेऽपीति। घटज्ञानमिति यः शाब्दबोधः तद्गतौ यौ ज्ञानविषयौ तयोर्भानेऽपीत्यर्थः। घटपदज्ञानपदादिसमुदायपर्याप्तधर्मावच्छिन्नस्येति। घटपदज्ञानपदयोग्यताज्ञानादिघटितसमुदायपर्याप्तो यो धर्मस्तदवच्छिन्नस्येत्यर्थः। प्रयोजकतयेति। फलोपधायकत्वरूपप्रयोजकतयेत्यर्थः। न तत्सामग्रीवारणसम्भव इति। घटज्ञानमिति शाब्दसामग्रीवारणाऽसम्भव इत्यर्थः।

उक्तशाब्दसामग्रीं निराकरोति—नन्विति। यत्र ज्ञान इति। यादृशसामग्रीजन्यज्ञाने इत्यर्थः। विषयभानं घटादिरूपविषयविषयकत्वं, ज्ञानभानाप्रयोजकाप्रयुक्तं ज्ञानभानस्याऽप्रयोजकं यद्घटपदं तदप्रयोज्यत्वमित्यर्थः। तज्ज्ञानसामग्र्येवेति। यादृशज्ञाने विषयभानं ज्ञानभानाप्रयोजकाप्रयुक्तं तज्ज्ञानसामग्र्येवेत्यर्थः। एवकारेण तादृशसामग्रीघटकतावच्छेदेन फलोपधायकत्वरूपज्ञानविषयोभयप्रयोजकत्वव्यवच्छेदः। तादृशसामग्रीजन्यग्रहविषयत्वं फलितमिति। निराकरणप्रकारमाह—इत्यत्र इति शाब्दबोधे। ज्ञानभानाप्रयोजकमिति। ज्ञानभानप्रयोजकं ज्ञानपदं तद्भिन्नमित्यर्थः। घटपदं घटभाने प्रयोजकमिति। अत एव घटभानस्य ज्ञानभानाप्रयोजकघटपदप्रयोज्यत्वाभावादेव। तद्व्युदासः। न शाब्दसामग्रीसङ्ग्रह इति भावः। ग्राह्यसामग्रीसङ्ग्रहप्रकारमाह—अनुव्यवसाये इति। घटमहं जानामीति मानसे इत्यर्थः। विषयभानप्रयोजकः घटादिभानप्रयोजकः, व्यवसाय एव एवकारेण घटपदादीनां व्यावृत्तिः। स च व्यवसायश्च। न ज्ञानभानाप्रयोजक इति। ज्ञानभानप्रयोजकोऽपीति भावः। इति अतः, विषयभानस्य ज्ञानभानाप्रयोजकाप्रयोज्यत्वात्, तत्सङ्ग्रहः अनुव्यवसायसामग्रीसङ्ग्रहः। गुरुमतसिद्धसामग्रीसङ्ग्रहप्रकारमाह—स्वप्रकाशमते इति। व्यवसायसामग्रीत्वेन व्यवसायजनकसामग्रीत्वेन, अविशेषेण सामान्यतः, ज्ञानभानप्रयोजकानि ज्ञानविषयकज्ञानजनकानि।

उक्तशाब्दसामग्र्या असङ्ग्रहेऽपि दोषान्तरमाह—किञ्चेति। दीधितौ—तदग्रहादिति। प्रमात्वस्याऽग्रहादित्यर्थः। तादृशग्रहविषयत्वस्य प्रमात्वेऽसत्त्वादिति भावः।

न चात्र ज्ञानग्राहकतायां व्यापकत्वं घटग्राहकतायां तदवच्छेदकत्वं प्रयोजकत्वम् इति नैकमुभयग्राहकताप्रयोजकम् ? प्रमापदेऽपि शक्ति-तदवच्छेदकत्वयोरेव ज्ञानविषयग्राहकतायां प्रयोजकत्वात् ।

---

यद्यपि विषयोपरक्तज्ञानानुमितिस्थले एकस्य परामर्शादेरेव विधेयतया ज्ञानस्य विधेयतावच्छेदकतया विषयस्य भासकता, न तु व्यापकतायास्तदवच्छेदकत्वस्य च ज्ञानं विधेयतत्त्वावच्छेदकविषयकानुमितौ पृथक् कारणम्, तथापि प्रयोजकभेदं विना विधेयादिविषयतानां वैचित्र्यानुपपत्त्या परामर्शीयतद्विषयनिष्ठविलक्षणविषयतानाम् अनुमितौ विलक्षणतत्तद्विषयभानप्रयोजकत्वमावश्यकमित्युक्तानुमितिसामग्रीव्यावृत्तिरित्याशङ्कते— न चेति ।

व्यापकत्वम् = व्यापकत्वेन परामर्शविषयत्वम् । तदवच्छेदकत्वम् = व्यापकतावच्छेदकत्वेन तद्विषयत्वम् । शक्तितदवच्छेदकत्वयोरेव= शक्यत्वतदवच्छेदकत्वावच्छिन्नज्ञानविषयत्वयोरेव । प्रयोजकत्वात्=तुल्ययुक्त्या प्रयोजकत्वापातात् । तथा चोक्तयावत्पदव्यावृत्त्यसङ्गतिरिति भावः ।

ननु शक्यतावच्छेदकेऽपि शक्त्युपगमेन शक्यतया तद्भानमेव शाब्दबोधे तद्भानप्रयोजकम् ।

---

तथा च प्रमात्वाश्रयानुमित्यात्मकग्रहजनकपरामर्शस्य ज्ञानभानप्रयोजकत्वात् विषयभानप्रयोजकत्वाच्च तादृशपरामर्शजन्यग्रहविषयत्वस्य प्रमात्वेऽसत्त्वाद् बाध इत्याशयः । यद्यपीति । विषयोपरक्तज्ञानानुमितिस्थले घटादिरूपविषयानवच्छिन्नज्ञानप्रकारकानुमितिस्थले । एकस्य केवलस्य परामर्शस्य ।

व्यापकत्वकम् इति । वि, आप्, ण्वुल् इति व्यापकः । तस्य भावस्तत्त्वं व्यापकत्वम् । तच्च स्वसमानाधिकरणाऽभावाप्रतियोगित्वम्, तथा—स्वसमानाधिकरणाऽत्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वम्, एवं स्वसमानाधिकरणभेदप्रतियोगितानवच्छेदकत्वम् । यथा वह्नेर्धूमव्यापकत्वम् । सत्ताजातेर्घटत्व-पटत्व-द्रव्यत्वादिव्यापकत्वम् ।

तदवच्छेदकत्वम् इति । व्यापकतावच्छेदकत्वम् इत्यर्थः । तच्च स्वसमानाधिकरणाऽत्यन्ताभावप्रतियोगितानवच्छेदकत्वम् । यथा वह्नित्वं धूमव्यापकतावच्छेदकम् । इदमेव व्यापकत्वं ज्ञानग्राहकतायां घटग्राहकतायाञ्च व्यापकतावच्छेदकत्वं बोध्यम् । व्यापकत्वेन परामर्शविषयत्वम्=व्यापकत्वप्रकारकपरामर्शविषयत्वम् । व्यापकतावच्छेदकत्वेन तद्विषयत्वम् इत्यर्थः । व्यापकतावच्छेदकत्वप्रकारकपरामर्शविषयत्वम् । तद्भानप्रयोजकम् इति । इत्यनेन ग्रन्थेन मुरारिमिश्रनये यावत्पदवैयर्थ्यभावः सूचितः । अर्थात् पर्वतो वह्निमान् धूमादित्यत्राऽनुमितौ वह्नित्वादौ व्यापकताया अवर्तमानत्वेन व्यापकतानवच्छेदकत्वरूपपरामर्शनिरूपितविषयतायाः प्रयोजकताया अनङ्गीकृतत्वात् । वाक्यार्थज्ञानापरपर्यायभूते शाब्दबोधे—शब्दाज्जायमानो बोध इत्याकारकयौगिकव्युत्पत्तिलब्धस्तस्मिन्, निरुक्तप्रयोज्यप्रयोजकभावाङ्गीकारेऽपि शाब्दबोधे शक्तेरेव

अव्यापकस्याऽनुमितिविषयत्वेऽतिप्रसङ्गस्य व्यापकतावच्छेदकत्वेनेव, अशक्यस्यापि शाब्दधीविषयत्वे अतिप्रसङ्गस्य शक्यतावच्छेदकत्वेनैव निरास-सम्भवात् । शक्यतावच्छेदके शक्तिसत्त्वेऽपि न तस्यास्तद्बोधे उपयोगः ।

---

शक्यतया अभातस्यापि शाब्दबुद्धौ भानोपगमे गवादिपदात् सास्नादेरपि गोत्वादिवच्छाब्दबोधे भानापत्तेरित्यत आह—अव्यापकस्येति । अव्यापकस्य=व्यापकतया अभातस्य । अनुमितिविषयत्वे=अनुमितौ धर्मितावच्छेदकीयप्रकारताविलक्षणप्रकारत्वे । अतिप्रसङ्गस्य । व्यापकतावच्छेदकत्वेनेव=परामर्शे व्यापकतावच्छेदकतया भानस्य नियामकत्वेन यथा वारणम् । अशक्यस्यापि=शक्यतयाऽभातस्य । शक्यतावच्छेदकत्वेन=शक्यतावच्छेदकतया शक्तिज्ञाने प्रयोजकतयैव ।

---

प्रयोजकतया शक्यतानवच्छेदकरूपेण भानवारणसम्भवात्, तथाविधः प्रयोज्यप्रयोजकभावस्वीकारो निरर्थक एव । इत्थञ्च शक्तेर्ज्ञानभानविषयभानयोः प्रयोजकतया पटज्ञानम्, मठज्ञानम्, घटज्ञानम्, इत्यादीनां शाब्दबोधसामग्र्याः साध्यघटकतया तादृशसामग्रीजन्यग्रहविषयत्वस्य पक्षीभूते प्रामाण्येऽभावेन साध्याभाववत्पक्षरूपो बाधः स्यादित्यतो यावत् पदं देयमिति मुरारिमिश्रमतेन यावत्पदप्रदानस्य न वैयर्थ्यम् ।

शक्यतया=शक्त्याश्रयतया, अभातस्यस्यापि=शक्तिज्ञाननिरूपितविषयतानिरूपिताऽवच्छेदकताभिन्नविषयत्वाभावविशिष्टस्य तादृशधर्मस्येत्यर्थः । दीधितौ—अव्यापकस्येति । अव्यापकत्वम्=तत्समानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकधर्मवत्त्वम् । यथा धूमो वह्नेरव्यापकः, अयोगोलकीयवह्निसमानाधिकरणधूमाभावप्रतियोगितावच्छेदकधर्मवत्त्वस्य धूमे सत्त्वात् । अत्रापि पूर्ववत् वि–आप्–ण्वुल् इति व्यापकः, न व्यापक इति अव्यापकः, तस्य=अव्यापकस्येत्यर्थः । व्याप्तिः=सम्बन्धविशेषस्तदाश्रयो व्याप्यः—यथा धूमादिः । व्याप्ये यन्निरूपिता व्याप्तिरस्ति स यत्पदार्थो व्यापकः, यथा वह्न्यादिः । एतद्विपरीत एव अव्यापकव्याप्यभावो बोध्यः । दीधितौ—अशक्यस्यापि=शक्तिविरहितस्यापि । अत्रापि पूर्ववदेव शक्याऽशक्ययोर्विवेचनं कार्यम् । कार्योत्पादनयोग्यः कारणनिष्ठो धर्मविशेषः शक्तिः । स च धर्मविशेषप्रतिबन्धकाभावादिरूपकारणतारूपः । यथा—वह्नौ दाहोत्पादिका शक्तिरस्ति । अयमाशयः—प्रतिबन्धकसत्त्वे कार्यं न भवति, इत्यतः प्रतिबन्धकाभावस्यापि कार्यत्वावच्छिन्नं प्रति कारणत्वं कल्प्यते । यथा दाहं प्रति मणेः, उत्तेजकाभावविशिष्टमणेर्वा प्रतिबन्धकत्वं निश्चीयते तदभावस्य कारणत्वं स्वीक्रियते । इत्थञ्च शक्तिविरहितस्य=अशक्यस्य शाब्दबोधविषयत्वोपगमे, अतिप्रसङ्गशक्यतावच्छेदकत्वेनैव वारणीयः । यथा वारणमिति । अनुमितीयधर्मितावच्छेदकवृत्तिप्रकारताविलक्षणा या तद्धर्मनिष्ठा प्रकारता तादृशप्रकारताम्प्रति परामर्शीयव्यापकतावच्छेदकत्वरूपविषयता प्रयोजिका भवतीति भावः ।

दीधितिकारो ब्रूते यत् शक्यतावच्छेदके=घटत्वादौ, घटपदनिरूपितायाः शक्तेः सत्त्वेऽपि तस्याः शाब्दबोधे नास्ति कश्चिद् उपयोगः । 'जात्याकृतिव्यक्तयस्तु पदार्थः'

ननु व्यापकतावच्छेदके वह्नित्वादौ धूमादिव्यापकता नास्ति इति व्यापकतावच्छेदकतया भानं विधेयतावच्छेदकतया भानप्रयोजकम्, शक्यतावच्छेदके च सर्वत्र शक्तिरस्ति। तस्य पदबोध्यतया तेन रूपेण भगवदिच्छायामवश्यं भानात्, अतो नोभयत्र साम्यमित्यत आह—शक्यतावच्छेदके इति। उपयोगो न स्वीक्रियत इति शेषः। गोत्वादिविशिष्टविशेष्यकशक्तिग्रहस्य गोत्वांशे शक्यतावगाहिनः स्वरूपतो गोत्वादिविषयकत्वानुपपत्त्या स्वरूपतो गोत्वाद्यवगाहिशाब्दबोधहेतुत्वासम्भवात् तदवच्छेदेन शक्त्यवगाहिनस्तद्धर्मितावच्छेदकज्ञानस्यैव तथात्वादिति भावः।

यद्यपि पदधर्मिकगोत्वविशिष्टवाचकताग्रहस्य स्वरूपतो गोत्वप्रकारकत्वं सम्भवति, तथापि गोत्वविशिष्टवाचकत्वस्य गोत्ववाचकत्वगर्भस्य गोत्वप्रकारकत्वावच्छिन्नगोविषयकत्वविशेषितबोधजनकत्वप्रकारकभगवत्सङ्केतविषयत्वरूपस्य धियो

---

इति गोतमसूत्रेण घट-पटादिनिरूपितशक्यतावच्छेदकतावति घटत्व-पटत्वादौ शक्तिः प्रतिपादिता। सा च शक्तिः केवलं पदार्थोपस्थितिं विधायैव कृतकृत्या भवति। ततश्च शक्त्या समुत्पादिता अर्थोपस्थितिः पुनः स्वोत्पत्तिकालानन्तरकालावच्छेदेन शाब्दबोधं जनयति। तत्र शाब्दबोधे शक्तेर्नास्ति कश्चिदपि समुपयोगः, अयमस्ति आशयः दीधितिकारस्य श्रीरघुनाथशिरोमणेः। तेन=शक्यतावच्छेदकरूपेण, गोत्वादिरूपेणेत्यर्थः। नोभयत्र इति। अनुमितौ शाब्दबोधे चेत्यर्थः। साम्यम्=तुल्यत्वं, नेत्यर्थः। एतदेव तुल्यत्वं नास्ति, अर्थात् साम्यं नास्तीति बोधयति स्मारयति च। दीधितौ शक्यतावच्छेदके इति। तद्बोधे इति। शक्यतावच्छेदके=घटत्व-पटत्वादिप्रकारके शाब्दबोधे शक्तेर्नास्ति उपयोग इत्युक्तमुपरि। गोत्वांशे शक्त्यवगाहिन इति। अर्थात् गोपदजन्यबोधीयविषयतात्वावच्छिन्नविषयत्वनिष्ठप्रकारतानिरूपिता या भगवदिच्छीया विशेष्यता, तादृशविशेष्यतारूपायाः शक्तेर्गोत्वेऽवच्छेदकतासम्बन्धेनाऽवगाहिनः शक्तिज्ञानस्येत्यर्थः। शाब्दबोधे नास्ति कश्चन उपयोगः साक्षात्। उपस्थितिमाध्यमेन भवितुं शक्यत्वेऽपि, तस्य परम्परया परिगणया वर्तते इति। स्वरूपतो गोत्वादिविषयकत्वानुपपत्त्या इति। अर्थात् शक्तिज्ञाने भासमाना गोत्व-घटत्वादिजातिः गोत्वत्व-घटत्वत्वादिना एव भासते इति गोत्वविषयकं तत् शक्तिज्ञानं गोत्वत्वावच्छिन्नावच्छिन्नविषयताशालित्वेन स्वरूपतो भानाभावेन शक्तिज्ञाने निरवच्छिन्नविषयकत्वं नास्ति।

'इदं पदममुमर्थं बोधयतु' इत्याकारकस्य गोपदविशेष्यकगोत्वविशिष्टवाचकताज्ञानस्य निरवच्छिन्नगोत्वविषयकत्वं सम्भवतीत्याशङ्कते—'यद्यपि' इत्यादिग्रन्थेन। अर्थात् यद्रूपावच्छिन्नविषयताशालि शक्तिज्ञानं भवति, तत् तद्रूपावच्छिन्नविषयताशालि उपस्थितिरूपं ज्ञानं जनयति, तयोपस्थित्या पुनस्तद्रूपावच्छिन्नविषयताशाली शाब्दबोधो जायते इति नियमोऽवश्यमेव स्वीकृतो भविष्यति। नो चेत् रूपान्तरेण जायमाने शक्तिज्ञाने भासमानस्य विषयस्य विषयान्तरेण भासमानत्वापत्तिः। अर्थात् पशुपदस्य लोमवल्लाङ्गूलवति शक्तिरिति शक्तिविषयके शक्तिज्ञाने जायमानेऽपि द्रव्यत्वेन, ज्ञेयत्वेन, प्रमेयत्वेन वा लोमभानापत्तिः स्यादिति। वाचकताग्रहस्य=शक्तिज्ञान-

विनापि लक्षणां लक्ष्यतावच्छेदकस्येव विनापि शक्तिं तस्य बोधसम्भवात्;

हेतुत्वे बोधविशेषणतापन्नगोविशेषितविषयिताविशेषणतापन्नप्रकारितांशे विशेषणतया विषयत्वरूपस्य वाच्यत्वस्य गोत्वांशे भानं गोत्वस्य शाब्दधीप्रकारतानियामकं वाच्यम्। गोत्वावच्छेदेन वाच्यताज्ञानस्य हेतुत्वे च गोत्वांशे बोधविशेषणतापन्नविषयिताविशेषण-धर्मिविषयतावच्छेदकतारूपशक्यतावच्छेदकतया भानं तद्भाननियामकमिति तन्मते गोत्वविशिष्टगोचरशाब्दधीहेतुतायां विषयितायां गोविशेषितत्वांशनिवेशाधिक्येन गौरवम्। इतरांशस्योभयमतेऽपि तुल्यशरीरत्वात्। तदनिवेशे तु भवतां धर्म्यंशे शक्ति-धियोऽनपेक्षणीयत्वापत्तेः।

ननु शाब्दबोधीय संसर्गतान्यविषयतायाः स्वांशे वृत्तिज्ञानप्रयोज्यतानियमात्, शक्य-तावच्छेदकांशेऽपि शक्तिज्ञानस्य प्रयोजकत्वमावश्यकमित्याशङ्क्य तन्नियमं निराकरोति— विनापीति। लक्षणाम्=स्वांशे लक्षणाग्रहम्। शक्तिम्=स्वांशे शक्तिग्रहम्। तस्य= शक्यतावच्छेदकस्य।

ननु पशुत्वेन गौरस्मात् पदाद् बोद्धव्य इत्येतादृशाधुनिकसङ्केतात् पशुत्वेनैव गो-बोधो भवति, न तु तादृशसङ्केतविषयतावच्छेदकेनापि गोत्वेनेति नियमाद् विशेषणांशेऽपि सङ्केतविषयत्वभानं शाब्दधीविषयत्वप्रयोजकमवश्यं वाच्यम्। न च गोत्वस्य गोविशेषण-तया उक्तसङ्केतविषयतया तावतापि नोक्तातिप्रसङ्गवारणसम्भव इति वाच्यम्? पद-जन्यबोधविषयत्वेन विषयतारूपवाच्यत्वभानस्य प्रयोजकत्वोपगमेन तद्वारणसम्भवा-दिति चेत्, अस्त्वेवम्।

स्येत्यर्थः। स्वरूपतो गोत्वप्रकारकत्वम्=निरवच्छिन्नगोत्वविषयकत्वम् इत्यर्थः। वाच्यताज्ञानस्य=शक्तिज्ञानस्येत्यर्थः।

दीधितौ 'विनापि लक्षणां लक्ष्यतावच्छेदकस्येव इति'। अर्थात् लक्ष्यतावच्छेदके यथा लक्षणा नाङ्गीक्रियते, तत्र लक्षणास्थले लक्ष्यतावच्छेदके लक्षणां विनैव लक्ष्यार्थ-विषयकः शाब्दबोधो जायते। तथैव शक्यार्थस्थलेऽपि शक्यतावच्छेदके शक्तिं विनैव शाब्दबोधो भविष्यति, का आवश्यकता तत्र शक्तिस्वीकारस्य इति। उत्तरयति— 'जात्याकृतिव्यक्तयस्तु पदार्थः' इत्यस्य गोतमसूत्रस्यैव सार्थकतारूपसम्पत्तिसम्पादनाय तत्र शक्तेः स्वीकारः सर्वथा आवश्यकः। 'पशुत्वेन गौरस्मात् पदाद् बोद्धव्यः' इति। अयमाशयः—यद्यपि शक्तिर्मतमतान्तरेण चास्ति नानाविधा, तथापि शक्तित्वधर्माव-च्छिन्नत्वेन सकलशक्तीनां बोधोऽनुगमश्च जायते। यथा घटत्वधर्मावच्छिन्नत्वेन, पटत्व-धर्मावच्छिन्नत्वेन सर्वेषामेव घट-पटादीनां बोधो भवति। एवं गोत्वधर्मावच्छिन्नत्वेन शक्तिज्ञानमाध्यमेन सकलगोव्यक्तीनां बोधो भवति। एतावांस्तु विशेषः, यथा—'द्रव्य-त्वेन, प्रमेयत्वेन घटपदाद् घटो बोद्धव्यः' इत्येतादृश आधुनिकसङ्केतात् तत्काले द्रव्य-त्वेन, प्रमेयत्वेनैव घटविषयको बोधो जायते। तथैव—'पशुत्वेन गौरस्माद् पदाद् बोद्धव्यः' इत्याकारकाऽऽधुनिकसङ्केतात् पशुत्वेनैव गोविषयकः शाब्दबोधो जायते, न तु सङ्केतविषयतावच्छेदके न गोत्वे नापीति तु परमार्थः।

भट्टमतेऽसम्भवाच्च। ज्ञाततालिङ्गानुमित्यापि विषयग्रहे व्यापकतावच्छेदकत्वस्यैव नियामकतया वक्ष्यमाणत्वात्।

न च ज्ञाततालिङ्गकत्वमेव तत्प्रयोजकम्, अनुमितिसामग्र्याः साध्यग्राहकत्वे लिङ्गविशेषस्य व्यभिचारेणाऽतन्त्रत्वात्। ज्ञाततामात्रेण ज्ञानमात्रानुमानसम्भवात्। विशेषस्य तथा स्वभावकल्पनायां मानाभावाच्च।

---

एवमपि विशेषणतया वाच्यत्वस्य विशेष्यतया वाच्यत्वविलक्षणस्य पदार्थतावच्छेदकभानप्रयोजकतया प्रसापदघटितसामग्र्या निरुक्तरूपताया दुरुपपादतैव।

ननु यावत्पदानुपादाने माभूत् प्रामाण्यस्य प्रमापदग्राह्यतया सिद्धसाधनम्। तथापि विशेष्यताप्रकारतोपनायकतज्ज्ञानकालीनाऽनुव्यवसायसामग्रीग्राह्यतया सिद्धसाधनं दुर्वारमेव, तादृशसामग्र्या अपि विषयग्रहे व्यवसायातिरिक्तानपेक्षणात्। अतो न तत्पदवैयर्थ्यमतो दूषणान्तरमाह—भट्टेति। असम्भवात्=प्रामाण्यग्राहकतया अभिमताया अनुमितिसामग्र्या उक्तविशेषणाक्रान्तत्वासम्भवात्। तदेव दर्शयति दीधितौ—ज्ञाततेति। व्यापकतावच्छेदकत्वस्येति। विषयगर्भप्रमात्वांशे व्यापकतावच्छेदकत्वग्रहस्येत्यर्थः। दीधितौ—वक्ष्यमाणत्वादिति। घटो घटत्वप्रकारकज्ञानविषयः, घटत्वप्रकारकज्ञाततावत्त्वात् इत्यनुमानस्यैव प्रामाण्यग्राहकतया वक्तव्यत्वात्। तत्र च ज्ञानस्य साध्यत्वाद् विषयस्य तु तदवच्छेदकत्वादिति भावः।

ज्ञाततालिङ्गकत्वम्=तल्लिङ्गकपरामर्शत्वावच्छिन्नजन्यत्वम्। तत्प्रयोजकम्=अनुमितौ विषयविशिष्टज्ञानभानप्रयोजकम्। एवकारेण व्यापकतावच्छेदकत्वभानस्य विषयभानप्रयोजकत्वव्यवच्छेदः। लिङ्गविशेषस्य=लिङ्गविशेषावगाहिपरामर्शजन्य-

---

एवमपीति। पूर्वोक्तातिप्रसङ्गवारणेऽपि इत्यर्थः। निरुक्तरूपताया इति। एकप्रयोजकत्वेनापरप्रयोजकतायाः सर्वथा भवितुमशक्यत्वात्, एवञ्चैवं स्थिते प्रामाण्यनिष्ठस्वतोग्राह्यत्व-परतोग्राह्यत्वस्थलीययावत्पदाऽप्रवेशे न प्रमापदमादाय न सिद्धसाधनो दोषः। दीधितौ भट्टमतेऽसम्भवाच्च इति। कुमारिलभट्टमते ज्ञानस्याऽतीन्द्रियत्वेन प्रत्यक्षासम्भवात्। अयमाशयः—भट्टमते ज्ञानम् अर्थात् लौकिकविषयताशून्यं ज्ञानम्। एतन्मते ज्ञानविषययोरयमस्ति प्रतिबध्यप्रतिबन्धकभावः—आत्मसमवेतवृत्तिलौकिकविषयतासम्बन्धेन प्रत्यक्षत्वावच्छिन्नं प्रति धर्मादिवत् तादात्म्यसम्बन्धेन ज्ञानं प्रतिबन्धकम्। ज्ञानेन विषये ज्ञाततानामकः कश्चिद्धर्मो जन्यते। स च धर्मो ज्ञातो घट इति प्रतीतिसाक्षिको विषयतानामकः प्रत्यक्षसिद्धः। सा च विषयता ज्ञाततारूपा विज्ञेया। तया च ज्ञाततया ज्ञानमनुमीयते। दीधितौ—ज्ञाततालिङ्गकानुमित्या इति। अनुमानप्रकारश्च—'इयं घट-पटादिनिष्ठा ज्ञातता घटत्वप्रकारकघटविशेष्यकज्ञानजन्या ज्ञाततायाः'।

अपि च भट्टमते प्रथमक्षणे अयं घट इति ज्ञानम्, ततो ज्ञाततायाः उत्पत्तिः, ततो ज्ञातो घट इति प्रत्यक्षम्। पश्चात्तया ज्ञाततया ज्ञानमात्रस्याऽतीन्द्रियत्वेन प्रत्यक्षासम्भवेन ज्ञानम्, तन्निष्ठञ्च प्रामाण्यमनुमीयते इति तु निष्कर्षः।

त्वस्य । व्यभिचारेण=व्यभिचारादिना तल्लिङ्गकपरामर्शत्वेन हेतुताया असम्भवेन। ज्ञाततामात्रेण=शुद्धज्ञानत्वेन व्यापकतावगाहिपरामर्शबलेन । ज्ञानमात्रेति । विषयानवच्छिन्नस्यैव ज्ञानस्याऽनुमितिसम्भवादित्यर्थः ।

ननु स्वव्यापकसाध्यसामानाधिकरण्यरूपव्याप्तेर्लिङ्गविशेषघटिततया लिङ्गभेदेन परामर्शहेतुताभेद आवश्यकः, व्यभिचारोऽपि कथञ्चिद् विचारणीयः । तथा च ज्ञाततालिङ्गकपरामर्शस्य शुद्धज्ञानत्वावच्छिन्नव्याप्यवगाहिनोऽपि विषयोपरक्तज्ञानानुमितित्वमेव जन्यतावच्छेदकमुपगन्तव्यमिति तद्घटितसामग्र्यां ज्ञानभानप्रयोजकमात्रप्रयोज्यविषयग्राहकताकत्वमक्षतमेवेत्यत आह—विशेषस्येति । शुद्धज्ञानव्याप्यतया ज्ञाततारूपलिङ्गविशेषावगाहिपरामर्शस्येत्यर्थः । तथा स्वभावकल्पनायाम्=विषयविशिष्टज्ञानविषयकत्वावच्छिन्नजनकत्वकल्पनायाम् । मानाभावादिति । व्यवसायानन्तरं द्वित्रक्षणमध्य एव विषयोपरक्तज्ञानभानस्य आनुभविकतया कालान्तरे शुद्धज्ञानव्याप्यतया ज्ञाततावगाहिपरामर्शात् शुद्धज्ञानानुमितिनिर्वाहाय तादृशपरामर्शस्य पृथक्कारणताया आवश्यकत्वे विषयोपरक्तज्ञानानुमितौ तस्य हेतुत्वान्तरकल्पनं कालविशेषस्य तत्सहकारितया अतिप्रसङ्गभङ्गाय कल्पनं चापेक्ष्य ज्ञानस्य ऐन्द्रियकतया एव कल्पयितुं युक्तत्वादिति भावः ।

---

व्यभिचारेण इति । व्यभिचारश्च साध्याभाववद्वृत्तित्वरूपः साध्यवदन्यवृत्तित्वरूपश्च । हेतुताया असम्भवेनेति । अनुमितित्वावच्छिन्नं प्रति कारणत्वासम्भवेनेत्यर्थः। ज्ञाततामात्रेण इति । ज्ञातता=ज्ञानविषयता ज्ञानविषयत्वं वा । ज्ञानविषयता, तद्विषयत्वञ्च स्वरूपसम्बन्धविशेषः । स च सम्बन्धान्तेण विशिष्टप्रतीतिजननायोग्यत्वम् । यथा—भूतले घटो नास्ति इत्यादौ भूतलेन घटाभावादेः सम्बन्ध, स एव स्वरूपसम्बन्धः । एवं ज्ञातताऽपि स्वरूपसम्बन्धविशेष एव । तां ज्ञाततां समवायेन वर्तमानां ज्ञानजन्यां प्रवदन्ति भट्टाः । ज्ञातो घट इति प्रतीतिं प्रति घटज्ञानं निमित्तकारणं भवति । घटश्च समवायिकारणम् इति । एवम्—'ज्ञातसारोऽपि खल्वेकः सन्दिग्धे कार्यवस्तुनि' इत्यत्र सारस्य तत्त्वार्थस्य ज्ञातता कथ्यते ।

शुद्धज्ञानव्याप्यतया इति । तत्प्रकारकतद्विशेष्यकज्ञानजन्यत्वव्याप्यतया इत्यर्थः । ज्ञाततारूपलिङ्गविशेषावगाहिपरामर्शस्येति । तत्प्रकारकतद्विशेष्यकज्ञानजन्यत्वव्याप्य ज्ञाततावती ज्ञातता इत्याकारकपरामर्शस्येत्यर्थः । व्यवसायानन्तरं द्वित्रक्षणमध्ये एवेति । एतेन ज्ञानस्य क्षणद्वयावस्थायित्वम् अपेक्षाबुद्धेश्च त्रिक्षणावस्थायित्वं च सूच्यते । तेन च क्षणिकत्वं कल्प्यते । एतच्च क्षणिकत्वं सर्वेषामेव बौद्धातिरिक्तानामास्तिकदार्शनिकानामभिमतमस्तीत्याशयेनैवोक्तम्—'आनुभविकतया' इति । अनुभवसिद्धतयेत्यर्थः । तच्च क्षणिकत्वं तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वम् । क्षणिकत्वविषये योग्यविभुविशेषगुणानां स्वोत्तरवृत्तिविशेषगुणनाश्यत्वमिति नियमोऽनुसन्धेयः । अर्थात् शब्दज्ञानादिकं प्रथमक्षणे समुत्पद्यते, द्वितीयक्षणे तिष्ठति, तृतीयक्षणे स्वसजातीयं समुत्पाद्य स्वयञ्च विनश्यति । अथवा स्वाधिकरणसमयप्रागभावाधिकरणक्षणा-

ज्ञाततात्रिशेषत्वेन ज्ञानविशेषजन्यत्वानुमानञ्च घटेच्छात्वेन घटज्ञान-जन्यत्वानुमानेन समानयोगक्षेममम् । तदादिपदेन प्रकरणात् ।

---

ननु घटवृत्तिघटत्वप्रकारकज्ञाततायास्तादृशज्ञाततात्वेन घटविशेष्यकघटत्वप्रकारकत्वविशिष्टज्ञानजन्यत्वरूपसाध्यानुमापकत्वात् । तत्र च व्यापकतावच्छेदकत्वमेव उभयभानप्रयोजकम् इति न ज्ञानभानाप्रयोजकं विषयभानप्रयोजकमित्याशङ्कां निरस्यति—ज्ञातताविशेषत्वेनेति । समानयोगक्षेममिति । अत्राप्यनुमाने विषयस्येव ज्ञानस्यापि साध्यतावच्छेदकत्वात् । अवच्छेदकताया विशेषादरे च ज्ञाततालिङ्गकानुमानेऽपि तद्विशेषसत्त्वादेकसामग्रीसङ्ग्रहोऽन्यवारणञ्चाशक्यमिति भावः । प्रमापदस्थले एकेन पदेन ज्ञानविषयोभयग्रहात् सिद्धसाधनस्य यावत्पदेन वारणमित्युक्तम् । तदनुसारेण प्रमात्वग्राहकमपि तादृशं पदमस्ति, तदग्राह्यतया बाधस्य दुर्वारतामाह—तदादीति । तदादेर्बुद्धिस्थत्वेनैव बोधकता, न तु ज्ञानत्वादिनेति भ्रमं निराकर्तुमाह—प्रकरणा-

---

नुत्पत्तिकत्वे सति कादाचित्कत्वम् उत्पत्तिमत्त्वं वा । आहोस्वित् स्वाधिकरणसमयप्रागभावाधिकरणक्षणावृत्तित्वम् इति । बौद्धास्तु 'स्वाव्यवहितोत्तरक्षणवृत्तिध्वंसप्रतियोगित्वम्' इत्येव क्षणिकत्वं वदन्ति । तेषां नये सर्वेषामेव भावपदार्थानाञ्चास्ति क्षणिकत्वम् इति । केवलमपेक्षाबुद्धेस्त्रिक्षणावस्थायित्वं द्वित्वप्रत्यक्षानुरोधात् कल्प्यते । अत एव तस्याश्चतुर्थक्षणवृत्तिध्वंसप्रतियोगित्वं स्वीकृतमस्ति ।

ज्ञातताविशेषत्वेन=ज्ञानविशेषजन्यत्वानुमानप्रयोजकत्वरूपविशेषावगाहित्वेनेत्यर्थः । भाट्टानां मते ज्ञानस्याऽतीन्द्रियत्वेन प्रत्यक्षासम्भवात्, अतस्तदीयाऽस्तित्वसम्पत्त्यनुरोधेन ज्ञानजन्या ज्ञातता प्रत्यक्षा, 'ज्ञातो घट' इति प्रतीत्यनुरोधादेव ज्ञाततायाः प्रत्यक्षत्वं स्वीकृतमस्ति, तया च ज्ञाततया पुनर्ज्ञानस्याऽनुमानगम्यत्वं सिद्धयति । अर्थात् तया ज्ञाततया ज्ञानमनुमीयते, तद्गतप्रामाण्यञ्चानुमीयते । अनुमानप्रकारञ्चाऽहं पूर्वमेव प्रदर्शितवान् ।

इदानीमत्रेदं विचार्यते यत्—तत् प्रामाण्यं स्वतो गृह्यते परतो वेति यतो अत्र विषये बहूनां विप्रतिपन्नविषयाणां समुपस्थितत्वात् । तथाहि—

'प्रमाणत्वाऽप्रमाणत्वे स्वतः सांख्याः समाश्रिताः ।
नैयायिकास्ते परतः सौगताश्चरमं स्वतः ॥
प्रथमं परतस्त्वाहुः प्रामाण्यं वेदवादिनः ।
प्रामाण्यं स्वतः प्राहुः परतश्चाप्रमाणताम्' ॥

इति चास्ति प्रामाण्याऽप्रामाण्यविषये निरुक्तिः । विशेषादरे चेति । प्रामाण्याश्रयीभूते व्यापकतावच्छेदकत्वम्, विषये च व्यापकतावच्छेदकतावच्छेदकत्वं प्रयोजकम् ।

तदादेरिति । तत्पदार्थश्च वक्तृबुद्धिविषयः । यथा—तौ गच्छतः, एवं यथा तौ पार्वतीपरमेश्वरौ । केचित्तु परोक्षबुद्धिविषयतावच्छेदकावच्छिन्नस्तच्छब्दार्थः । अपरे च वक्तृबुद्धिविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्न एव तत्पदार्थः । एतावांस्तु विशेषः यत्—प्रक्रम्यमाणपरामर्शकतच्छब्देन नियमतो यत्पदमपेक्षते । यथा—तमेव

पदान्तरेण वा लक्षणया आधुनिकसङ्केतेन वा घटविषयकज्ञानोपस्थापकेन प्रामाण्याग्रहाद् वाधाच्च ।

---

दिति । विशेषरूपेण बोधौपयिकप्रकरणसहकारादित्यर्थः । प्रकरणञ्च प्रकृतत्वम् । विशेषरूपेण वक्तुर्बुद्धिस्थत्वमिति यावत् । सामान्यतो वक्तृबुद्धिस्थत्वेन शक्तमपि सर्वनाम विशेषरूपेण बोधयति, सहकारिविशेषापेक्षयाऽतिप्रसङ्गनिराससम्भवात् इति भावः । विवेचितं चेदमधिकमन्यत्र ।

पदान्तरेण — सर्वनामातिरिक्तेनापि घटादिपदेन । तादृशपदस्य तद्रूपावच्छिन्नावाचकस्य कया वृत्त्या तद्रूपावच्छिन्नबोधकत्वमित्याकाङ्क्षायामाह — लक्षणया आधुनिकसङ्केतेन वेति । लक्ष्यार्थप्रकारेण लक्षणाग्रहस्याऽनपेक्षितत्वेऽपि तत्र तदितरग्रहस्याप्यनपेक्षितत्वात् न विषयभानेऽधिकापेक्षेति भावः ।

न च तत्र लक्ष्यतावच्छेदकग्रहस्यापेक्षया विषयग्रहेऽधिकस्य अपेक्षणीयतैवेति वाच्यम् ? लक्षणाग्रहस्य प्रकारतयैव तीरत्वादीनां गङ्गापदजन्यधीप्रकारतोपपत्तेस्तत्र शक्यप्रवाहादिसम्बद्धतावच्छेदकत्वग्रहस्यानुपयोगात् । पश्वादिपदादभ्रान्तपुरुषस्य शक्त्या गोत्वादिप्रकारकबोधानुदयात् लक्षणाप्रतिसन्धानं विना तद्रूपविशिष्टप्रत्यायनेच्छया तत्पदाप्रयोगाच्च । शक्त्यधीनविशिष्टविषयकबोधे परं विशेषणांशे शक्तेः शक्यतावच्छेदकताया वा ग्रहस्योपयोगित्वोपगमात् । अभ्युपेत्यैकवृत्तेरुभयग्रहप्रयोजकतामपि उपपादयितुं सङ्केतानुधावनम् इति ।

---

छत्रविशिष्टम्, वस्त्रविशिष्टं देवदत्तम् आह्वयन्तु यः कियत्कालपूर्वमेवाऽत्रासीदिति । अत्र यत्पदसापेक्षं तत्पदं समनुभूयते । एवम्—

'स किं सखा साधु न शास्ति योऽधिपम्' ।

शब्दशास्त्रवेत्तारस्तु—यत्पदप्रतिपाद्यतया वक्तृबुद्धिविषयीभूतो विधेयस्वरूप एव तत्पदार्थः इति वदन्ति ।

अपरे च विद्वांसः—स्वोच्चारणकर्तृ पुरुषप्रयुक्तपूर्वपदजन्योपस्थितिविषयतावच्छेदकत्वोपलक्षितस्वप्रयोजकबुद्धिविषयतावच्छेदकधर्मावच्छिन्नस्तत्पदार्थः । सहकारिविशेषापेक्षया इति । तात्पर्यग्राहकप्रकरणापेक्षयेत्यर्थः ।

दीधितौ—लक्षणया इति । लक्षणयेति तृतीयान्तपदस्य घटविषयकज्ञानोपस्थापकेन, इत्यनेनान्वयः । सा च लक्षणा स्वशक्यसम्बन्धरूपा । स्वं लाक्षणिकं पदम्, यथा— 'गङ्गायां घोषः' इत्यत्र लाक्षणिकं पदं गङ्गापदम्, तस्य शक्यः प्रवाहः, तस्य संयोगात्मकः सम्बन्धस्तीरे वर्तते । शब्दनिरूपितोऽर्थनिष्ठः शाब्दबोधप्रयोजकीभूतः पदार्थयोः सम्बन्धो लक्षणा । तथा चोक्तवान् विश्वनाथपञ्चाननः—

'लक्षणा शक्यसम्बन्धस्तात्पर्यानुपपत्तितः' ।

एवञ्च तद्विषयकशाब्दबोधं प्रति तन्निरूपितशक्तिमत्पदत्वेन कारणत्वम् । तात्पर्यानुपपत्तिश्च भवति लक्षणायां बीजम् । आधुनिकसङ्केतेनेति । अर्थात् आधुनिके नाम्नि शक्तिरूपः सङ्केतः 'एकादशेऽहनि पिता नाम कुर्यात्' इति श्रुत्युक्तदिशाऽस-

एतेन यादृशसामग्र्या विषयग्राहकत्वव्याप्तं ज्ञानग्राहकत्वम्, तादृशयावद्ग्राह्यत्वमपि प्रत्युक्तम् ।

अत्र वदन्ति—तज्ज्ञानप्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन च यद्भट्टमतसिद्धं तद्भिन्नार्थकमग्राहकान्तम् ।

---

एतावता विषयग्रहे अधिकानपेक्षाविवक्षान्निराकृत्य ज्ञानग्रहेऽधिकानपेक्षाविवक्षामपि निराकरोति—एतेनेति । एकसङ्केतेनोभयबोधकपदघटितसामग्रीव्यावृत्त्यसम्भवेन घटेच्छालिङ्गकघटज्ञानानुमानज्ञाततालिङ्गकप्रामाण्यविशिष्टज्ञानानुमानयोर्विशेषविरहेण चेत्यर्थः । यादृशसामग्र्या इति । ज्ञानग्राहकताप्रयुक्तेत्यत्र प्रयुक्तत्वस्य व्यापकतारूपत्वात् यथाश्रुतग्रन्थलभ्यमेवैतदित्यवधेयम् । तादृशयावद्ग्राह्यत्वम्=तज्जन्ययावद्ग्रहविषयत्वम् । मनःसंयुक्तसमवायस्य व्यवसायविषयघटादिभानाप्रयोजकत्वे मिश्रमतापरिग्रहोऽप्यत्र बोध्यः ।

---

पुरुषस्य प्रामाण्यानुरोधेन कल्प्यते । तथा च एकादशाहःकालीनपित्राद्युच्चारितनामत्वादिना नामवाच्यः शिशुः—इत्याकारकेण आधुनिकसङ्केतेन एकादशेऽहनि पित्रा नामकरणं सुनिश्चीयते । उभयग्रहेति । विषय-ज्ञान, उभयप्रयोजकतामित्यर्थः ।

दीधितौ—'एतेन' इति । अस्य 'प्रत्युक्तम्' इत्यनेनान्वयः । प्रत्युक्तम् इत्यस्य निराकृतमित्यर्थः । तदेवाह गदाधरो—निराकरोति । किं निराकरोति ? इत्याकाङ्क्षायामाह—अधिकानपेक्षेति । अर्थात् विषयग्रहे, ज्ञानग्रहे चोभयत्र अधिकानपेक्षान्निराकरोति—एतेन एकपदसङ्केतेनेत्यर्थः । एकपदसङ्केतश्च तत्स्वरूपश्चोभयमेव पूर्वं दर्शितमित्यर्थः । घटेच्छालिङ्गक-ज्ञाततालिङ्गकानुमानेति । 'किञ्च—घटज्ञानवान् घटेच्छावत्त्वात्' इत्यनुमानेन प्राग् दीधितौ समुल्लिख्यमानेनेत्यर्थं इति । विशेषविरहेण इति । घटेच्छालिङ्गक-ज्ञाततालिङ्गकानुमानेत्यर्थः । उभयविधाऽनुमानयोरेव ज्ञानानुमानजनकत्वेन नास्ति विशेषतो विशेषः । केवलञ्चास्ति अनुमापकलिङ्गभेद इति । इत्याशयं मनसि निधायोक्तवान् श्रीगदाधरः—विशेषविरहेण इति ।

ननु इदं घटत्वप्रकारकं ज्ञानं सविशेष्यकमित्यादि वाक्यजन्यशाब्दबोधस्यापि स्वाश्रयज्ञानग्राहकसामग्रीजन्ययावद्ग्रहान्तर्गततया तद्विषयत्वस्य प्रमात्वेऽसत्त्वाद् बाध इति दीधितिकृदुक्तपूर्वपक्षे समाधानमाह—अत्र वदन्तीत्यादिना । ज्ञानप्रामाण्यं तदप्रामाण्याग्राहकस्वाश्रयज्ञानग्राहकसामग्रीजन्यग्रहविषयो न वेति मूलविप्रतिपत्तिघटकीभूतं यत्तदप्रामाण्याग्राहकत्वदलं तत्परिष्करोति—तज्ज्ञानप्रामाण्याग्राहकत्वेनेति । तथा च तज्ज्ञानप्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन च यद् भट्टमतसिद्धं तद्भिन्ना ज्ञानग्राहिका च या सामग्री तज्जन्यग्रहविषयत्वमर्थः । तदप्रामाण्याग्राहकत्वदलस्य सामग्र्यामनिवेशे इदं ज्ञानमप्रमेत्याकारकज्ञानग्राहकसामग्र्या अपि साध्यघटकतया 'ज्ञानग्राहकसामग्र्यन्तर्गततया' तज्जन्यग्रहविषयत्वस्य प्रमात्वेऽसत्त्वाद् बाध इदानीं पारिभाषिकाऽप्रामाण्याग्राहकत्वनिवेशे नास्ति, इदं ज्ञानमप्रमेति ज्ञानग्राहकसामग्र्याः ज्ञानग्राहकत्वेन प्रामाण्याग्राहकत्वेन च भट्टमतसिद्धत्वेन तदन्यत्वविरहात् ।

तज्ज्ञानेति। घटज्ञानमित्यादिशाब्दबोधसामग्र्या इच्छादिलिङ्गकज्ञानानुमिति-सामग्र्याश्च भट्टैर्ज्ञानग्राहकतया प्रामाण्याग्राहकतया चाभ्युपगमात् तद्व्युदासः।

अनुव्यवसायस्य ज्ञानविषयकलौकिकप्रत्यक्षात्मकस्य ज्ञानातीन्द्रियत्ववादिना भट्टेनानुपगमान्मनःसंयुक्तसमवायादिघटिततत्सामग्री न ज्ञानग्राहकत्वेन तन्मतसिद्धा, व्यवसायसामग्री च घटादिग्राहकत्वेन तदुपगतापि न ज्ञानग्राहकत्वेन तदुपगता, गुरुभिरेव तस्याः ज्ञानग्राहकत्वोपगमात्।

ज्ञाततालिङ्गकानुमितिसामग्री ज्ञानग्राहकत्वेन भट्टमतसिद्धापि तैस्तस्याः प्रामाण्यग्राहकत्वोपगमात्। प्रामाण्याग्राहकत्वेन न तन्मतसिद्धेति तत्तन्मते प्रामाण्यग्राहकत्वे-

---

उक्तदोषं परिहरति टीकायां—घटज्ञानमित्यादिशाब्दबोधसामग्र्या इति। आदिपदाद् घटत्वप्रकारकं ज्ञानं सविशेष्यकमिति शाब्दबोधपरिग्रहः। एतादृशशाब्दबोधजनकीभूतशब्दघटितसामग्र्या इत्यर्थः। अस्या भट्टैर्ज्ञानग्राहकतया प्रामाण्याग्राहकतया चाऽभ्युपगमादित्यनेनाऽन्वयः। इच्छादिलिङ्गकानुमितिसामग्र्याश्चेति। ज्ञानवानिच्छावत्त्वादित्यनुमितिजनिका या परामर्शादिघटिता सामग्री तस्याश्चेत्यर्थः। ज्ञानग्राहकत्वेन तादृशज्ञानविषयकशाब्दात्मकग्रहजनकत्वेन। प्रामाण्याग्राहकतये चेति। भट्टमते ज्ञाततालिङ्गकानुमितिसामग्र्या एव प्रामाण्यग्राहकत्वादिति भावः। अभ्युपगमादिति। तादृशशाब्दसामग्र्या भट्टमतसिद्धत्वादिति भावः। तद्व्युदास इति। तादृशशाब्दानुमितिसामग्रीव्युदास इत्यर्थः। भट्टमतसिद्धभिन्नत्वाभावादिति भावः।

अनुव्यवसाय-व्यवसाय-ज्ञाततालिङ्गकानुमितिसामग्रीणां सङ्ग्रहप्रकारमाह—अनुव्यवसायस्येति। घटमहं जानामीत्यनुव्यवसायस्येत्यर्थः। ज्ञानविषयलौकिकप्रत्यक्षात्मकस्य व्यवसायविषयकलौकिकमानसप्रत्यक्षात्मकं ज्ञानं तस्य, ज्ञानातीन्द्रियत्ववादिना ज्ञाततालिङ्गेन ज्ञानस्यानुमेयत्ववादिना। अनुपगमादिति। इन्द्रियसन्निकर्षानन्तरं ज्ञातो घट इति प्रत्यक्षस्यैव सम्भवेन ज्ञातताप्रत्यक्षस्यावश्यकतया ज्ञानस्य प्रत्यक्षत्वे प्रमाणाभावेन तादृशानुव्यवसायस्याऽस्वीकारादित्यर्थः। मनःसंयुक्तसमवायादिघटिततत्सामग्री मनःसंयुक्तसमवायादिघटितानुव्यवसायसामग्री, न ज्ञानग्राहकत्वेन तदुपगता। भट्टमताभ्युपगता तथा चानुव्यवसायसामग्र्या ज्ञानग्राहकत्वाभावेन भट्टमतसिद्धान्यत्वसत्त्वात्तत्सङ्ग्रहः। गुरुमतेनाह—व्यवसायसामग्री चेति। व्यवसायजनिका सामग्री चेत्यर्थः। तदुपगतापि भट्टेन स्वीकृतापि। न ज्ञानग्राहकत्वेन तदुपगता। भट्टमतसिद्धा। गुरुभिरेवेति। स्वप्रकाशतावादिगुरुमतानुयायिभिरेवेत्यर्थः। एवकारेण मिश्रभट्टनैयायिकानां व्यावृत्तिः। तस्याः व्यवसायसामग्र्याः, ज्ञानग्राहकत्वोपगमात् ज्ञानविषयकज्ञानजनकत्वस्वीकारात्, तन्मते स्वस्यैव स्वविषयकत्वस्वीकारादिति भावः। तथा च गुरुमते व्यवसायसामग्र्याः प्रामाण्याग्राहकत्वेऽपि ज्ञानग्राहकत्वाभावेन भट्टमतसिद्धान्यत्वसत्त्वाद् व्यवसायसामग्रीसङ्ग्रहः।

भट्टमतेनाह—ज्ञाततालिङ्गकानुमितिसामग्री इति। तैः भट्टैः, तस्याः तादृशानुमितिसामग्र्याः। न तन्मतसिद्धेति न भट्टमतसिद्धेत्यर्थः। इति अतः, भट्टमतसिद्ध-

नाभिमतानां सामग्रीणां सङ्ग्रहः । गुरुमते घटत्ववतीत्यादिप्रामाण्यग्राहिकाणां ज्ञानविषयो घट इत्यादिशाब्दानुमितिसामग्रीणां प्रामाण्याग्राहकतया ज्ञानग्राहकतया च भट्टाभ्युपगतानामसङ्ग्रहेऽपि न क्षतिः, अयं घट इत्येतादृशप्रत्यक्षसामग्र्याः प्रामाण्यग्राहकताविचार एवेदृशविप्रतिपत्त्यादरात् ।

भट्टमते ज्ञाततालिङ्गकानुमितिसामग्र्याः सङ्ग्रहाय तज्ज्ञानप्रामाण्याग्राहकत्वेनेति । पटज्ञानं प्रमा घटज्ञानं गुण इत्येतादृशसमूहालम्बनशाब्दसामग्र्या पटज्ञानप्रामाण्याग्राहकत्वेन भट्टमतासिद्धया घटत्ववतीत्यादिप्रामाण्याग्रहाद् बाधवारणाय—तज्ज्ञानेति । प्रकृतप्रामाण्यस्य विशेषतो निवेशसूचकम् ।

---

भिन्नत्वात्, तत्तन्मते क्रमशः मिश्रगुरुभट्टमते, अभिमतानां सामग्रीणां अनुव्यवसाय-व्यवसाय-अनुमितिसामग्रीणां सङ्ग्रहो बोध्यः ।

अनुपपत्तिमाशङ्क्य निषेधति—गुरुमते घटत्ववतीत्यादि प्रामाण्यग्राहिकाणामिति । घटत्ववति घटत्वप्रकारकत्वरूपं यत्प्रामाण्यं तद्विषयकग्रहजनिकानामित्यर्थः । ज्ञानविषयो घट इत्यादिशाब्दानुमितिसामग्रीणामिति । घटो घटत्वप्रकारकज्ञानविशेष्य इति शाब्दसामग्रीणाम्, अनुमितिसामग्रीणां चेत्यर्थः । प्रामाण्याग्राहकत्वेनेति । ज्ञाततालिङ्गकानुमितित्वाभावेन 'तादृशशाब्दबाधाद्यात्मकग्रहजनकसामग्र्या' प्रामाण्यविषयकग्रहाजनकत्वेनेत्यर्थः । असङ्ग्रहेऽपि साध्याघटकत्वेऽपि, न क्षतिः नानुपपत्तिः । अनुपपत्तौ हेतुमाह—अयं घट इत्येतादृशप्रत्यक्षसामग्र्या इति । सावधारणो निर्देशः । तादृशप्रत्यक्षसामग्र्या एवेत्यर्थः । न तु ज्ञानविषयो घट इत्यनुमितिशाब्दसामग्रीणामिति भावः । प्रामाण्यग्राहकताविचार एवेति । अयं घट इति । प्रत्यक्षे प्रमात्वं स्वतः परतो वेति विचार एवेत्यर्थः । एवेदृशविप्रतिपत्त्यादरादिति । एतादृशविप्रतिपत्तेः कल्पनादित्यर्थः ।

सङ्ग्रहायेति । तज्ज्ञानप्रामाण्याग्राहकत्वानिवेशे ज्ञाततालिङ्गकानुमितिसामग्र्या ज्ञानग्राहकत्वेन भट्टमतसिद्धतया तत्सङ्ग्रहो न स्यादिति भावः । तन्निवेशे तु प्रामाण्याऽग्राहकत्वविरहेण तद्भिन्नत्वसत्त्वात्तादृशसामग्रीसङ्ग्रहः ।

ननु तज्ज्ञानपदोपादानं किमर्थम्? प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन च भट्टमतसिद्धभिन्नत्वस्यैव सम्यक्त्वादित्यत आह—पटज्ञानं प्रमा घटज्ञानं गुण इत्येतादृशसमूहालम्बनशाब्दसामग्र्या इति । एतादृशो यः शाब्दबोधस्तज्जनकशब्दघटितसामग्र्या इत्यर्थः । पटज्ञानप्रामाण्याग्राहकत्वेन भट्टमतासिद्धयेति । पटज्ञानगतप्रामाण्याग्राहकत्वेन भट्टमतसिद्धभिन्नत्वेन । घटत्ववतीत्यादिप्रामाण्याग्रहादिति । घटत्ववति घटत्वप्रकारकत्वरूपप्रामाण्यविषयकग्रहाजननादित्यर्थः । तादृशसामग्रीजन्यग्रहविषयत्वस्य घटत्ववति घटत्वप्रकारकत्वरूपप्रमात्वेऽसत्त्वादिति भावः । बाधवारणायेति । तथा च तज्ज्ञानेत्यत्र तत्पदानुपादाने पटज्ञानं प्रमा घटज्ञानं गुण इति समूहालम्बनशाब्दबोधसामग्री प्रामाण्याग्राहकत्वेन न भट्टमतसिद्धा अपि तु केवलघटज्ञानशाब्दसामग्र्येव प्रामाण्याग्राहकत्वेन भट्टमतसिद्धा तदन्यत्वस्य च समूहालम्बनशाब्दसामग्र्यां सत्त्वेन

**प्रामाण्याग्राहकत्वं च प्रामाण्यग्रहानुपधायकत्वम्, तेन घटज्ञानमिति शाब्दसामग्र्याः घटज्ञानं प्रमेत्यादिप्रामाण्यविषयकशाब्दादिस्वरूपयोग्यत्वेऽपि न क्षतिः। एवं ज्ञानग्राहकत्वमपि ज्ञानग्रहोपधायकत्वम्, गुरुणा प्रामाण्यग्राहकत्वेन सिषाधयिषिताया अयं घट इति प्रत्यक्षादिसामग्र्या अपि उपनीतभानाङ्गीकर्तृ भट्टेन ज्ञानविषयो घट इत्युपनीतभानादिस्वरूपयोग्यतयोपगमात्।**

---

तज्जन्यग्रहविषयत्वस्य घटत्ववति घटत्वप्रकारकज्ञानत्वरूपप्रमात्वे विरहाद् बाधस्तद्वारणायेत्यर्थः। **प्रकृतप्रामाण्यस्येति**। पक्षीभूतप्रामाण्यस्येत्यर्थः। **विशेषत इति**। तद्धर्मप्रकारेण। **निवेशसूचकमिति**। यद्धर्मप्रकारकज्ञानप्रामाण्यं यदा पक्षः तदा तद्धर्मप्रकारकज्ञानप्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन च भट्टमतसिद्धभिन्ना सामग्री ग्राह्येति भावः। घटत्ववतीत्यादिप्रामाण्यं यदा पक्षः तदा घटत्ववतीत्यादिप्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन भट्टमतसिद्धैव सामग्री तदन्या सामग्री ग्राह्या, उक्तसामग्री च न तथेति न बाधः। यदा तु पटत्ववतीत्यादिप्रामाण्यं पक्षः तदा पटत्ववतीत्यादिप्रामाण्याग्राहकत्वेन तन्मतभिन्नत्वसत्त्वात् तत्सामग्रीसङ्ग्रह इति भावः।

**प्रामाण्यग्रहानुपधायकत्वमिति**। प्रामाण्यविषयकग्रहनिरूपितफलोपधायकतारूपजनकत्वाभाववत्वम्। अव्यवहितपूर्वत्वसम्बन्धेन प्रामाण्यग्रहविशिष्टत्वाभाववत्वमिति यावत्। तेन फलोपधायकत्वाभावविवक्षणेन, घटज्ञानमित्यादिशाब्दसामग्र्याः घटज्ञानमिति शब्दघटितायाः सामग्र्याः, घटज्ञानं प्रमेत्यादिप्रामाण्यविषयकशाब्दादिस्वरूपयोग्यत्वेऽपि घटत्ववति घटत्वप्रकारकत्वरूपप्रामाण्यविषयकशाब्दनिरूपितजनकतावच्छेदकधर्मवत्त्वेऽपि। **न क्षतिरिति**। न तादृशसामग्रीसङ्ग्रहप्रसक्त्या बाधावतार इत्यर्थः। तत्र फलोपधायकत्वाभावादिति भावः।

प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन भट्टमतसिद्धभिन्नत्वदले ज्ञानग्राहकत्वानिवेशे तज्ज्ञानप्रामाण्याग्राहकत्वेन भट्टमतसिद्धभिन्नत्वमात्रनिवेशे अयं घट इति व्यवसायसामग्र्यास्तज्ज्ञानप्रामाण्याग्राहकत्वेन भट्टमतसिद्धतया तद्भिन्नत्वाभावेन गुरुमते साध्याप्रसिद्धिरतो ज्ञानग्राहकत्वोपादानम्, तथा च व्यवसायसामग्र्या ज्ञानग्राहकत्वेन भट्टमतसिद्धभिन्नत्वात्तत्सङ्ग्रहः। एवं च विप्रतिपत्तीनां गुरुमतसाधारण्यमुपपद्यते।

**ज्ञानग्रहोपधायकत्वमिति**। ज्ञानग्रहनिरूपितफलोपधायकत्वमित्यर्थः। अव्यवहितपूर्वत्वसम्बन्धेन ज्ञानग्रहविशिष्टत्वमिति यावत्। तथा चाऽव्यवहितपूर्वत्वसम्बन्धेन प्रामाण्यग्रहविशिष्टत्वाभाववत्वेन एवमव्यवहितपूर्वत्वसम्बन्धेन ज्ञानग्रहविशिष्टत्वेन या भट्टमतसिद्धा तदन्यत्वमित्यर्थः। सिषाधयिषितायाः प्रामाण्यग्राहिका भवतु इतीच्छाविषयीभूतायाः, अयं घट इति प्रत्यक्षादिसामग्र्याः अपि आदिपदादनुमितिशाब्दसामग्रीपरिग्रहः। अस्याः स्वरूपयोग्यतया इत्यनेनान्वयः। अपिना ज्ञानलक्षणासन्निकर्षसमुच्चयः। सन्निकर्षानन्तरं ज्ञातो घट इति भानात्। उपनीतभानाङ्गीकर्तृ भट्टेन ज्ञानलक्षणासन्निकर्षजन्यबोधमभ्युपगच्छता भट्टेन। **ज्ञानविषयो घट इत्युपनीतभानादिस्वरूपयोग्यतयेति**। ज्ञानविषयो घटः 'ज्ञातो घट' इति ज्ञानांशेऽलौकिकप्रत्यक्षनिरूपितस्वरूप-

न च ज्ञानविषयकत्वघटितधर्मावच्छिन्ननिरूपितयोग्यतानिवेशेऽपि नायं दोष इति वाच्यम् । तथा सति आत्ममनोयोगादीनां ज्ञानविषयकत्वावच्छिन्नाजनकत्वात्तद्घटिततया वारणीयानां सामग्रीणामपि ज्ञानग्राहकतया भट्टमतसिद्धत्वानुपपत्तेः ।

अथैवं भवन्मतेऽपि आत्मशरीरादीनां भट्टमतेऽन्यत्र प्रामाण्यग्राहकतया तद्घटितानां वारणीयसामग्रीणां प्रामाण्याग्राहकतया न भट्टमतसिद्धत्वम्, यदि चात्मादीनां तथात्वेन

---

योग्यत्वरूपजनकत्वेनेत्यर्थः । अयं घट इति प्रत्यक्षादिसामग्र्या इति पूर्वेणाऽन्वयः । तथा चायं घट इति प्रत्यक्षसामग्र्याः प्रामाण्याग्राहकत्वेन भट्टमतसिद्धत्वमिव ज्ञानग्रहनिरूपितस्वरूपयोग्यतारूपजनकत्वमपि तन्मतसिद्धमिति तादृशसामग्र्यसङ्ग्रहापत्तिः । ज्ञानग्रहोपधायकत्वोक्तौ ज्ञानग्राहकत्वेन तन्मतसिद्धान्यत्वेन सङ्ग्रह इति भावः ।

आशङ्कते—न चेति । ज्ञानविषयकत्वघटितधर्मावच्छिन्ननिरूपितयोग्यतानिवेशेऽपीति । ज्ञानविषयकत्वघटितोऽनुमितित्वरूपो धर्मस्तदवच्छिन्ननिरूपितस्वरूपयोग्यत्वरूपजनकतानिवेशेऽपीत्यर्थः । ज्ञानविषयकत्वघटितधर्मावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकधर्मवत्त्वरूपयोग्यतानिवेशेऽपीत्यर्थः । नायं दोष इति । न गुरुमताऽसङ्ग्रह इत्यर्थः । अयं घट इति प्रत्यक्षसामग्र्या घटविषयकत्व-ज्ञानत्वावच्छिन्नत्वघटितधर्मावच्छिन्ननिरूपितजनकतासत्त्वेन' ज्ञानविषयकत्वघटितानुमितित्वावच्छिन्ननिरूपितस्वरूपयोग्यताया अप्यभावेन ज्ञानग्राहकत्वेन भट्टमतसिद्धान्यत्वस्याक्षतत्वात् ज्ञानग्रहोपधायकत्वनिवेशो व्यर्थं इत्याशयः । निरस्यति—तथा सतीति ।ज्ञानविषयकत्वस्य जन्यतावच्छेदककोटौ प्रवेशे इत्यर्थः । आत्ममनोयोगादीनामिति । ज्ञानत्वावच्छिन्नजनकीभूतानामात्ममनःसंयोगादीनामित्यर्थः । ज्ञानविषयकत्वावच्छिन्नाजनकत्वादिति । तथा च ज्ञानविषयकत्वं नात्मजन्यतावच्छेदकं, ज्ञानविषयकत्वस्य तादृशजन्यतान्यूनवृत्तित्वादिति भावः । तद्घटिततयेति । आत्ममनःसंयोगादिघटितत्वेनेत्यर्थः । वारणीयानां शाब्दसामग्रीणामपीति । घटज्ञानमिति शाब्दसामग्रीणां घटज्ञानवान् घटेच्छावत्त्वादित्यनुमितिसामग्रीणामपीत्यर्थः । अपिना अयं घट इति सामग्रीसमुच्चयः । ज्ञानग्राहकतया भट्टमतसिद्धत्वानुपपत्तेरिति । घटज्ञानमिति शाब्दसामग्रीणाम् आत्ममनोयोगादिघटिततया आत्ममनोयोगादेश्च ज्ञानविषयकत्वघटितधर्मावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकधर्मवत्त्वाभावेन तादृशशाब्दसामग्र्या ज्ञानग्रहस्वरूपयोग्यत्वेन भट्टमतसिद्धत्वाभावात् 'तज्ज्ञानप्रामाण्याग्राहकत्वेन ज्ञानग्रहस्वरूपयोग्यत्वेन च भट्टमतसिद्धभिन्नत्वेन साध्यघटकतया बाधस्तदवस्थ इति भावः ।

आशङ्कते—अथेति । एवं ज्ञानग्रहोपधायकत्वनिवेशे, भवन्मते ज्ञानग्रहोपधायकत्वनिवेशकृन्मते, अन्यत्र अनुमितौ, अनुमित्यवच्छेदेनेति यावत् । प्रामाण्यग्राहकतया प्रामाण्यग्रहनिरूपितफलोपधायकत्वजनकत्वेन अनुमितिजनकपरामर्शवदिति शेषः । तद्घटितानां आत्मादिसहकृतानां, वारणीयसामग्रीणां घटज्ञानमित्यादिशाब्दजनकशब्दरूपकारणघटितसामग्रीणां प्रामाण्याग्राहकतया न भट्टमतसिद्धत्वमिति । प्रमाण्यग्राहकतया भट्टमतसिद्धभिन्नत्वमिति भावः । तथा च वारणीयसामग्रीसङ्ग्रहप्रसङ्ग इति यावत् । समा-

भट्टमतसिद्धत्वविरहेऽपि वारणीयसामग्रीघटकपदज्ञानपरामर्शादीनां प्रामाण्यग्रहानुपधायकत्वेन भट्टमतसिद्धतया तद्घटितसमुदायस्य तथात्वेन भट्टमतसिद्धभिन्नत्वानुपपत्त्या तद्वारणं सुघटमित्युच्यते, तदा एतन्मतेऽप्युक्तरीत्या निर्वाह इति चेत् ? सत्यम् ।

एवं सति पदाजन्ययोग्यताज्ञानघटितयोग्यताविषयकशाब्दसामग्रीविशेषेण गुरुमते प्रामाण्याग्रहाद् बाधस्य शङ्कया ग्रन्थकृतोऽसङ्गतिः । तादृशयोग्यताज्ञानस्य ज्ञानग्राहकतया भट्टाभ्युपगतभिन्नत्वेऽपि कारणान्तरस्य तथात्वेन भट्टमतसिद्धस्य तत्र सत्त्वात्तद्घटितसमुदायात्मकसामग्र्यास्तथात्वेन भट्टमतसिद्धभिन्नत्वानुपपत्तेः ।

---

घातुमुपक्रमते—यदि चेति । तथात्वेन भट्टमतसिद्धत्वविरहेऽपीति । प्रामाण्यग्रहानुपधायकत्वेन भट्टमतसिद्धत्वाऽसम्भवेऽपीत्यर्थः । प्रामाण्यग्रहोपधायकत्वाद् भट्टमतसिद्धभिन्नत्वेऽपीति भावः । वारणीयसामग्रीघटकपदज्ञान-परामर्शादीनां वारणीया या शाब्दादिसामग्री तद्घटकीभूतपदज्ञानपरामर्शादिकारणानां, प्रामाण्यग्रहानुपधायकत्वेन प्रामाण्याऽग्राहकत्वेन, भट्टमतसिद्धतया भट्टमतसिद्धभिन्नत्वाभावेन, तद्घटितसमुदायस्य पदज्ञानपरामर्शादिघटितसमुदायस्य, तथात्वेन प्रामाण्यग्रहानुपधायकत्वेन, भट्टमतसिद्धभिन्नत्वानुपपत्त्या भट्टमतसिद्धभिन्नत्वाभावेन, तद्वारणं वारणीयशाब्दादिसामग्रीवारणम्, सुघटं सुकरम् । तदा एतन्मतेऽपि उक्तस्वरूपयोग्यतावादिमतेऽपि, उक्तरीत्या एककारणस्य प्रामाण्याग्राहकत्वेन भट्टमतसिद्धभिन्नत्वेऽपि अपरेषामतथात्वेन समुदायस्य तेन रूपेण भट्टमतसिद्धभिन्नत्वासम्भवादित्यर्थः ।

एवं सति=एवं स्थिते इत्यर्थः । योग्यताज्ञानघटितयोग्यताविषयकेति । इत्यादि ग्रन्थेन गुरुमते प्रामाण्याभावप्रयुक्तजायमानाया बाधशङ्कायाः ग्रन्थकृतोऽसङ्गतिः सूचिता भवति । अर्थात् योग्यताज्ञानस्य कारणत्वं शाब्दबोधं प्रति अवश्यमेव मन्तव्यम् । अन्यथा वह्निना सिञ्चतीत्यादौ शाब्दबोधापत्तिः स्यात् । अर्थात् योग्यताज्ञानस्य हेतुत्वानङ्गीकारे वह्निना सिञ्चतीत्यत्र एतस्मादेव वाक्याद् वह्निकरणकसेकानुकूलकृतिमान् देवदत्त इत्याकारकशाब्दबोधापत्तिः स्यात् इति । योग्यताज्ञानातिरिक्तसकलशाब्दबोधसामग्र्याः सत्त्वादिति भावः ।

योग्यताज्ञानाभावकाले शाब्दबोधाभावस्याऽनुभवसिद्धत्वेनेति तत्र शाब्दबोधे तद्धी हेतुतया योग्यताज्ञानेनाऽन्यथासिद्धया बाधाभावो न शाब्दबोधहेतुः ।

नव्यास्तु शाब्दबोधे योग्यताज्ञानं न कारणम् । एवं स्थिते वह्निना सिञ्चतीत्यादौ सेके वह्निकरणकत्वरूपशाब्दबोधापत्तिवारणाय सेके वह्निकरणकत्वाभावरूपाऽयोग्यतानिश्चयस्य प्रतिबन्धकत्वं वाच्यम् । अर्थात् 'सेको वह्निकरणकत्वाभाववान्' इत्याकारकबाधनिश्चयात्मक अयोग्यतानिश्चयस्य प्रतिबन्धकत्वेन सत्त्वेन न शाब्दबोधः, अत एव न शाब्दबोधापत्तिरपीति भावः ।

तदभावनिश्चयस्य लौकिकसन्निकर्षाजन्यदोषविशेषाजन्यतद्भानमात्रे प्रतिबन्धकत्वाच्छाब्दबोधं प्रत्यपि प्रतिबन्धकत्वं सिद्धम् । तादृशयोग्यताज्ञानस्येति । तादृशज्ञानविषयकत्वघटितधर्मावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकधर्मवत्त्वरूपयोग्यताज्ञानस्येत्यर्थः ।

अतः प्रामाण्यग्रहफलोपधानप्रयोजकतानवच्छेदकतया ज्ञानग्राहकतावच्छेदकतया च भट्टाभ्युपगतं यादृशं रूपं तदन्यज्ञानग्रहोपधानप्रयोजकतावच्छेदकरूपावच्छिन्नसामग्रीग्राह्यत्वं साध्यमेतदभिमतम् । तथा च कारणसमुदायपर्याप्तस्य ज्ञानग्रहोपधानप्रयोजकतावच्छेदकधर्मस्य स्वरूपयोग्यतानवच्छेदकत्वात् तदवच्छेदकतया भट्टमतसिद्धभिन्नत्वावश्यकत्वात् ज्ञानग्रहोपधाननिवेशनमावश्यकम् ।

तादृशसाध्यानुसरणं निष्प्रयोजनमिति न शङ्क्यम्, वारणीयसामग्रीघटकज्ञानभासकानां सर्वेषां प्रत्येकं मिलितानां च यत्र ज्ञायमानलिङ्गादिविधया प्रामाण्यविषयकानुमित्युपधायकता तादृशसामग्र्याः प्रामाण्याग्राहकत्वेन भट्टमतसिद्धभिन्नतया तज्जन्यप्रामाण्याविषयकज्ञानमादाय बाधस्य दुर्वारतया यथाश्रुतस्य सामग्र्यां प्रामाण्याग्राहकतया भट्टमतसिद्धान्यत्वविशेषणघटितसाध्यस्य विवक्षणासम्भवात् ।

---

वारणीयशाब्दसामग्रीं वारयति—अत इति । प्रामाण्यग्रहफलोपधानप्रयोजकतानवच्छेदकतयेति । प्रामाण्यग्रहनिष्ठप्रयोज्यतानिरूपितफलोपधायकत्वावच्छिन्नप्रयोजकतानवच्छेदकत्वेनेत्यर्थः । ज्ञानग्राहकतावच्छेदकतयेति । ज्ञानग्रहनिष्ठप्रयोज्यतानिरूपितप्रयोजकतावच्छेदकत्वेन चेत्यर्थः । तदन्येत्यादि । तादृशरूपभिन्नं यत् ज्ञानग्रहोपधानप्रयोजकतावच्छेदकं रूपं तदवच्छिन्ना या सामग्री तज्जन्यग्रहविषयत्वमर्थः । प्रामाण्यग्रहफलोपधानप्रयोजकतानवच्छेदकत्वेन ज्ञानग्रहप्रयोजकतावच्छेदकत्वेन भट्टमतसिद्धं रूपं घटज्ञानमिति शाब्दसामग्रीवृत्तिरूपं तदन्यं ज्ञानग्रहफलोपधानप्रयोजकतावच्छेदकरूपमनुव्यवसायादिसामग्रीपर्याप्तरूपं तदवच्छिन्नसामग्रीजन्यग्रहविषयत्वं प्रमात्वे इति भावः । प्रतियोगिकोटौ ज्ञानग्रहजनकताफलोपधानरूपा बोध्येत्याह—तथा चेति । प्रतियोगिकोटौ फलोपधानरूपज्ञानग्राहकतानिवेशे चेत्यर्थः । वारणसमुदायपर्याप्तस्य—घटज्ञानमिति शाब्दसामग्रीपर्याप्तसमुदायस्य । स्वरूपयोग्यतानवच्छेदकत्वादिति । ज्ञानग्रहनिरूपितस्वरूपयोग्यतावच्छेदकत्वाभावादित्यर्थः । तदवच्छेदकतयेति । ज्ञानग्रहस्वरूपयोग्यतावच्छेदकत्वेन । भट्टमतसिद्धभिन्नत्वावश्यकत्वादिति । भट्टमतसिद्धभिन्नत्वापत्तेरित्यर्थः । ज्ञानग्रहोपधाननिवेशनमावश्यकमिति । ज्ञानग्रहोपधायकतावच्छेदकत्वेनेति प्रतियोगिकोटौ वाच्यमित्यर्थः । तथा च घटज्ञानमिति शाब्दसामग्रीपर्याप्तसमुदायस्य ज्ञानग्रहनिरूपितफलोपधानप्रयोजकतावच्छेदकत्वेन भट्टमतसिद्धत्वाद्वारणमिति भावः ।

तादृशसाध्यानुसरणम् उक्तावच्छेदकत्वगर्भसाध्यनिर्वचनम् । तस्य फलमाह—वारणीयसामग्रीघटकज्ञानभासकानां वारणीयघटज्ञानशाब्दानुमितिसामग्रीनिविष्टपदज्ञानपरामर्शादिरूपकारणानां, ज्ञायमानलिङ्गादिविधया व्याप्यत्वेन ज्ञानविषयीभूतलिङ्गस्य प्रामाण्यविषयकानुमित्युपधायकता, इदं ज्ञानं प्रमा पदज्ञानादित्यनुमितिप्रयोजकता, तादृशसामग्र्याः तादृशप्रामाण्यानुमितिसामग्र्याः, प्रामाण्याग्राहकत्वे भट्टमतसिद्धभिन्नतया—यथाश्रुतप्रामाण्याग्राह्यत्वेनेत्यर्थः । तज्जन्यप्रामाण्याविषयकज्ञानमादायेति । घटज्ञानमिति शाब्दजनकसामग्रीजन्यं प्रामाण्याविषयकं यत् ज्ञानं तदादायेत्यर्थः । बाधस्य घटज्ञानमिति शाब्दादिसामग्रीघटकानां प्रामाण्यानुमितिफलोपधायकत्वात्, प्रामाण्यग्रहा-

उक्तसाध्यादरे तु प्रामाण्याविषयकज्ञानग्रहोपधानप्रयोजकतावच्छेदकस्य तज्ज्ञानग्रहोपधायकसमुदायपर्याप्तधर्मस्य प्रामाण्यविषयकतत्तत्कारणलिङ्गककिञ्चित्साध्यकानुमित्युपधानप्रयोजकतानवच्छेदकत्वेन तादृशसामग्रीजन्यप्रामाण्याविषयकग्रहस्य साध्याघटकत्वेन बाधवारणसम्भवात् ।

वस्तुतस्तु प्रामाण्यग्रहानुपधायकत्वेन भट्टमतसिद्धत्वं न पृथङ्निवेश्यते, अपि तु ज्ञानग्राहकान्तर्गतो ग्रह एव प्रामाण्याविषयकत्वेन विशेष्यते लाघवात्, एवं च प्रामाण्याविषयकज्ञानग्रहजनकत्वेन भट्टमतासिद्धत्वनिवेशे व्यवसायादिसामग्रीघटकात्मादेर्भट्टमते-

नुपधायकत्वेन ज्ञानग्रहोपधायकत्वेन च निरुक्तशाब्दबोधसामग्र्या भट्टमतसिद्धभिन्नतया तज्जन्यघटज्ञानशाब्दबोधविषयत्वस्य प्रमात्वेऽसत्त्वाद् बाधस्य दुर्वारतयेत्यर्थः । यथाश्रुतस्य अवच्छेदकत्वाद्यघटितस्य साध्यस्याऽवच्छेदकत्वादिघटितत्वस्य निवेशे तु शाब्दबोधसामग्रीनिष्ठसमुदायत्वस्य प्रामाण्यग्रहोपधायकतानवच्छेदकत्वेन भट्टमतसिद्धतया तदन्यत्वस्य समुदायत्वे विरहान्न बाध इत्याह—उक्तसाध्यादरे तु इति । अत इत्यादिना उक्तावच्छेदकत्वगर्भसाध्यविवक्षणे तु इत्यर्थः । **प्रामाण्याविषयकज्ञानग्रहोपधानप्रयोजकतावच्छेदकस्येति** । प्रामाण्याविषयको यो ज्ञानग्रहः घटज्ञानमिति शाब्दबोधः तदुपधानप्रयोजकीभूतं यत्पदज्ञानादि तन्निष्ठप्रयोजकतावच्छेदकस्येत्यर्थः । तज्ज्ञानग्रहोपधायकसमुदायपर्याप्तधर्मस्य 'प्रामाण्याविषयक'घटज्ञानादिग्रहोपधानप्रयोजकसमुदायानुयोगिकपर्याप्तिप्रतियोगिधर्मस्य ( तादृशशाब्दसामग्रीत्वस्य ), प्रामाण्यविषयकतत्तत्कारणलिङ्गककिञ्चित्साध्यकानुमित्युपधानप्रयोजकतानवच्छेदकत्वेन—प्रामाण्यविषयकं यत्तादृशशाब्दकारणीभूतपदज्ञानादिलिङ्गकयत्किञ्चित्साध्यकानुमित्यात्मकं ज्ञानं 'इदं ज्ञानं प्रमा घटपदज्ञानात् तादृशयोग्यज्ञानादित्यादिज्ञानं' तदुपधानप्रयोजकतानवच्छेदकत्वेनेत्यर्थः । तथा च तादृशशाब्दसामग्रीत्वादिरूपधर्मस्य प्रामाण्यविषयकग्रहप्रयोजकताया 'अतिरिक्तवृत्तित्वेन' अनवच्छेदकत्वेन तादृशप्रामाण्यग्रहफलोपधानप्रयोजकतानवच्छेदकत्वेन, ज्ञानग्रहोपधानप्रयोजकतावच्छेदकत्वेन च भट्टमतसिद्धत्वमिति भावः । तादृशसामग्रीजन्यप्रामाण्याविषयकग्रहस्य प्रामाण्याविषयकज्ञानग्रहोपधानप्रयोजकतावच्छेदकीभूतज्ञानग्रहोपधायकसमुदायकसमुदायपर्याप्तधर्मावच्छिन्ना या तादृशी घटज्ञानादिसामग्री तज्जन्यो यः प्रामाण्याविषयको ग्रहस्तस्येत्यर्थः ।

लाघवादाह—**वस्तुतस्तु** इति । **न पृथङ्निवेश्यते इति** । प्रामाण्याग्राहकत्वेन भट्टमतसिद्धं सत् ज्ञानग्राहकत्वेन भट्टमतसिद्धं यत्तदन्यत्वमिति रीत्या न निवेशनीयमित्यर्थः । भट्टमतसिद्धसामग्रीभिन्नत्वमात्रनिवेशे भट्टमतसिद्धसामग्र्यसङ्ग्रह इत्यत आह—**अपि तु इति** । **ग्रह एवेति** । एवकारेण पृथङ्निवेशव्यावृत्तिः । एवं च ज्ञानग्रहे प्रामाण्याविषयकत्वनिवेशे च । **प्रामाण्याविषयकज्ञानग्रहजनकत्वेन भट्टमतासिद्धत्वनिवेशे इति** । तथा च प्रामाण्याविषयकज्ञानग्रहजनकत्वेन भट्टमतसिद्धा या सामग्री तदन्या या ज्ञानग्राहिका सामग्री तज्जन्यग्रहविषयत्वं पर्यवसितम् । भट्टमते ज्ञानस्यातीन्द्रियतया ज्ञाततालिङ्गकानुमित्यैव व्यवसायग्रहो जायते, तथा च गुरुमतसिद्धव्यवसाय-

ऽपि प्रामाण्याविषयकज्ञानग्रहजनकतया तादृशज्ञानानुमितौ लिङ्गविधया ज्ञानभानेऽपि प्रयोजकतयाऽनुव्यवसायजनकव्यवसायस्य प्रामाण्याविषयकेऽपि स्वान्वयबोधे तन्मते ज्ञायमानपदार्थविधया कारणस्य स्वात्मकज्ञानभासकतया अभिमतसामग्र्या नोक्तप्रकारेण

सामग्री न ज्ञानग्राहकत्वेन भट्टमतसिद्धा एवं मिश्रमतसिद्धानुव्यवसायसामग्री च न ग्राहकत्वेन भट्टमतसिद्धेति प्रामाण्याविषयकज्ञानग्राहकत्वेन भट्टमतसिद्धभिन्नत्वस्य व्यवसायानुव्यवसायसामग्र्यां सत्त्वेन साध्यघटकतया तत्सङ्ग्रहः। भट्टमतसिद्धानुमितिसामग्र्या ज्ञानग्राहकत्वेन भट्टमतसिद्धत्वेऽपि तादृशसामग्रीजन्यानुमित्यात्मकज्ञानग्रहस्य भट्टमते प्रामाण्याविषयकत्वाभावात् ज्ञाततालिङ्गकानुमितिसामग्र्या अपि प्रामाण्याविषयकज्ञानग्राहकत्वेन भट्टमतसिद्धभिन्नतया सङ्ग्रहः। घटज्ञानमिति शाब्दसामग्र्या ज्ञानग्राहकत्वेन भट्टमतसिद्धत्वमेव, अथ च तादृशशाब्दबोधो न प्रामाण्यविषयकः, एवं च प्रामाण्याविषयकज्ञानग्रहजनकत्वेन भट्टमतसिद्धैवेति तादृशसामग्र्याः साध्याघटकत्वेन न बाध इति ध्येयम्।

प्रामाण्याविषयकज्ञानग्रहजनकत्वेन भट्टमतसिद्धसामग्रीभिन्नत्वनिवेशे गुरुमिश्रमते बाधमाह—**व्यवसायादिसामग्रीघटकात्मादेरिति**। व्यवसायादिजनकसामग्रीघटकात्मादेरित्यर्थः। **प्रामाण्याविषयकज्ञानग्रहजनकतयेति**। प्रामाण्याविषयको यो ज्ञानग्रहः घटज्ञानमिति शाब्दबोधादिः तज्जनकतयेत्यर्थः। तादृशशाब्दजनकताऽऽत्मनि भट्टाभिमतेति प्रामाण्याविषयकज्ञानग्रहजनकत्वेनात्मादेर्भट्टमतसिद्धतया तादृशात्मादिघटितव्यवसायादिसामग्र्यां भट्टमतसिद्धभेदो नास्ति एकदेशवृत्तेर्व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकभेदानङ्गीकारात्, इत्थं च भट्टमतसिद्धभिन्नत्वाभावाद् व्यवसायसामग्र्याः साध्याघटकत्वात्साध्याप्रसिद्धिः। गुरुमते कापि ज्ञानग्राहिका सामग्री नास्ति या तादृशभट्टमतसिद्धभिन्ना इति साध्याप्रसिद्धिरिति भावः। तादृशज्ञानानुमितौ समवायेन प्रमाकालीनज्ञानवान् तादात्म्येनात्मनः—एवमवच्छेदकतासम्बन्धेन घटज्ञानवान् तादात्म्येन शरीरादित्याद्यनुमितावित्यर्थः। **लिङ्गविधया** हेतुतयेत्यर्थः। मिश्रमते साध्याप्रसिद्धिं दर्शयति—**अनुव्यवसायजनकव्यवसायस्य**—अस्य **कारणस्येत्यनेन** सम्बन्धः। कुत्र कारणस्येति जिज्ञासायामाह—**स्वान्वयबोध** इति। स्वविषयकज्ञानस्मृतिं प्रति स्वस्य हेतुत्वेन व्यवसायस्य जनकत्वं बोध्यम्। **प्रामाण्याविषयकेऽपीति**। स्वान्वयबोधे इति योजना। स्वं=व्यवसायस्तद्विषयकशाब्दबोधे इत्यर्थः। तन्मते भट्टमते। **ज्ञायमानपदार्थविधया कारणस्येति**। व्यवसायस्येत्यनेन सम्बन्धः। भट्टमते व्यवसायविषयकशाब्दबोधे व्यवसाय एव हेतुः। एतन्मते पदं न करणं किन्तु पदार्थ एव। वाच्यार्थबोधे चिन्तावशोपस्थिताः पदार्था एव हेतवो न तु पदानि। तथा च मिश्रमतसिद्धानुव्यवसायसामग्री प्रामाण्याविषयकज्ञानग्रहस्वरूपयोग्यत्वेन भट्टमतसिद्धैवेति भट्टमतसिद्धभिन्नत्वाभावस्य मिश्रमतसिद्धानुव्यवसायसामग्र्यामसत्त्वेन तादृशसामग्र्याः साध्याघटकतया मिश्रमते न काचिदीदृशी प्रसिद्धा सामग्री या प्रामाण्याविषयकज्ञानग्रहजनकत्वेन भट्टमतसिद्धभिन्ना स्यात्तथा च मिश्रमतेऽपि साध्याप्रसिद्धिरिति भावः। **स्वात्मज्ञानभासकतयेति**। व्यव-

अयं घट इत्यादि ज्ञानजनकसामग्र्याः प्रामाण्याग्राहकत्वेन भट्टाङ्गीकृतत्वात् गुरुमतसाधारण्यसम्पादनाय ज्ञानग्राहकत्वेनेति ।

---

भट्टमतासिद्धत्वम्, अतः फलोपधायकतावच्छेदकधर्म एव तादृशज्ञानग्रहफलोपधायकतावच्छेदकतया भट्टमतसिद्धभिन्नत्वं निवेश्यमित्यग्रिमग्रन्थसङ्गतिः ।

ज्ञानग्राहकत्वेनेत्यस्य प्रयोजनं स्वयमाह—अयं घट इत्यादीति । भट्टाङ्गीकृतत्वादिति ।

---

सायात्मकज्ञानभानप्रयोजकतयेत्यर्थः । अभिमतसामग्र्या इति । साध्यघटकतया अभिमता या सामग्री तस्याः एवं मिश्रमते साध्यघटकतया अभिमता या सामग्री तस्या इत्यर्थः । न इति । भट्टमतासिद्धत्वमित्यनेन सम्बन्धः । उक्तप्रकारेण न भट्टमतासिद्धत्वमिति योजना । उक्तप्रकारेणेति । उपर्युक्तो यः प्रकारः व्यवसायादिसामग्रीघटकेत्यारभ्य स्वात्मकज्ञानभासकतयेत्येतत्पर्यन्तो व्यापारस्तेनेत्यर्थः । तृतीयार्थः प्रयोज्यत्वम्, उक्तप्रकारप्रयोज्यो भट्टमतासिद्धत्वाभाव इति योजना । तथा च गुरुमते मिश्रमते च साध्याप्रसिद्धिवारणायाह—फलोपधायकतावच्छेदकधर्म एवेति । तादृशज्ञानग्रहेति । प्रामाण्याविषयकज्ञानग्रहेत्यर्थः । तथा च प्रामाण्याविषयकज्ञानग्रहफलोपधायकतावच्छेदकतया भट्टमतसिद्धं यद्रूपं तद्भिन्नं ज्ञानग्रहफलोपधायकतावच्छेदकं रूपं तद्रूपावच्छिन्नसामग्रीजन्यग्रहविषयत्वम् । व्यवसायसामग्रीमतसमुदायत्वस्य प्रामाण्याविषयकज्ञानग्रहस्वरूपयोग्यतावच्छेदकतया भट्टाभ्युपगतत्वेऽपि न प्रामाण्याविषयकज्ञानग्रहफलोपधायकतावच्छेदकतया भट्टाभ्युपगतत्वाद् व्यवसायसाध्यघटकत्वम् । एवमनुव्यवसायेऽपि । घटज्ञानमिति शाब्दसामग्रीगतसमुदायत्वं तु तथात्वेन भट्टाभ्युपगतमिति न बाधः । अग्रिमग्रन्थसङ्गतिरिति । ओदनकामकार्यताज्ञानविषयः पाक इत्यत्र तादृशयोग्यताज्ञानघटितसामग्रीगतसमुदायत्वस्य प्रामाण्याविषयकज्ञानग्रहफलोपधायकतया भट्टमतसिद्धत्वाभावात्तादृशसामग्र्याः साध्यघटकतया तज्जन्यग्रहविषयत्वस्य प्रमात्वेऽसत्त्वाद् बाधः ।

ज्ञानग्राहकत्वेनेत्यस्येति । प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन भट्टमतसिद्धभिन्नत्वदले इत्यादिः । स्वयमाहेति । तज्ज्ञानप्रामाण्याग्राहकत्वेनेत्यस्य प्रयोजनं स्फुटमिति स्वयं नोक्तमिति भावः । दीधितौ—अयं घट इत्यादि ज्ञानजनकसामग्र्या इति । अयं घट इत्यादिव्यवसायजनकसामग्र्या इत्यर्थः । प्रामाण्याग्राहकत्वेन भट्टाङ्गीकृतत्वादिति । ज्ञाततालिङ्गकानुमितिसामग्र्या एव प्रामाण्यग्राहकत्वेन भट्टाङ्गीकृतत्वादिति भावः । तथा च तज्ज्ञानप्रामाण्याग्राहकत्वेन भट्टमतसिद्धभिन्नत्वमात्रनिवेशे अयं घट इति व्यवसायसामग्र्यास्तज्ज्ञानप्रामाण्याग्राहकत्वेन भट्टमतसिद्धतया तद्भिन्नत्वाभावेन साध्याघटकतया गुरुमते साध्याप्रसिद्धेः । ज्ञानग्राहकत्वोपादाने तु व्यवसायसामग्र्याः ज्ञानग्राहकत्वेन भट्टमतसिद्धभिन्नतया तत्सङ्ग्रहः । गुरुमतसाधारण्यसम्पादनायेति । भट्टमते ज्ञानस्यातीन्द्रियतया ज्ञानानुव्यवसायाभावेन मिश्रमतसिद्धानुव्यवसायसामग्र्या

न च तादृशसामग्र्यन्तर्गतस्य घटत्वादिग्राहकसंयुक्तसमवायस्य समवायानङ्गीकर्तृ-भट्टमतसिद्धत्वाभावान्न तादृशसामग्र्या भट्टमतसिद्धत्वमिति वाच्यम्। समवायत्वेन तदनङ्गीकारेऽपि घटत्वादिसम्बन्धत्वेन तदभ्युपगमात्। घटादौ समवायस्यैव वस्तुतो घटत्वादिसम्बन्धत्वात्।

ननु प्रामाण्याग्राहकपरोक्षसामग्रीभिन्नत्वं निवेश्यते, तावतैव गुरुमते व्यवसायात्मक-ज्ञानप्रत्यक्षसामग्र्या मिश्रमतेऽनुव्यवसायसामग्र्याः परोक्षसामग्रीभिन्नत्वेन भट्टमते च ज्ञाततालिङ्गकानुमितिसामग्र्याः परोक्षसामग्रीत्वेऽपि प्रामाण्याग्राहकभिन्नत्वेन विशिष्ट-

---

अलीकतया तादृशसामग्र्यां तज्ज्ञानप्रामाण्याग्राहकत्वेन भट्टमतसिद्धभिन्नत्वसत्त्वात् तादृशसामग्र्याः साध्यघटकतया मिश्रमतसङ्ग्रहात्, मिश्रमतसाधारण्यायेति नोक्तम्।

तज्ज्ञानप्रामाण्याग्राहकत्वेन भट्टमतसिद्धभिन्नत्वमात्रनिवेशेऽपि न गुरुमतसाधारण्यानुपपत्तिरित्याशङ्कते—न चेति। तादृशसामग्र्यन्तर्गतस्य अयं घट इति व्यवसाय-जनकीभूतसामग्रीघटकस्य, घटत्वादिग्राहकसंयुक्तसमवायस्य घटत्वघटरूपादिग्रहजनको य इन्द्रियसंयुक्तसमवायः सन्निकर्षस्तस्य। समवायानङ्गीकर्तृभट्टमतसिद्धत्वाभावादिति। भट्टमतसिद्धभिन्नत्वादित्यर्थः। तादृशसामग्र्याः गुरुमतसिद्धाया अयं घट इति व्यव-सायजनकचतुःसंयुक्तसमवायाऽस्ति सामग्र्याः। न भट्टमतसिद्धत्वमिति। समवायानङ्गी-कारादिति भावः। तथा च गुरुमतसाधारण्यस्य सिद्धत्वात्तत्साधारण्यसम्पादनाय ज्ञान-ग्राहकत्वेनेति विशेषणं भेदप्रतियोगिकोटौ व्यर्थमेवेति भावः। समाधत्ते—समवायत्वे-नेति। तदनङ्गीकारेऽपि समवायानङ्गीकारेऽपि, तदभ्युपगमात् समवायस्वीकारात्, विशिष्टप्रत्यक्षानुरोधादिति भावः। ननु घटत्वादिसम्बन्धत्वेन कस्यचित्सम्बन्धस्य स्वीकारेऽपि समवायस्तु भट्टमतसिद्धभिन्न एवेत्याशङ्कायामाह—घटादौ समवायस्यै-वेति। एवकारेण स्वरूपादिव्यावृत्तिः।

गुरुमतसिद्धसामग्र्यामपि समवायस्याऽप्रवेशादवशिष्टसामग्र्यां प्रामाण्याग्राहकत्वेन भट्टमतसिद्धत्वस्यैव सत्त्वेन तत्सङ्ग्रहार्थं तन्निवेशो युक्त एवेति विभावनीयम्।

लाघवमादृत्याऽऽशङ्कते—नन्वित्यादिना। तावतैव प्रामाण्याग्राहकपरोक्षसामग्री-भिन्नत्वनिवेशेनैव, एवकारेण ज्ञानग्राहकत्वेनेत्यस्य व्यावृत्तिः। तथा च प्रामाण्याग्राहक-परोक्षसामग्रीभिन्ना या ज्ञानग्राहिका सामग्री तज्जन्यग्रहविषयत्वं पर्यवसितम्। व्यवसायात्मकज्ञानप्रत्यक्षसामग्र्याः—गुरुमतसिद्धस्वप्रकाशात्मकं यद् व्यवसायज्ञानं तज्जनिका या प्रत्यक्षसामग्री इन्द्रियसन्निकर्षरूपा तस्याः, परोक्षसामग्रीभिन्नत्वेनेत्यने-नाऽस्या अन्वयः। साध्याघटकत्वादिति शेषः। अनुव्यवसायसामग्र्याः व्यवसायविषयको योऽनुव्यवसायात्मको मानसग्रहस्तज्जनकसामग्र्याः, परोक्षसामग्रीभिन्नत्वेन—साध्य-घटकत्वसम्भवादिति शेषः। ननु परोक्षसामग्रीभिन्नत्वमेवास्तु किं प्रामाण्याग्राहकत्व-विशेषणेनेत्यत आह—भट्टमते चेति। ज्ञाततालिङ्गकानुमितिसामग्र्याः—ज्ञातता-लिङ्गका यानुमितिः 'परोक्षज्ञानं' तत्सामग्र्याः, परोक्षसामग्रीत्वेऽपि अनुमित्यात्मक-परोक्षज्ञानजनकसामग्रीत्वेऽपि, परोक्षसामग्रीभिन्नत्वाभावेऽपीति यावत्। प्रामाण्या-ग्राहकभिन्नत्वेन—प्रामाण्याग्राहकत्वरूपविशेषणाभावेन, विशिष्टभेदस्य प्रामाण्या-

भेदस्याक्षततया मतत्रयसाधारण्योपपत्तेः। प्रामाण्याग्राहकशाब्दानुमितिसामग्र्योश्च तादृशभेदासत्त्वेन व्यावृत्तिसम्भवादिति चेन्न। ज्ञाततालिङ्गकानुमितिसामग्र्याः प्रामाण्यग्राहकत्वासिद्धिकाले तज्जन्यानुमितेः साध्यघटकयावद्ग्रहान्तर्गतत्वासिद्ध्या उक्तसाध्यसिद्धावपि तादृशानुमितेः प्रामाण्यावगाहिताया असिद्ध्या भट्टस्योद्देश्यासिद्धेः।

प्रामाण्यग्राहकतयोभयवादिसिद्धानुमित्यादिसामग्रीग्राह्यतामादायापि साध्यपर्यवसानात्।

नैयायिकमतासिद्धत्वोक्तौ अनुव्यवसायसामग्र्यसङ्ग्रहः। गुरुमतासिद्धत्वं मिश्रमतासिद्धत्वं वा यदि निवेश्यते तदा व्यवसायसामग्र्या गुरुमते अनुव्यवसायसामग्र्याश्च मिश्र-

---

ग्राहकपरोक्षसामग्रीभेदस्य। अक्षततयेति। भट्टमतसिद्धज्ञाततालिङ्गकानुमितिसामग्र्यां सत्त्वेनेत्यर्थः। मतत्रयेति। गुरुमिश्रमतत्रयेत्यर्थः। प्रामाण्याग्राहकशाब्दानुमितिसामग्र्योश्चेति। प्रामाण्याविषयकघटज्ञानमिति शाब्दजनिका पदज्ञानादिघटिता सामग्री या च घटज्ञानादिसाध्यकानुमितिसामग्री तयोश्चेत्यर्थः। तादृशभेदासत्त्वेनेति। प्रामाण्याग्राहकपरोक्षसामग्रीप्रतियोगिकभेदासत्त्वेनेत्यर्थः। तयोः सामग्र्योः प्रामाण्याग्राहकत्वे सति परोक्षसामग्रीत्वादिति भावः। व्यावृत्तिसम्भवात् निराकरणसम्भवात्, तथा च न बाध इत्याशयः। समाधत्ते—इति चेन्नेति। ज्ञाततालिङ्गकानुमितिसामग्र्याः घटो ज्ञानविषयो ज्ञाततावत्त्वादित्यनुमितिजनिका या ज्ञानजन्यज्ञाततावान्घट इति परामर्शघटिता सामग्री तस्याः। प्रामाण्यग्राहकत्वासिद्धिकाले प्रामाण्यग्रहजनकत्वज्ञानविरहकाले। ज्ञाततालिङ्गकानुमितिसामग्रीप्रमात्वविषयकज्ञानजनिकेति ज्ञानविरहदशायामिति यावत्। तज्जन्यानुमितेः ज्ञाततालिङ्गकानुमितिसामग्रीजन्यनुमित्तेः। साध्यघटकयावद्ग्रहान्तर्गतत्वासिद्ध्येति। प्रामाण्याग्राहकपरोक्षसामग्रीभिन्नज्ञानग्राहकसामग्रीजन्ययावद्ग्रहविषयत्वरूपं यत्साध्यं तत्सन्निविष्टो यो यावद्ग्रहस्तद्घटकत्वासम्भवेनेत्यर्थः। ज्ञाततालिङ्गकानुमितिसामग्र्याः प्रामाण्याग्राहकपरोक्षसामग्रीभिन्नपदेन धर्तुमशक्यत्वात्। उक्तसाध्यसिद्धावपि उक्तसाध्यविषयकज्ञानसत्त्वेऽपि। तादृशानुमितेः प्रामाण्यावगाहितायाः प्रामाण्याग्राहकत्वग्रहकालीनसामग्रीजन्यानुमितेः प्रामाण्यविषयकत्वस्य, असिद्ध्या ज्ञानाभावेन, तादृशानुमित्यात्मकग्रहविषयत्वस्य प्रमात्वेऽसत्त्वेनेति यावत्। उद्देश्याऽसिद्धेरिति। प्रमात्वे स्वतोग्राह्यत्वाभिप्रायविरोधापत्तेरित्यर्थः। अस्तु दशाविशेषे भट्टमताऽसङ्ग्रह इति चेत्तदाप्याह—प्रामाण्यग्राहकतयेति। उभयवादिसिद्धेति। नैयायिकभट्टोभयवादिसिद्धेत्यर्थः। अनुमित्यादिसामग्रीग्राह्यतामादायापीति। इदं ज्ञानं प्रमा संवादिप्रवृत्तिजनकत्वादित्यनुमितिसामग्रीजन्यग्रहविषयत्वमादायापीत्यर्थः। साध्यपर्यवसानादिति। साध्यसिद्धेरित्यर्थः। तथा च भट्टमतासङ्ग्रहे इष्टापत्तौ गुरुमिश्रमतासङ्ग्रहे एव इष्टापत्तिः स्वीक्रियतां चेत्तदेव साध्यं लाघवादिति भावः। ननु तथापि प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन नैयायिकमतसिद्धभिन्ना या ज्ञानग्राहिका सामग्री तज्जन्यग्रहविषयत्वमेवोच्यतामित्यत आह—नैयायिकमतासिद्धत्वोक्ताविति। अनुव्यवसायसामग्र्यसङ्ग्रह इति। मिश्रमतासिद्धानुव्यवसायसामग्र्यसङ्ग्रह

मते प्रामाण्यग्राहकतया विशिष्टभेदसत्त्वेऽपि उपनीतघटज्ञानादिविषयकस्य ज्ञानजन्य-ज्ञाततावान् घट इत्यादि प्रत्यक्षस्य सामग्र्या गुरुमिश्रमतासिद्धतया घटज्ञानादिप्रामाण्या-ग्रहाद् भट्टमते बाधः स्यादिति भट्टमतसिद्धभिन्नत्वोपादानम् ।

इत्यर्थः । अनुव्यवसायस्य न्यायमते प्रमात्वाविषयकतया तज्जनकसामग्र्याप्रामाण्याग्राह-कत्वेन न्यायमतसिद्धत्वादेवेति भावः । तथा चानुव्यवसायसामग्र्यास्तज्ज्ञानप्रामाण्या-ग्राहकत्वेन ज्ञानग्राहकत्वेन नैयायिकमतसिद्धतया तद्भिन्नत्वविरहेण तदसङ्ग्रहे मिश्र-स्योद्देश्यासिद्धेः । साध्याप्रसिद्धिस्तु न, इदं ज्ञानं प्रमा सफलप्रवृत्तिजनकत्वादित्यनु-मितिमादाय साध्यसत्त्वोपपत्तेः । व्यवसायसामग्र्यसङ्ग्रहस्तु नास्ति तादृशसामग्र्या न्याय-मते ज्ञानग्राहकत्वविरहेण प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन न्यायमतसिद्धभिन्नत्वा-दिति । एवं ज्ञाततालिङ्गकानुमितिसामग्री अपि न प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन न न्यायमतसिद्धा, तादृशसामग्र्या अलीकत्वात्, तथा च न्यायमतसिद्धसामग्रीभिन्नत्वात् तत्सङ्ग्रह इति ध्येयम् ।

ननु प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन गुरुमतसिद्धसामग्रीभिन्नत्वोक्तौ न दोषः, व्यवसायसामग्र्या गुरुमते प्रामाण्यग्राहकत्वेन प्रामाण्याग्राहकत्वेन गुरुमतसिद्धसामग्री-भिन्नत्वात्तत्सङ्ग्रहः । स्वप्रकाशवादिगुरुमतेऽनुव्यवसायानङ्गीकारादनुव्यवसायसामग्र्या गुरुमतसिद्धतादृशसामग्रीभिन्नत्वात्तत्सङ्ग्रहः । एवं ज्ञाततालिङ्गकानुमितिसामग्र्या अपि गुरुमतसिद्धतादृशसामग्रीभिन्नत्वात् तत्सङ्ग्रहः ।

एवं प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन मिश्रमतसिद्धसामग्रीभिन्नत्वनिवेशे व्यव-सायसामग्रीज्ञानग्राहकत्वेन मिश्रमतसिद्धभिन्नत्वात् तत्सङ्ग्रहः ।

अनुव्यवसायसामग्र्या मिश्रमते प्रामाण्यग्राहकत्वेन प्रामाण्याग्राहकत्वेन मिश्रमत-सिद्धभिन्नतया तत्सङ्ग्रहः । ज्ञाततालिङ्गकानुमितिसामग्र्याश्चालीकतया मिश्रमतसिद्ध-तादृशसामग्रीभिन्नतया तत्सङ्ग्रहः । शाब्दसामग्री च प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन च मिश्रमतसिद्धैवेति न बाधः ।

प्रामाण्यग्राहकतयेति । गुरुमतसिद्धव्यवसायप्रामाण्याग्राहकत्वविरहे वेति यावत् । विशिष्टभेदसत्त्वेऽपीति । प्रामाण्याग्राहकत्वरूपविशेषणाभावप्रयुक्तः प्रामाण्याग्राहकत्वेन मिश्रमतसिद्धसामग्रीभिन्नत्वेऽपीत्यर्थः । उभयसामग्रीसङ्ग्रहेऽपि उभयमते दोषमाह— उपनीतघटज्ञानादिविषयकस्य ज्ञानलक्षणासन्निकर्षजन्यघटज्ञानादिविषयकस्य । गुरुमिश्र-मतासिद्धतयेति । प्रामाण्यग्राहकत्वेन गुरुमिश्रमतासिद्धत्वं बोध्यम् । अथवा उभय-मतेऽपि ज्ञाततायाः अस्वीकारेण विशेष्याभावप्रयुक्तगुरुमिश्रमतसिद्धसामग्रीभिन्नत्वं बोध्यम् । घटज्ञानादिप्रामाण्याग्रहादिति । घटज्ञानवृत्तिप्रमात्वविषयकज्ञानाजनना-दित्यर्थः । तादृशप्रत्यक्षसामग्रीजन्यग्रहविषयत्वस्य प्रमात्वेऽभावादिति भावः । भट्टमते बाध इति । भट्टमते एव बाधः, न तु गुरुमिश्रमते; तन्मते तादृशसामग्र्या एवाऽभावात् । ज्ञाततावादिभट्टमते एव तादृशसामग्र्याः प्रसिद्धया तज्जन्यग्रहविषयत्वस्य पक्षेऽभावात् । अत एव ज्ञानजन्यत्वविशेषणमपि सार्थकम् । भट्टमतसिद्धभिन्नत्वोपादानमिति । तथा च

यत्तु 'पश्यतः श्वेतिमारूपमि'त्यादिन्यायेन पदजन्योपस्थितिविषयपदार्थान्वयबोधस्य ज्ञानावगाहिनः सामग्र्या मिश्रादिमतसिद्धतया घटज्ञानादिप्रामाण्याग्रहाद् भट्टमतेऽपि बाधः स्यादिति मिश्रादिमतसिद्धत्वोपेक्षाबीजवर्णनम् । तदसत् । भट्टमतसिद्धभिन्नत्वनिवेशेऽपि ज्ञानविषयो घट इत्यादिमानसोपनीतभानसामग्र्या मिश्रमते प्रामाण्याग्रहेण बाधस्य दुर्वारत्वात् ।

भट्टेनोपनीतभानाङ्गीकारेऽपि बहिर्विशेष्यकज्ञाने मनसोऽसामर्थ्येन घटादिविशेष्यकमानसोपनीतभानानङ्गीकारात् । तत्र पदार्थकरणकान्वयबोधस्यैवोपपत्तौ तादृशमानसोपनीतभानसामग्र्या भट्टमतासिद्धत्वात् ।

---

तादृशप्रत्यक्षसामग्र्याः प्रामाण्याग्राहकत्वेन भट्टमतसिद्धत्वमेव अनुमितिसामग्र्या एवं तन्मते प्रामाण्यग्राहकत्वात् ।

गुरुमतसिद्धभिन्नत्वस्य मिश्रमतसिद्धभिन्नत्वस्य वा निवेशे यत्तु मतेन दोषान्तरमुपन्यस्य तन्मतं दूषयति—यत्त्विति । पश्यतः श्वेतिम आरूपमिति छेदः । श्वेतरूपमीषत्पश्यत इत्यर्थः । आङ् ईषदर्थे ।

'पश्यतः श्वेतिमारूपं ह्रेषाशब्दं च शृण्वतः ।
खुरविक्षेपशब्दं च श्वेतोऽश्वो धावती धीः' ॥

अश्वत्वस्य, धावनस्य च आनुमानिकत्वलाभाय क्रमशः अश्वसमवेतह्रेषाखुरविक्षेपविजातीयध्वन्यात्मकशब्दयोः श्रवणं प्रतिपादितं भवति कारिकायाम् । श्वेताश्ववृत्तितया तदीयं तन्निष्ठं वा श्वैत्यं समनुभूय श्वेतगवादिव्यक्तिविशेषेण संसर्गाभावविषयविषयकनिश्चये जायमाने श्वैत्यमिदं विजातीयम् अश्वसंसर्गं विनाऽनुपपन्नम् इति ज्ञानमेव अश्वत्वस्याऽवभासकं भवति । खुरविक्षेपशब्दश्रवणानन्तरं स विजातीयः शब्दो धावनकर्तृत्वं विना सर्वथाऽनुपपन्नम्—इति च ज्ञानमर्थापत्तिप्रमाणेन धावनमेव विषयीकरोति ।

अत्र केचिदित्थं वदन्ति—विवदन्ते चात्र बहवः, यत् तादृशश्वेतरूपस्याऽश्वान्यद्रव्यवृत्तित्वबाधनिश्चयसाहचर्यावच्छिन्ना सती तथा धावनशून्यद्रव्यवृत्तित्वबाधज्ञानसाहित्यावच्छिन्ना च सा द्रव्यवृत्तित्वधीरश्व-धावनोभयलिङ्गिका सतीत्यनुमीयते ।

अपि च 'आत्मा वाऽरे श्रोतव्यो मन्तव्य' इत्यादिश्रुत्यनुरोधेन 'श्रु' धातोः श्रावणप्रत्यक्षे एव शक्तिः । तथा च चक्षुरादिवत् शब्दोऽपि प्रत्यक्षान्तर्गत एव न तु प्रमाणान्तरम् इति ।

भट्टेनोपनीतभानाङ्गीकारेऽपीति । भट्टेनापि उपनीतभानस्वीकारात् इति तेषां मतेऽपि उपनीतं विशेषणतयैव भासते । ज्ञानलक्षणासन्निकर्षजन्यमेव प्रत्यक्षात्मकं ज्ञानमुपनीतभानमुच्यते । अत एवोपनीतभानं प्रत्यक्षमाश्रित्य सन्तिष्ठते, न त्वनुमित्यादिकमपीति । ज्ञानलक्षणसन्निकर्षेण ज्ञातम् उपनीतं भवतीत्युच्यते । लौकिकाऽलौकिकोभयसन्निकर्षजन्यं ज्ञानम् उपनीतभानमुच्यते । सन्निकर्षजन्यं सर्वमेव ज्ञानं प्रत्यक्षात्मकं ज्ञानं भवति न तु अनुमितिः, शाब्दबोधादिकमपि उपनीतभानत्वेन भासमानं भवतीति ।

यदि च तादृशज्ञानमुभयमतसिद्धमेव, तस्य मानसप्रत्यक्षरूपतैव भट्टेन नोपेयते, किन्तु पदार्थकरणकान्वयबोधरूपतैवेत्यसंसर्गाग्रहपदार्थोपस्थितिरूपा तत्सामग्र्युभयसिद्धैवेति तद्वारणमिति मन्यते, तदा मिश्रमतभिन्नत्वनिवेशेऽपि तुल्यरीत्या भट्टमते उक्तबाधस्य वारणसम्भवात् ।

अथ भट्टमतसिद्धभिन्नत्वनिवेशे उपनीतघटज्ञानविषयकपटज्ञानानुव्यवसायेन घटज्ञानप्रामाण्याग्रहात् मिश्रमते बाधः । तादृशस्यापि पटज्ञानानुव्यवसायस्य भट्टानभ्युपगतत्वात्तत्सामग्र्याः पटज्ञानादिघटितायास्तथात्वात् ।

न च तत्र घटज्ञानपटज्ञानयोर्भासकं सामग्रीद्वयं तत्संवलनादुभयविषयकमेकं ज्ञानम्, एवं तत्र घटज्ञानग्राहिका तज्ज्ञानादिरूपा सामग्री भट्टेनान्वयबोधसामग्रीत्वेन उपेयत एवेति वाच्यम् ।

यतः समूहालम्बनस्थल एव ग्राहकसामग्रीभेदः, यत्र चोपनीतघटज्ञानसमानाधिकरणपटज्ञानत्वादिना तादृशघटज्ञानविशिष्ट आत्मनि पटज्ञानत्वेनैव वा पटज्ञानानु-

---

तादृशज्ञानमिति । ज्ञानविषयो घट इति ज्ञानमित्यर्थः । उभयमतसिद्धम् इति । भट्टमिश्रोभयमताभिमतमित्यर्थः । तद्वारणम् इति । पूर्वोक्तबाधवारणम् ।

आशङ्कते—अथेति । भट्टमतसिद्धभिन्नत्वनिवेशे । प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन भट्टमतसिद्धसामग्रीभिन्नत्वनिवेशे । उपनीतघटज्ञानविषयकपटज्ञानानुव्यवसायेन । ज्ञानलक्षणासन्निकर्षेण जनिते यद् घटज्ञानभानं तदात्मकं यत्पटज्ञानस्यानुव्यवसायात्मकं ज्ञानं तेन । घटज्ञानं घटज्ञानवानहमित्याकारकेनेति यावत् । घटज्ञानप्रामाण्याग्रहादिति । पटज्ञानवृत्तिप्रामाण्यस्याविषयीकरणादित्यर्थः । प्रामाण्याग्राहकत्वेन भट्टमतसिद्धभिन्नायास्तादृशानुव्यवसायसामग्र्या मिश्रमतसिद्धायाः सङ्ग्रहापत्त्या तज्जन्यग्रहविषयत्वस्य घटज्ञानवृत्तिप्रामाण्येऽसत्त्वादिति भावः । बाध इति । बाधं सम्पादयति—तादृशस्यापि तादृशमिश्रमतसिद्धमानसप्रत्यक्षस्यापि । भट्टानभ्युपगमादिति । तन्मते ज्ञानस्यातीन्द्रियत्वादिति भावः । तत्सामग्र्याः उक्तानुव्यवसायसामग्र्याः, पटज्ञानादिघटिताया आदिपदादात्ममनःसन्निकर्षो ग्राह्यः । तथात्वाद् भट्टमतसिद्धभिन्नत्वात् ।

उक्तबाधनिरासायाऽऽशङ्कते—न चेति । तत्र घटज्ञानवान् पटज्ञानवानहमित्यनुव्यवसाये, सामग्रीद्वयं घटज्ञानभासको ज्ञानलक्षणासन्निकर्षः पटज्ञानभासिका अनुव्यवसायसामग्री आत्ममनःसन्निकर्षः । तत्संवलनादिति । तादृशसामग्रीद्वयसभाजात् । उभयविषयकमेकं ज्ञानं घटज्ञान-पटज्ञानोभयविषयकम् एकं ज्ञानमुत्पद्यते इत्यर्थः । तत्र तादृशसामग्र्योः, घटज्ञानग्राहिका तज्ज्ञानादिरूपा सामग्री घटज्ञानग्रहजनिका या घटज्ञानरूपा सामग्री । भट्टेनान्वयबोधसामग्रीत्वेनोपेयते इति । भट्टेनान्वयबोधजनकसामग्रीत्वेन स्वीक्रियते इत्यर्थः । तथा च घटज्ञानग्राहकसामग्र्यां भट्टमतसिद्धत्वादेव भट्टमतसिद्धभिन्नत्वविरहेण तस्याः साध्याघटकत्वान्न तामादाय बाध इति भावः । समाधत्ते—यत इति । समूहालम्बनस्थल एवेति । नानाधर्मिविशेष्यकनानाधर्मप्रकारकज्ञानं

व्यवसायस्तत्र तादृशविशिष्टविषयकानुव्यवसायसामग्र्या विशिष्टघटकतया घटज्ञानग्राहिकाया भट्टमतासिद्धाया घटज्ञानप्रामाण्याग्राहकत्वाद् बाध एव; एवमुपनीतघटज्ञानरूपविषयोपरक्ततद्विषयकशाब्दबोधाद्यनुव्यवसायसामग्र्या घटज्ञानग्राहिकया तदीयप्रामाण्याग्रहादपि बाधो दुर्वारः।

न च घटज्ञानं जानामीत्यादिशाब्दबोधाद्यनुव्यवसाये घटत्ववतीत्यादिप्रामाण्यमपि भासते, तद्विषयीभूते घटज्ञानमित्यादिव्यवसायेऽपि तत्प्रामाण्यसत्त्वादिति वाच्यम्।

---

समूहालम्बनम्, तादृशस्थले एवेत्यर्थः। ग्राहकसामग्रीभेदः ज्ञानजनकासामग्रीणां भेदः। एवकारव्यवच्छेद्यं स्पष्टयति—यत्र चेति। यादृशस्थले चेत्यर्थः। उपनीतघटज्ञानसमानाधिकरणपटज्ञानत्वादिनेति। उपनीतं यद् घटज्ञानं तत्समानाधिकरणं यत्पटज्ञानं तत्त्वेनेत्यर्थः। तादृशघटज्ञानविशिष्टे उपनीतघटज्ञानाधिकरणे। पटज्ञानत्वेनैव वेति। पटज्ञानानुव्यवसायः। घटज्ञानसमानाधिकरणपटज्ञानवानहं—घटज्ञानवानहं पटज्ञानवानिति वाऽनुव्यवसाय इति भावः। तत्र तादृशज्ञानस्थले। तादृशविशिष्टविषयकानुव्यवसायसामग्र्या इति। घटज्ञानसमानाधिकरणपटज्ञानवानहं, घटज्ञानवानहं पटज्ञानवानित्याकारको योऽनुव्यवसायस्तज्जनकीभूतघटज्ञानपटज्ञानादिघटिता एकैव सामग्री 'न सामग्रीभेदः' तस्या इत्यर्थः। विशिष्टघटकतया विशिष्टरूपैकसामग्रीनिविष्टतया, घटज्ञानग्राहिकायाः घटज्ञानग्रहजनिकायाः, भट्टमतासिद्धत्वे हेतुः। घटज्ञानप्रामाण्याग्राहकत्वादिति। घटज्ञानवृत्तिप्रमात्वग्रहाजनकत्वादित्यर्थः। तादृशसामग्रीजन्यग्रहविषयत्वस्य तादृशप्रमात्वे विरहाद् बाध इति भावः। प्रत्यक्षानुव्ययसायसामग्रीमादाय दोषमुक्त्वा शाब्दानुव्यवसायसामग्रीमादायापि मिश्रमते बाधमाह—एवमिति। उपनीतघटज्ञानरूपविषयोपरक्ततद्विषयकशाब्दबोधाद्यनुव्यवसायसामग्र्या इति। ज्ञानलक्षणासन्निकर्षजन्यघटज्ञानरूपविषयविशिष्टं यत् तद्विषयको यः शाब्दानुव्यवसायः 'अनुमित्यनुव्यवसायो वा' घटज्ञानज्ञानवानहमित्याकारकः तज्जनकशाब्दानुमित्यादिघटिता या सामग्री तथेत्यर्थः। घटज्ञानग्राहिकयेति। घटज्ञानग्रहे जनिकयेत्यर्थः। एतेनानुयोगिविशेषणसत्त्वं सूचितम्। तदीयप्रामाण्याग्रहादिति। घटज्ञानीयप्रामाण्यस्याऽविषयीकरणादित्यर्थः। तथा च भट्टमतसिद्धभिन्नतादृशसामग्रीजन्यग्रहविषयत्वस्य प्रमात्वेऽसत्त्वाद् बाधो दुर्वार इत्याशयः। कस्यचिन्मतमुपन्यस्य दूषयति—न चेति। घटज्ञानं जानामीत्यादिशाब्दबोधाद्यनुव्यवसाये इति। घटज्ञानं जानामि घटज्ञानज्ञानवानहमित्याकारको यः शाब्दानुमित्यनुव्यवसायस्तत्रेत्यर्थः। घटत्ववतीत्यादिप्रामाण्यमपि भासते इति। घटत्ववति घटत्वप्रकारकत्वरूपप्रामाण्यमपि विषयीभवतीत्यर्थः। तद्विषयीभूते तादृशानुव्यवसायविषये, घटज्ञानमित्यादिव्यवसायेऽपि घटज्ञानरूपविषयके घटज्ञानमित्याकारकव्यवसायेऽपीत्यर्थः। व्यवसायभाने व्यवसायवृत्तिधर्माणामपि भानं भवत्येवेति यावत्। तत्प्रामाण्यसत्त्वादिति। घटत्ववति घटत्वप्रकारकत्वरूपप्रमात्वस्य सत्त्वादित्यर्थः। तथा च तादृशभट्टमतासिद्धानुव्यवसायसामग्रीजन्यग्रहविषयत्वस्य प्रमात्वे सत्त्वान्न मिश्रमते बाधः। घटादिविषयानुव्यवसाये एव

पुरोवर्त्तिज्ञानत्वादिना घटज्ञानविषयकव्यवसाये तादृशप्रामाण्यासत्त्वेन तदनुव्यवसाये तादृशप्रामाण्याभानादिति चेन्न ।

ज्ञानान्तरविशेष्यतानापन्नात्मनिष्ठविशेष्यतानिरूपितस्वाश्रयप्रकारताशालिग्रह-सामग्र्या एव ज्ञानग्राहकसामग्रीपदेन विवक्षणीयत्वात् । उक्तघटज्ञानोपनीतभानेषु घट-ज्ञानांशे तादृशात्मनिष्ठविशेष्यतानिरूपितप्रकारताविरहेणैव तत्सामग्र्याः साध्याघटकतया बाधानवकाशात् ।

---

प्रामाण्यं भासते न तु ज्ञानानुव्यवसाये इत्याशयेनाह—घटज्ञानविषयकव्यवसाय इति । घटज्ञानज्ञानवानहमित्यनुव्यवसाये इत्यर्थः । तादृशप्रामाण्याभानादिति । घटत्ववति घट-त्वप्रकारकत्वरूपप्रमात्वस्याऽभानादित्यर्थः । घटानुव्यवसायः घटज्ञानस्य व्यवसायः विषयानुव्यवसायो ज्ञानस्य व्यवसायो भवतीत्यवधेयम् ।

घटत्वप्रकारकं ज्ञानं सविशेष्यकमिति शाब्दसामग्रीमादाय दर्शितस्य बाधस्य निरा-करणाय तज्ज्ञानप्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन भट्टमतसिद्धा या सामग्री तद्भिन्ना ज्ञानग्राहिका सामग्री तद्ग्राह्यत्वं स्वतस्त्वम् अत्र वदन्तीत्यादिना परिष्कृतम् । तत्रोपनीत-घटज्ञानविषयकपटज्ञानानुव्यवसायेन घटज्ञानविशिष्टपटज्ञानवानहमित्याकारकेण घट-ज्ञानप्रामाण्याग्रहात् मिश्रमते बाधः प्रदर्शितः । तथाहि—घटज्ञानविशिष्टपटज्ञानवानह-मित्यनुव्यसायसामग्री घटज्ञानप्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन न भट्टमतसिद्धा, 'तन्मते ज्ञानस्यातीन्द्रियत्वात्' । अथ च मिश्रमते ज्ञानग्राहिका भवति तादृशसामग्री-ग्राह्यत्वस्य घटज्ञाननिष्ठप्रमात्वेऽसत्त्वात् । तद्वारणायाह—ज्ञानान्तरविशेष्यता-नापन्नेति । प्रमात्वाश्रयत्वेनाभिमतात् ज्ञानादन्यत् ज्ञानान्तरं तन्निष्ठप्रकारतानिरूपित-विशेष्यतानाश्रय इत्यर्थः । आत्मनिष्ठविशेष्यतानिरूपितस्वाश्रयप्रकारताशालिग्रहसाम-ग्र्या एवेति । ज्ञानान्तरनिष्ठप्रकारतानिरूपितविशेष्यतानाश्रयो य आत्मा तन्निष्ठ-विशेष्यतानिरूपिता या 'स्वपदग्राह्य'प्रमात्वाश्रयत्वेनाभिमतनिष्ठप्रकारता तच्छालिग्रह-जनकसामग्र्या एवेत्यर्थः । एवकारेण० । ज्ञानग्राहकसामग्रीपदेनेति । साध्ये भेदानुयोगि ज्ञानग्राहकसामग्रीपदेनेत्यर्थः । तथा च तज्ज्ञानप्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन च भट्टमतसिद्धभिन्ना या ज्ञानान्तरनिष्ठप्रकारकविशेष्यतानापन्नाऽऽत्मनिष्ठविशेष्यता-निरूपितस्वाश्रयनिष्ठप्रकारताशालिग्रहजनिका सामग्री तज्जन्यग्रहविषयत्वं पर्यवसितम् । घटत्वप्रकारकज्ञानवानहमित्यनुव्यवसाये आत्मनः 'व्यवसायनिष्ठप्रकारतानिरूपित-विशेष्यताश्रयत्वेन' ज्ञानान्तरनिष्ठप्रकारतानिरूपितविशेष्यतानाश्रयत्वेन तादृशात्म-निष्ठविशेष्यतानिरूपितप्रकारताशालि 'अनुव्यवसायात्मक'ग्रहजनकसामग्रीजन्यग्रह-विषयत्वं घटज्ञाननिष्ठप्रमात्वे सुलभम् ।

उक्तबाधं निराकरोति—उक्तघटज्ञानोपनीतभानेषु इति । घटज्ञानविशिष्टपटज्ञान-वानहं—घटज्ञानसमानाधिकरणपटज्ञानवानहमिति ग्रहेषु । घटज्ञानांशे=अलौकिक-सन्निकर्षभासिते घटज्ञानात्मके विषये । तादृशात्मनिष्ठविशेष्यतानिरूपितप्रकारता-विरहेणैवेति । ज्ञानान्तरविशेष्यतानापन्नाऽऽत्मनिष्ठविशेष्यतानिरूपितप्रकारताविरहेणै-

न चात्मनो लौकिकप्रत्यक्षे पटादिज्ञानस्य इच्छादेर्वा विशेषग्रहस्य विद्यमानस्य भानावश्यकतया लौकिकप्रत्यक्षविषयात्मांशेऽविद्यमानघटज्ञानोपनीतभाने या पटादिज्ञानीयलौकिकभानांशे धर्मितावच्छेदकतया घटज्ञानप्रकारता तस्या निरुक्तात्मविशेष्यतानिरूपितत्वविरहेऽपि एवमुपनीतघटज्ञानावच्छिन्न आत्मनि यदिच्छादेर्लौकिकप्रत्यक्षं तत्सामग्र्या भट्टमतसिद्धत्वेऽपि घटज्ञानवदात्मत्वेन परात्मोपनीतभानरूपे पटज्ञानानुव्यवसाये तादृशपरात्मविशेष्यतानिरूपितघटज्ञानप्रकारतासत्त्वात् तादृशानुव्यवसायेन घटज्ञानप्रामाण्याग्रहाद् बाधो दुर्वार एवेति वाच्यम् ।

वेत्यर्थः । हेतौ तृतीया । घटज्ञानसमानाधिकरणपटज्ञानवानहं—पटज्ञानवानहं घटज्ञानमित्यनुव्यवसाये आत्मनः प्रमात्वाश्रयत्वेनाभिमतघटज्ञानभिन्नपटज्ञानविशेष्यतापन्नत्वेनैव भानादिति भावः । तत्सामग्र्याः—उक्तानुव्यवसायसामग्र्याः, साध्याघटकतया साध्यघटकसामग्रीपदेन गृहीतुमशक्यतया । बाधानवकाशादिति । उपनीतघटज्ञानविषयकपटज्ञानानुव्यवसायसामग्र्या पटज्ञानांशे प्रमात्वबोधनेऽपि मानसघटज्ञानांशे यत्प्रामाण्यं तस्याऽग्रहेण यो बाधस्तस्य नावकाशः ।

प्रकारान्तरेण बाधमाशङ्कते—न चेति । वाच्यमिति परेणान्वयः । आत्मनो लौकिकप्रत्यक्षे आत्मविषयकलौकिकसन्निकर्षजन्यप्रत्यक्षे, विद्यमानस्य भानावश्यतया अध्यक्षो विशेषगुणयोगत इत्युक्तेः । विद्यमानविशेषगुणग्रहणमेवाऽऽत्मग्रहणम् । अविद्यमानघटोपनीतभाने लौकिकप्रत्यक्षविषय आत्मा तत्राऽविद्यमानं यद् घटज्ञानं तस्योपनीतं ज्ञानलक्षणाजनितं यद् भानं तस्मिन्सतीत्यर्थः । पटादिज्ञानीयलौकिकभानांशे पटादिज्ञानविषयकलौकिकप्रत्यक्षे, धर्मितावच्छेदकतया धर्मितावच्छदेकत्वाच्छिन्ना, घटज्ञानप्रकारता तादृशानुव्यवसायीयघटज्ञाननिष्ठा या प्रकारता तस्याः प्रकारतायाः निरुक्तात्मनिष्ठविशेष्यतानिरूपितत्वविरहेऽपि ज्ञानान्तरविशेष्यतानापन्नात्मनिष्ठविशेष्यतानिरूपितत्वाभावेऽपि, तथा च घटज्ञानवानहं पटं पश्यामीत्यनुव्यवसायसामग्र्याः तथाविधसाध्यानन्तर्गततया बाधाभावेऽपि । एवं एवंरीत्या । उपनीतघटज्ञानावच्छिन्न आत्मनि यदिच्छादेर्लौकिकप्रत्यक्षमिति । घटज्ञानवानहं पटमिच्छामीति लौकिकसन्निकर्षजं प्रत्यक्षमित्यर्थः । तत्सामग्र्या भट्टमतसिद्धत्वेऽपि तादृशप्रत्यक्षजनिकाया आत्ममनःसंयोगादिरूपसामग्र्याः प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन भट्टमतसिद्धत्वेऽपि, तथा च पूर्वोक्तोभयसामग्र्याः साध्याघटकतया बाधानवसरेऽपीति भावः । बाधं प्रसञ्जयति—घटज्ञानवदात्मत्वेन घटज्ञानविशेषितात्मत्वेन रूपेण, परात्मोपनीतभानरूपे परकीयात्मनः उपनीतभानं तदभिन्ने, पटज्ञानानुव्यवसाये घटज्ञानवानात्मा पटं पश्यामि इति घटज्ञानवदात्मकालीनपटज्ञानवानहमित्याकारके वा । तादृशपरात्मविशेष्यतानिरूपितघटज्ञानप्रकारतासत्त्वादिति । प्रामाण्याश्रयत्वेनाभिमतज्ञानभिन्नज्ञानविशेष्यतापन्नो यः परात्मा तन्निष्ठविशेष्यतानिरूपिता या घटज्ञाननिष्ठा प्रकारता तस्याः सत्त्वादित्यर्थः । एवं च तादृशानुव्यवसायसामग्र्याः प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन भट्टमतसिद्धभिन्नत्वादथ च ज्ञानग्राहकत्वात्साध्यान्तर्गतत्वम् । तादृशानुव्यवसायेन

उपनीतस्य परात्मनो मुख्यविशेष्यतयाऽनुव्यवसायविषयत्वे तज्ज्ञानस्य समूहालम्बनरूपतया सामग्रीभेदेन तत्र घटज्ञानभासकसामग्र्या अन्वयबोधसामग्रीत्वेन भट्टमतसिद्धतया घटज्ञानप्रामाण्यस्य तदग्राह्यत्वेऽपि बाधानवकाशात्। तादृशात्मनः स्वात्माद्यंशे कथञ्चित्प्रकारत्वे चात्मनो मुख्यविशेष्यताया निवेशनीयतया बाधवारणसम्भवात्।

---

घटज्ञानवानात्मा पटं पश्यामीत्यनुव्यवसायसामग्र्या। घटज्ञानप्रामाण्याग्रहादिति। घटज्ञाननिष्ठप्रामाण्ये तादृशसामग्रीजन्यग्रहविषयत्वाभावादिति भावः। बाधो दुर्वार इति। तादृशानुव्यवसायसामग्र्याः साध्यघटकतया तस्याश्च घटत्ववति घटत्वप्रकारकज्ञानत्वरूपप्रमात्वाग्रहादिति भावः।

समाधत्ते—उपनीतस्य परात्मनो मुख्यविशेष्यतयाऽनुव्यवसायविषयत्वे इति। उपनीतं विशेषणतयैव भासते इति नियमो न मानसे, 'मानसे तु नायं नियम' इत्युक्तत्वात्। मुख्यविशेष्यतया परात्मनोऽनुव्यवसाये भानम्, उत स्वात्माद्यंशे प्रकारतया भानम्, आद्ये बाधानवकाशमाह—तज्ज्ञानस्येति। घटज्ञानवानहं पटं पश्यामीत्यनुव्यवसायस्येत्यर्थः। समूहालम्बनरूपतया नानाप्रकारतानिरूपितनानाविशेष्यताशालितया, सामग्रीभेदेन तत्तद्विशेषणग्राहकसामग्रीभेदेन, तत्र अनेकसामग्रीमध्ये, अन्वयबोधसामग्रीत्वेन शाब्दबोधजनकत्वेन, भट्टमतसिद्धतया प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन भट्टमतेऽङ्गीकारात्। तथा च घटज्ञानवानात्मा पटं पश्यामीत्यनुव्यवसाये उपनीतस्य परात्मनो मुख्यविशेष्यतया भाने घटज्ञाननिष्ठप्रकारतानिरूपितविशेष्यतायाः परात्मनि सत्त्वेन पटज्ञाननिष्ठप्रकारतानिरूपितविशेष्यतायाश्च स्वात्मनि सत्त्वेन नानाविशेष्यकत्वात्समूहालम्बनमिदं ज्ञानम्, तस्य च विशेष्यविशेषणभासकविभिन्नसामग्रीजन्यतया घटज्ञानभासकसामग्र्याः तदन्तर्गताया भट्टेनाभ्युपगमात्, तस्य च ज्ञानस्यान्वयबोधरूपतया भट्टेनानुमतत्वे तथाविधज्ञानसामग्र्याः साध्यान्तर्गतत्वाभावान्न बाधः। कल्पान्तरेऽपि न दोष इत्याह—तादृशात्मन इति। उपनीतस्य परात्मन इत्यर्थः। स्वात्मांशे 'पटज्ञानवति' स्वात्मनि पटज्ञाने वा। कथञ्चित्प्रकारत्वे च। स्वात्मनि 'नित्ये' परात्मनः वृत्तिनियामकसंयोगेन कालिकादिना वा प्रकारत्वाऽसम्भवात्कथञ्चिदिति। केवलसंयुक्तत्वमेवात्र प्रकारत्वे नियामकमिति ध्येयम्। आत्मनो मुख्यविशेष्यताया निवेशनीयतयेति। ज्ञानान्तरविशेष्यतानापन्नस्यात्मनः मुख्यविशेष्यत्वेन निवेशः कर्तव्य इति भावः। तथा सति—बाधवारणसम्भवादिति।

अयमाशयः—साध्यकोटौ ज्ञानान्तरविशेष्यतानापन्नात्मनिष्ठमुख्यविशेष्यतानिरूपितप्रकारताशालिग्रहजनकत्वरूपं ज्ञानग्राहकत्वं सामग्र्यां निवेशनीयम्। घटज्ञानवानात्मा पटं पश्यामीत्याद्यनुव्यवसायसामग्री न साध्यघटिका, परात्मनः ज्ञानान्तरविशेष्यतानापन्नत्वेऽपि तन्निष्ठविशेष्यतायां प्रकारत्वानवच्छिन्नत्वरूपमुख्यत्वं नास्ति, तस्य स्वात्मनि कथञ्चित्प्रकारत्वस्वीकारात्।

अथैवं घटज्ञानवत्परात्मविशिष्टपटज्ञानवत्स्वात्मज्ञानस्य परात्मनो मुख्यविशेष्यत्वाभावेन वारणेऽपि पटज्ञानवत्स्वात्मविशिष्टघटज्ञानवत्स्वात्ममुख्यविशेष्यकज्ञानसामग्र्याः

न चैवमोदनकामकर्तव्यताबोधविषयः पाक इत्यादि वाक्यजन्यशाब्दबोधे पाकविशेषणतया ओदनसाधनताज्ञानस्य अन्वयप्रयोजकरूपात्मकस्य भानेऽपि आत्मविशेषणतया तज्ज्ञानाभानात् तादृशशाब्दबोधेन तज्ज्ञानप्रामाण्याग्रहेऽपि न बाधप्रसक्तिरित्यग्रिमतादृशबाधशङ्काया असङ्गतिरिति वाच्यम् । यथाश्रुताभिप्रायेण तदाशङ्कायाः सङ्गमनीयत्वात् ।

यथा विवक्षणे तु आत्मांश एव यत्र इच्छाश्रयत्वाद्यन्वयितावच्छेदकतया ज्ञानस्य

---

वारणाऽसम्भवः, तादृशसामग्र्याः पटज्ञानलौकिकप्रत्यक्षजनकतया भट्टैरनभ्युपगमादिति चेन्न । ज्ञानान्तरविशेष्यतानापन्नत्वस्य साक्षात्परम्परया वा ज्ञानान्तरविशेष्यतानापन्नत्वरूपत्वात् ।

शङ्कते—न चेति । एवं मिश्रमतेन घटज्ञानवान् पटं पश्यामीत्यनुव्यवसायसामग्र्या घटज्ञानप्रामाण्याग्रहाद् बाधवारणाय ज्ञानग्राहकत्वस्य ज्ञानान्तरविशेष्यतानापन्नाऽऽत्मनिष्ठविशेष्यतानिरूपितप्रकारताशालिग्रहजनकत्वपरत्वे । वाक्यजन्यशाब्दबोधे—ओदनकामः पचेतेति वाक्यम्, ओदनकामकृतिसाध्यतावान्पाक इति शाब्दबोधः । पाकविशेषणतया भानेऽपीत्यनेन सम्बन्धः । आत्मविशेषणतया तज्ज्ञानाभानादिति । अन्वयप्रयोजकीभूतम् ओदनसाधनताज्ञानं तस्य आत्मविशेषणतया अभानात्, किन्तु पाकविशेषणतयैव भानादित्यर्थः । तथा च ज्ञानान्तरविशेष्यतानापन्नात्मनिष्ठविशेष्यतानिरूपितप्रकारताशालितयाऽग्रहणादिति भावः । एतेन गुरुमतसिद्धतादृशशाब्दसामग्र्याः साध्यानन्तर्गतत्वं सूचितम् । तादृशशाब्दबोधेन तज्ज्ञानप्रामाण्याग्रहेऽपीति । ओदनकामकृतिसाध्यताज्ञानविषयः पाक इति शाब्दबोधेन स्वप्रयोजकीभूतौदनसाधनताज्ञानगतप्रमात्वस्याविषयीकरणेऽपीत्यर्थः । न बाधप्रसक्तिः ओदनसाधनताज्ञानगतप्रमात्वेन बाधप्रसक्तिरित्यर्थः । तादृशशाब्दसामग्र्याः साध्यानन्तर्गतत्वादिति भावः । इति बाधविरहात् । अग्रिमतादृशबाधशङ्काया इति । अथ गुरुनये घटेन जलमाहरेत्यादिदीधितिग्रन्थेन वक्ष्यमाणा या बाधशङ्का सा च यथा घटेन जलमाहरेत्यादौ योग्यतावशाद् यथा घटकरणकजलाहरणबोधे छिद्रेतरत्वस्याऽपदार्थस्य भानं तथा ओदनकामकृतिसाध्यताज्ञानविषयः पाक इति बोधेऽपि ओदनसाधनताज्ञानविषयत्वरूपयोग्यताबलादोदनसाधनताज्ञानविषयत्वस्यापदार्थस्यापि भानं भवतीति तादृशशाब्दबोधसामग्र्या ज्ञानग्राहकत्वेन भट्टमतासिद्धतया तज्जन्यग्रहविषयत्वस्यौदनसाधनताज्ञाननिष्ठौदनसाधनत्ववति ओदनसाधनत्वप्रकारकज्ञानत्वरूपे प्रमात्वेऽसत्त्वाद् बाध इत्याकारिका तस्या इत्यर्थः । असङ्गतिरिति । तादृशशाब्दबोधात्मकग्रहस्य ज्ञानान्तरविशेष्यतानापन्नात्मनिष्ठविशेष्यतानिरूपितप्रकारताशालित्वाभावादिति भावः । यथाश्रुताभिप्रायेणेति । ज्ञानविषयकज्ञानजनकत्वरूपस्य ज्ञानग्राहकत्वनिवेशाभिप्रायेणैवेत्यर्थः । तदाशङ्कायाः गुरुमतेन तादृशबाधशङ्कायाः ।

यथा विवक्षणे तु इति । ज्ञानान्तरविशेष्यतानापन्नात्मनिष्ठविशेष्यतानिरूपितप्रकारताशालिग्रहजनकत्वविवक्षणे तु इत्यर्थः । आत्मांश एव आत्मन्येव, एवकारेणात्मान्य-

भानं तत्र तादृशज्ञानप्रामाण्याभानेन बाधप्रसक्त्या अन्वयितावच्छेदकरूपस्य शाब्दबोधे भानानभ्युपगमेन समाधानस्य सङ्गमनीयत्वात् ।

यद्यपि ज्ञानजन्यज्ञातत्तावान् घट इत्यादिप्रत्यक्षेण प्रामाण्याग्रहेण भट्टमते बाधस्य मिश्रादिमतसिद्धभिन्नत्वनिवेशेऽपि उक्तविवक्षायामप्रसक्तिः, तथापि ज्ञाततालिङ्गकशुद्धज्ञानादिसाध्यकात्मादिपक्षकानुमितिसामग्र्या मिश्राद्यनभ्युपगतया प्रामाण्याग्रहेण बाधस्य वारणाय यथाश्रुतानुसारेण वा भट्टमतसिद्धत्वोक्तिः ।

---

व्यवच्छेदः । यत्र यादृशस्थले, ओदनसाधनताज्ञानवानहम् इच्छामि इत्याद्यन्वयबोधस्थले, इच्छाश्रयत्वाद्यन्वयितावच्छेदकतया इच्छाश्रयत्वनिष्ठविधेयतानिरूपितोद्देश्यतावच्छेदकतया, ज्ञानस्य भानम् यत्साधनत्वादिज्ञानस्य विषयता । तत्र अहमिच्छामि पाकमिच्छामि वेत्यादिस्थले, पाकादिविषयकेच्छाश्रयत्वान्वय आत्मनि ज्ञानवत्त्वप्रयुक्त इति ज्ञानवत्त्वस्यापि तत्रान्वयप्रयोजकरूपस्य भानमावश्यकम् । अहमिच्छामीत्यादिग्रहसामग्र्या पाकेच्छाश्रयोऽहमिति बोधसामग्र्या वेति शेषः । तादृशज्ञानप्रामाण्याभानेन बाधप्रसक्त्या अन्वयितावच्छेदकतया भानस्य ज्ञानस्य प्रामाण्याविषयीकरणाद् बाधसम्भवेन । बाधप्रसक्तिं निराकरोति—अन्वयितावच्छेदकरूपस्य उद्देश्यतावच्छेदकस्य, ज्ञानस्य, भानानभ्युपगमेन अन्वयिन एव शाब्दबोधे भानस्वीकारेण, गुरुमते पदानुपस्थितस्यापि अन्वयितावच्छेदकतया भानं शाब्दबोधे स्वीक्रियते । भट्टमते च पदानुपस्थितस्य न तथा भानमभ्युपगम्यते इति भावः । समाधानस्य सङ्गमनीयत्वादिति । तज्ज्ञानप्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन भट्टमतसिद्धभिन्नत्वेऽपि तादृशान्वयबोधसामग्र्याः साध्यघटकज्ञानग्राहकत्वाऽसम्भवादसङ्ग्रह इति न बाधानवकाश इति भावः ।

ननु साध्यघटकज्ञानग्राहिकापदेन ज्ञानान्तरविशेष्यतानापन्नात्मनिष्ठविशेष्यतानिरूपितप्रकारताशालिग्रहजनकत्वविवक्षायां प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन मिश्रमतसिद्धभिन्नत्वे सति ज्ञानग्राहकत्वमेव साध्यघटकसामग्र्यां निवेश्यतां किं भट्टमतसिद्धभिन्नत्वनिवेशेन । गुरुमिश्रमतसिद्धभिन्नत्वनिवेशेनापि उपनीतघटज्ञानादिविषयकस्य ज्ञानजन्यज्ञातत्तावान् घट इति प्रत्यक्षसामग्र्याः गुरुमिश्रमते ज्ञातताया अलीकतया प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन गुरुमिश्रमतसिद्धसामग्रीभिन्नत्वस्य तादृशप्रत्यक्षसामग्र्याऽक्षतत्वेन तादृशसामग्रीजन्यग्रहविषयत्वस्य घटत्ववति घटत्वप्रकारकज्ञानत्वरूपप्रमात्वेऽसत्त्वाद्यो बाधः प्रागुक्तः तस्य वारणसम्भवः, तथाहि—तादृशप्रत्यक्षे आत्मनि ज्ञानस्याविशेषणत्वात् ज्ञानान्तरविशेष्यतानापन्नात्मनिष्ठविशेष्यतानिरूपितप्रकारताशालिग्रहजनकत्वासत्त्वात्तत्सामग्र्याः साध्याघटकत्वादिति शङ्कां मनसि निधायाह—यद्यपीति । इत्यादिप्रत्यक्षेणेति । आदिपदात् ज्ञातो घट इत्यादीनां सङ्ग्रहः । भट्टमते बाधस्य—भट्टमते एव काचित् ज्ञानजन्या ज्ञातताविषयधर्मः । ज्ञानजन्यज्ञातत्तावानिति प्रत्यक्षस्तन्मतसिद्ध एवेति । तन्मते बाधकथनम् । मिश्रादिमतसिद्धभिन्नत्वनिवेशेऽपि । अपिना भट्टमतसिद्धभिन्नत्वनिवेशस्य समुच्चयः । उक्तविवक्षायां ज्ञानग्राहकसामग्रीपदेन ज्ञानान्तरविशेष्यतानापन्नात्मनिष्ठविशेष्यतानिरूपितप्रकारताशालिग्रहजनकसामग्री-

आत्मपक्षकज्ञाततालिङ्गकप्रामाण्यविशिष्टज्ञानसाध्यकानुमितिसामग्रीमादायैव भट्टमते प्रामाण्यस्य यथोक्तसाध्यवत्त्वनिर्वाहः। न तु ज्ञाततापक्षकानुमितिसामग्रीमादाय, आत्मपक्षकानुमितेरेवानुव्यवसायसमानविशेष्यकतया तादृशानुमितेरेव तैरभ्युपगन्तव्यत्वात्, अन्यथा अनुभववैषम्यापत्तेः।

---

विवक्षायाम्। अप्रसक्तिरिति। बाधस्येति पूर्वेणान्वयः। तथापि बाधवारणेऽपि अनुमितिसामग्र्या इति। आत्मा ज्ञानवान् ज्ञाततावत्त्वादित्यनुमितिसामग्र्या इत्यर्थः।

अयम्भावः—मया घटो ज्ञातः सुखमनुभूतम्, इत्यादिज्ञानेषु आत्मनि ज्ञाततापि प्रतीयते घट इव आत्मनोऽपि ज्ञातत्वात्, सैवात्मनिष्ठा ज्ञातता स्वजनकीभूतं ज्ञानं स्वाश्रये 'आत्मनि' अनुमापयति। सामग्री चात्र ज्ञानजन्यज्ञाततावानहमिति परामर्शघटिता।

मिश्राद्यनभ्युपगतयेति। गुरुमिश्रनैयायिकैश्च ज्ञाततायाः अस्वीकारात्तद्घटितसामग्र्या मिश्राद्यनभ्युपगतयेत्यर्थः। प्रामाण्याग्रहेणेति। तज्ज्ञानप्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन मिश्रमतसिद्धभिन्ना या ज्ञानग्राहकसामग्री तज्जन्यज्ञानेन प्रामाण्यस्याविषयीकरणेनेत्यर्थः। बाधस्य वारणायेति। तथाविधसामग्र्या यत्प्रामाण्याग्रहणं तत्प्रयुक्तस्य भट्टमतेन बाधस्य वारणायेत्यर्थः। भट्टमतसिद्धत्वोक्तिरित्यनेन सम्बन्धः। ननु तुल्ययुक्त्या भट्टमताऽसङ्ग्रहः पारिभाषिकज्ञानग्राहकत्वाभावेन तत्सामग्र्याः साध्याघटकत्वादत आह—यथाश्रुतानुसारेणैवेति। ज्ञानग्राहकत्वमित्यस्य ज्ञानविषयकज्ञानजनकत्वमिति यथाश्रुतार्थस्वीकारेणेत्यर्थः। भट्टमतसिद्धत्वोक्तिरिति। तथा च मिश्रमतसिद्धभिन्ना सामग्री ज्ञानग्राहिकापि इति तादृशप्रत्यक्षेण प्रामाण्याग्रहाद् बाधो दुर्वार इति भट्टमतसिद्धभिन्नत्वनिवेशनमावश्यकमिति भावः।

शुद्धज्ञानसाध्यकेत्यत्र शुद्धपदप्रयोजनमाह—आत्मपक्षकेति। प्रामाण्यस्य। प्रमात्वे। यथोक्तेति। अप्रामाण्याग्राहकज्ञानग्राहकसामग्रीजन्यग्रहविषयत्वरूपेत्यर्थः। साध्यवत्वनिर्वाह इति। तथा च बाधविरहेऽपि न क्षतिः, तस्य शुद्धज्ञानसाध्यकत्वाभावादिति भावः। एवकारव्यवच्छेद्यमाह—न त्विति। ज्ञातपक्षकानुमितिसामग्रीमादायेति। ज्ञातताप्रामाण्यविशिष्टज्ञानजन्येत्यनुमितिमादाय न भट्टमते साध्यसत्त्वनिर्वाह इत्यर्थः। किन्तु अहं घटत्ववति घटत्वप्रकारकज्ञानवान् ज्ञाततावत्त्वादित्यनुमितिमादाय भट्टमते साध्यसत्त्वनिर्वाहः। तत्र युक्तिमाह—आत्मपक्षकानुमितेरेवेति। अहं घटत्ववति घटत्वप्रकारकज्ञानवान् ज्ञाततावत्त्वादित्यनुमितेरेवेत्यर्थः। एवकारेण ज्ञाततापक्षकानुमितेर्व्यवच्छेदः। अनुव्यवसायसमानविशेष्यकतयेति।

अयम्भावः—मिश्रमते ज्ञानविषयकं ज्ञानमनुव्यवसायात्मकं घटमहं जानामीत्याकारकं गुरुमते च तादृशमेव व्यवसायात्मकं—ते द्वेऽपि आत्मविशेष्यकेऽतो भट्टमतेऽपि अनुमितिः समानविशेष्यकत्वानुरोधेनात्मविशेष्यकैव स्वीकार्येति।

तादृशानुमितेरेवेति। आत्मविशेष्यकानुमितेरेवेत्यर्थः। तैः भट्टैः, अन्यथा आत्मविशेष्यकानुमितेरनभ्युपगमे। अनुभववैषम्यापत्तेरिति। आत्मविषयकं ज्ञानं मीमांसक-

अथैवमपि उपनीताऽप्रामाण्यविषयकघटादिज्ञानानुव्यवसायेन तदीयप्रामाण्याग्रहात् तादृशसामग्र्या अपि भट्टमतासिद्धत्वान्मिश्रमते बाधस्य दुर्वारतेति चेन्न ।

प्रामाण्यभासकसामग्र्या विषयनिरूप्यत्वमर्यादोपबृंहिताया अपि अप्रामाण्यभासकसामग्र्यपेक्षया बलवत्त्वेनाऽनुव्यवसायेऽप्रामाण्यस्य व्यवसायांशे भानासम्भवात् प्रामाण्यभानस्यावश्यकत्वात् । तथाविधसामग्र्या अबलवत्त्वे घटत्वप्रकारकत्वाविना व्यवसायभाने तत्र तदभावादेरपि भानप्रसङ्ग इत्यग्रे वक्ष्यमाणत्वात् ।

---

त्रितयमतेन प्रमात्वं हूणाति इति साम्येनानुभवापलापापत्तेः । द्वयोर्मते आत्मविषयं ज्ञानं एकस्य च मते ज्ञाततापक्षकमिति ।

शङ्कते—अथेति । एवमपि भट्टमतसिद्धभिन्नत्वनिवेशेऽपि, उपनीताऽप्रामाण्यविषयकघटादिज्ञानानुव्यवसायेन, उपनीतं ज्ञानलक्षणमाभातं यदप्रामाण्यं तद्विषयको यः घटादिज्ञानानुव्यवसायस्तेन, घटत्वाभाववति घटत्वप्रकारकं ज्ञानं 'अथवाऽप्रामाण्यवद् घटमहं जानामीत्यनुव्यवसायेनेति यावत् । तदीयप्रामाण्याग्रहात् घटत्ववति घटत्वप्रकारकत्वरूपं घटव्यवसायगतं यत्प्रामाण्यं तस्या विषयीकरणात्, अप्रामाण्यग्रहेण प्रामाण्यग्रहस्य बाधादिति भावः । तादृशसामग्र्या उपनीतप्रामाण्यविषयकघटज्ञानानुव्यवसायसामग्र्याः, तथा च तादृशसामग्र्याः तज्ज्ञानप्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन भट्टमतसिद्धभिन्नत्वे सति ज्ञानग्राहकतया साध्यान्तर्गतत्वम् । तादृशानुव्यवसायविषये घटव्यवसाये यत्प्रामाण्यं तदपि पक्षान्तर्गतम् । विपरीतग्रहेण प्रतिबन्धाच्च तादृशसामग्र्या न तस्य ग्रह इति मिश्रमतेन बाध इति भावः ।

अप्रामाण्यभासकसामग्र्यपेक्षया प्रामाण्यभासकसामग्र्या बलवत्त्वमिति प्रामाण्यग्रहस्य न बाध इत्याशयेनाह—प्रामाण्यभासकसामग्र्या इति । अनुव्यवसायजनिका आत्ममनःसंयोगव्यवसायघटिता या प्रामाण्यग्रहजनिका सामग्री तस्या इत्यर्थः । विषयनिरूप्यत्वमर्यादोपबृंहिताया अपि । घटघटत्वादिरूपो यो विषयः तद्बोध्यत्वविधया उपबृंहितायाः प्रामाण्यबोधने क्षमायाः न तु साक्षात्प्रामाण्यभासिकायाः । तथा सत्त्वेऽप्याह । अप्रामाण्यभासकसामग्र्यपेक्षया बलवत्त्वेनेति । अप्रामाण्यभासिका याऽलौकिकसन्निकर्षादिघटितसामग्री तदपेक्षया लौकिकप्रत्यक्षसामग्र्याः सर्वतो बलवत्त्वेनेत्यर्थः । अनुव्यवसायेऽप्रामाण्यस्येति । अनुव्यवसाये विषयीभूतस्याऽप्रामाण्यस्येत्यर्थः । व्यवसायांशे घटज्ञानात्मके व्यवसाये, व्यवसायगततयेति यावत् । भानासम्भवादिति । विषयकत्वाभावादित्यर्थः । तथा च यद्यपि प्रामाण्यभासिका सामग्री प्रामाण्यं न तत्त्वेन साक्षाद् बोधयति, सा हि अनुव्यवसायं जनयति, अनुव्यवसायश्च घटघटत्वविषयकव्यवसायविषयकः तादृशव्यवसायविषयीभूतघटघटत्वादिघटितं प्रामाण्यं बहु सामग्रीसापेक्षमूह्यम् । अप्रामाण्यं पुनः साक्षादेवाऽनुव्यवसायविषयः इत्यप्रामाण्यस्यैव भानमावश्यकम्, तथापि लौकिकसामग्र्या बलवत्त्वेन तत्सापेक्षप्रामाण्यभानस्यैवावश्यकत्वमिति निष्कर्षः ।

अप्रामाण्यस्य साक्षाद्भासिकायाः सामग्र्या एव बलवत्त्वस्वीकारे त्वाह—तथा-

यदि चोक्तप्रामाण्यभानसामग्र्या बलवत्त्वोपगमेऽनभ्यासदशापन्नज्ञाने प्रामाण्यसंशयानुपपत्तिरिति मीमांसकैः अप्रामाण्योपस्थितिदशायां तादृशदोषवशादनुव्यवसायेऽप्रामाण्यभानमवश्यमेवोपगन्तव्यम्, तथा च तादृशानुव्यवसायसामग्र्या ज्ञानग्राहकत्वेन भट्टानभ्युपगततया प्रामाण्याग्रहान्मिश्रमते बाधो दुर्वार एवेत्युच्यते तदाऽप्रामाण्याग्राहकत्वमपि स्वातन्त्र्येण सामग्रीविशेषणं देयम् ।

वस्तुतस्तु अप्रामाण्योपस्थितेरनुव्यवसायपूर्वं सत्त्वे तुल्यबलसामग्रीभ्यां प्रामाण्या-

---

विधेति । प्रामाण्यभासकेत्यर्थः । अबलवत्त्वे अप्रामाण्यभासकसामग्र्यपेक्षया न्यूनबलत्वे, घटत्वप्रकारकत्वादिना व्यवसायभाने घटत्वप्रकारकज्ञानवानहमिति व्यवसायविषयकेऽनुव्यवसाये, तदभावादेरपि । घटत्वप्रकारकत्वाभावादेरपि । अग्रे वक्ष्यमाणत्वादिति । तदापि तद्ग्रहोपगमादिति ग्रन्थेनेति भावः । अप्रामाण्यग्रहदशायामपि प्रामाण्यग्रहोपगमादिति तदर्थः ।

अप्रामाण्यभासकसामग्र्या न्यूनबलत्वस्वीकारेऽनुपपत्त्यन्तरमाह—यदि चेति । उच्यते इत्यनेन सम्बन्धः । उक्तप्रामाण्यभानसामग्र्याः घटज्ञानप्रामाण्यभासकसामग्र्याः, बलवत्त्वोपगमे अप्रामाण्यभासकसामग्र्यपेक्षया इति शेषः । अभ्यासदशायामिष्टापत्तिरेवेत्यत आह —अनभ्यासदशापन्नज्ञाने इति । प्रवृत्ते पौनःपुन्यमभ्यासः, प्राथमिकज्ञाने इत्यर्थः । प्रामाण्यसंशयानुपपत्तिः प्राथमिकम् इदं जलम् इति यत् ज्ञानं तस्मिन् इदं जलमिति ज्ञानं प्रमा न वेति प्रामाण्यसंशयानुपपत्तिः । उभयकोट्यनुपस्थितेरिति भावः । इति अप्रामाण्यसंशयानुपपत्त्या अप्रामाण्योपस्थितिदशायां, ज्ञानलक्षणासन्निकर्षाधीनाऽप्रामाण्यभाने सति, तादृशदोषवशात् अप्रामाण्याभाने संशयानुपपत्तिरूपदोषात्, अनुव्यवसाये उपनीताप्रामाण्यकघटज्ञानानुव्यवसाये तथासति बाधस्य दुर्वारतामाह—तथा चेति । अनुव्यवसाये अप्रामाण्यभाने चेत्यर्थः । तादृशानुव्यवसायसामग्र्या उपनीताऽप्रामाण्यकघटज्ञानानुव्यवसायसामग्र्या । समाधत्ते—तदेति । संशयानुपपत्त्याऽप्रामाण्यभानस्यावश्यकत्वे । अप्रामाण्याग्राहकत्वमपि अप्रमात्वग्रहाजनकत्वमपि, स्वातन्त्र्येण विषयमनिवेश्य, सामग्रीविशेषणं तादृशभेदानुयोगिन्यां सामग्र्यां निवेशनीयम् । तथा च तज्ज्ञानप्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन भट्टमतसिद्धभिन्नत्वे सति ज्ञानग्राहकत्वे सति अप्रामाण्याग्राहिका या सामग्री तज्जन्यग्रहविषयत्वम् । प्रकृते उपनीता प्रामाण्यविषयकघटज्ञानानुव्यवसायसामग्र्या घटज्ञानप्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन भट्टमतसिद्धभिन्नत्वे सति ज्ञानग्राहकत्वेऽपि नाऽप्रामाण्याग्राहकत्वमिति तया सामग्र्या प्रामाण्याग्रहेऽपि न दोषः ।

उपनीतभानस्थले अप्रामाण्याग्राहकत्वविशेषणासत्त्वेऽपि न बाध इत्याह— वस्तुतस्तु इति । अप्रामाण्योपस्थितेः ज्ञानलक्षणासन्निकर्षमर्यादयाऽप्रामाण्यस्य स्मृतेः, अनुव्यवसायस्य पूर्वं सत्त्वे घटं जानामीत्यनुव्यवसायस्य पूर्वकालावच्छेदेन सत्त्वे, तुल्यबलसामग्रीभ्यां समानात्ममनःसन्निकर्षादिरूपकारणकलापाभ्याम्, अप्रामाण्योपस्थितिः सकलाऽन्यकारणसहिता अप्रामाण्यज्ञानजनिका ज्ञानलक्षणा । प्रामाण्यविशिष्टघटज्ञान-

प्रामाण्योभयसंशयरूप एवानुव्यवसायस्तत्र जन्यते, धर्मिज्ञानस्य संशयहेतुतायाः मीमांसकैरनभ्युपगमात् । तथा च तादृशानुव्यवसायसामग्र्यापि प्रामाण्यग्रहान्न बाधः ।

न च यत्रानुव्यवसायपूर्वं नाप्रामाण्यमुपस्थितं तत्राप्यनभ्यासदशापन्नज्ञानप्रामाण्यसंशयात्तदनुरोधेन अनुगतदोषात्तत्र प्रामाण्याग्रहस्तैरवश्यमङ्गीकार्यः, तथा च तत्स्थलीयसामग्र्या प्रामाण्याग्रहाद् बाधो दुर्वार एवेति वाच्यम् ।

अप्रामाण्याग्राहकत्वविशेषणेनापि तादृशबाधवारणसम्भवात् । तद्वारणाय तत्रानु-

---

व्यवसायः, आत्ममनःसन्निकर्षसहितः प्रामाण्यभासिका सामग्री ताभ्यां सामग्रीभ्यां, प्रामाण्याप्रामाण्योभयसंशयरूप एवानुव्यवसायः । घटज्ञानं प्रमा अप्रमा वेति घटज्ञानानुव्यवसायः संशयात्मक एव जन्यते, न तु अप्रामाण्यं घटं जानामीति निश्चयात्मकानुव्यवसायः । तथा सति अनुव्यवसायस्य प्रामाण्यनिश्चयत्वेन प्रतिबन्धकतया ततः प्रामाण्यसंशयो न स्यादिति भावः । ननु घटज्ञाने प्रामाण्याप्रामाण्योभयकोटिकसंशये घटज्ञानं धर्मी, धर्मिज्ञानस्य च संशयहेतुतया घटज्ञानानुव्यवसायानन्तरमेव संशयः स्यान्न तु संशयात्मक एवानुव्यवसायः, धर्मिणः पूर्वमगृहीतत्वादत आह—धर्मिज्ञानस्येति । साधारणधर्मवद्धर्मिज्ञानस्येत्यर्थः । तथा च संशयरूपानुव्यवसायसत्त्वे च । तादृशानुव्यवसायसामग्र्याऽपि घटं जानामीत्यनुव्यवसायसामग्र्यापि । प्रामाण्यग्रहादिति । तादृशसामग्रीजन्यग्रहविषयत्वस्य प्रमात्वे सत्त्वादिति भावः ।

वस्तुतस्तु कल्पोक्तं बाधवारणं दूषयति—न चेति । वाच्यमित्यनेनान्वयः । यत्र यादृशस्थले, अनभ्यासदशापन्ने, अनुव्यवसायपूर्वं तदनुव्यवसायपूर्वम् । नाऽप्रामाण्यमुपस्थितम् । अप्रामाण्यभानप्रयोजिकाऽप्रामाण्योपस्थितिर्नास्ति तत्रापि अनभ्यासदशापन्नज्ञानप्रामाण्यसंशयादिति । तादृशस्थलेऽपि प्राथमिकज्ञानधर्मिकप्रामाण्यसंशयसम्भवादित्यर्थः । अप्रामाण्यभासकसामग्र्यभावकालेऽपि 'इदं जलमिति ज्ञानं प्रमा न वेति प्रामाण्यसंशयस्य सम्भवादिति भावः । तदनुरोधेन प्राथमिकज्ञानोत्तरजायमानप्रामाण्यसंशयानुरोधेन, अनुगतदोषात् अनुगतदोषापत्तेः, यथाऽप्रामाण्योपस्थित्यनन्तरजायमानानुव्यवसाये संशयरूपं प्रामाण्यं गृह्यते तथा प्राथमिकज्ञानोत्तरजायमानसंशये प्रामाण्यं गृह्येत, न च तत्र गृह्यत्वे प्रामाण्यम् अथात्रापि न गृह्येत, विनिगमकाभावात् । तत्र अप्रामाण्योपस्थित्यनन्तरं संशयानुव्यवसाये, तैः मीमांसकैः, अवश्यं स्वीकार्यः अनन्यस्वीकर्त्तव्यः । अन्यथा अनुपगमानुरोधादुभयत्रापि संशये प्रामाण्यग्रहापत्तेः । तथा च प्रामाण्याग्रहे च । तादृशानुव्यवसायसामग्र्यापीति । उपनीताप्रामाण्यकघटज्ञानानुव्यवसायसामग्र्या अपीत्यर्थः । अप्रामाण्यकालीनोऽयं घट इत्यनुव्यवसायसामग्र्याः आत्ममनःसंयोगादिरूपाया इति भावः । अपिना अप्रामाण्योपस्थित्यभावकालीनप्राथमिकज्ञानसामग्रीसमुच्चयः । बाधं वारयति —अप्रामाण्याग्राहकत्वविशेषणेनापीति । अप्रामाण्याग्राहकत्वस्य स्वातन्त्र्येण साध्यघटकसामग्रीविशेषणत्वेऽपीत्यर्थः । तादृशबाधवारणसम्भवादिति । उपनीताप्रामाण्यविषयकघटज्ञानानुव्यवसायसामग्र्याः जायमानग्रहस्य प्रामाण्याविषयीकरणाज्जायमानबाधस्य निराकरणसम्भवादित्यर्थः । तद्वारणाय तादृश-

व्यवसायः प्रामाण्यं गृह्णात्येव, तादृशानुव्यवसाये विनष्टे सत्येव च तज्जनितसंस्कारात् प्रामाण्याविषयकज्ञानरूपधर्मिस्मरणे तदुपनीततद्धर्मिविषयकः प्रामाण्यसंशय इत्येव स्वीकरणीयत्वात्। एतेन स्वातन्त्र्येणाप्रामाण्याग्राहकत्वविशेषणदानेऽग्राहकान्तस्य निरुक्तार्थकत्वविरोध इति निरस्तम्।

यत्तु व्यवसायोल्लिखितप्रकारविशिष्टधर्मिविशेष्यकत्वमेवाऽनुव्यवसायेन गृह्यते, न

---

बाधवारणाय, तत्रानुव्यवसायः अप्रामाण्योपस्थित्यनन्तरभाविनिश्चयानुव्यवसायः, प्रामाण्यं गृह्णात्येव। ('अत्र प्रामाण्यमेव गृह्णाति' इत्येवकारव्यवत्यासो युज्यते। तथा च सोऽनुव्यवसायः प्रामाण्यमेव गृह्णाति नाप्रामाण्यमपि। एतेन तस्य रूपता व्याव-र्त्यते) ननु तत्राप्रामाण्योपस्थितेः सत्त्वात् मिश्रमतेऽनुव्यवसायस्य प्रामाण्यविशिष्टज्ञान-विषयकत्वात् कोटिद्वयविषयकज्ञानस्याऽवश्यम्भावात्संशयः कुतो नेत्यतः संशयमुपपाद-यति—तादृशानुव्यवसाये इति। उपनीताऽप्रामाण्यविषयकघटज्ञानानुव्यवसाये इत्यर्थः। विनष्टे सत्येव चेति। तादृशानुव्यवसायविनाशक्षणेष्वेवेत्यर्थः। तज्जनितसंस्कारात् तादृशानुव्यवसायजन्याऽप्रामाण्यकालिकघटज्ञानविषयकसंस्कारात्, प्रामाण्याविषयक-ज्ञानरूपधर्मिस्मरणे घटज्ञाननिष्ठप्रामाण्याविषयके केवलघटज्ञानात्मकधर्मिस्मरणे, अनेकविषयकसंस्कारादेकविषयकस्मरणात्। तदुपनीततद्धर्मिविषयकः तच्चादः उपनीत-मिति तदुपनीतम् उपनीताप्रामाण्यमिति यावत्। स चासौ धर्मी चेति तद्धर्मी, घट-ज्ञानमिति यावत्। तदुपनीतं च तद्धर्मी चेति तदुपनीततद्धर्मिणौ। तौ विषयौ यत्रेति विग्रहः। एतेन संशयसामग्री दर्शिता। प्रामाण्यसंशयः। घटज्ञानं प्रमा न वेति संशयः। भवतीति शेषः।

अत्रायं क्रमः—पूर्वं घटव्यवसायः अयं घट इत्याकारकः। तत अप्रामाण्योपस्थितिः, ततो ज्ञानलक्षणया उपनीतप्रामाण्यविषयकघटज्ञानानुव्यवसायः, ततश्च तद्विषयकसंस्कारः, ततो घटज्ञानस्मरणम्, ततोऽप्रामाण्यस्मरणम्, ततः संशयः स च मानसः। इत्येव स्वीकरणीयत्वादिति। एवकारेणानुव्यवसायस्य संशयरूपता व्यवच्छिद्यते। तथा चोक्ता-नुव्यवसायेनापि प्रामाण्यग्रहान्न बाधावसरो मिश्रमते।

एतेन वस्तुतस्तु इति कल्पादरेण। स्वातन्त्र्येणाऽप्रामाण्याग्राहकत्वविशेषणदाने इति। तादृशबाधवारणायेत्यादिः। अग्राहकान्तस्येति। तदप्रामाण्याग्राहकस्येत्यर्थः। निरुक्तार्थकत्वविरोध इति। तज्ज्ञानप्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन च भट्टमत-सिद्धभिन्नार्थकत्वस्याऽसङ्गतिरित्यर्थः। अयम्भावः—अप्रामाण्याग्राहकत्वं यदि सामग्र्यां विशेषणमावश्यकं तदाऽग्राहकान्तं यथाश्रुतार्थकं न तु अन्यार्थकम्, प्रत्युत तदेव सामग्री-विशेषणमिति। निरस्तमिति। अधुनाऽप्रामाण्याग्राहकत्वविशेषणस्य स्वातन्त्र्येण निवेश-स्याऽनावश्यकताया उक्तत्वादिति भावः।

प्रकारान्तरेण वारणमाशङ्क्य निराकरोति—यत्तु इति। अस्य समाधानमित्य-नेनान्वयः। व्यवसायोल्लिखितप्रकारविशिष्टधर्मिविशेष्यकत्वमेवेति। व्यवसायेन लौकिकसन्निकर्षजनितप्राथमिकज्ञानेन उल्लिखितः विषयीकृतः प्रकारो घटत्वादिः तद्वि-

तु धर्मान्तरविशिष्टविशेष्यकत्वमिति नानुव्यवसाये तदभाववद्विशेष्यकत्वघटिताप्रामाण्यावगाहितेति समाधानम् ।

तत्तुच्छम् । धर्मान्तरविशिष्टविशेष्यकत्वस्य लौकिकविषयताया एवानभ्युपगमेन उपनीतभ्रमत्वस्य प्रमात्वाभावस्य चाऽनुव्यवसायेनावगाहनेऽविरोधात् । पित्तादिदोषाद्यथा शङ्खादौ अपीतत्वादेरग्रहे पीतिमाद्यारोपस्तथा दोषवशाद्यत्रानुव्यवसाये अप्रामाण्यमात्रभानं तत्सामग्रीमादाय बाध इत्यपि न शङ्क्यम् । अनुभवानुरोधेन क्वचित्तथा दोषकल्पनेऽपि प्रकृते तथाविधदोषकल्पकानुभवविरहात् ।

---

शिष्टघटादिधर्मिविशेष्यकत्वमेवेत्यर्थः । तदनुव्यवसायेन गृह्यते । व्यवसायविषयकेन मानसेन विषयीक्रियते । एवकारव्यवच्छेद्यमाह—न त्विति । धर्मान्तरविशिष्टविशेष्यत्वमिति । व्यवसायोल्लिखितप्रकारीभूतधर्मभिन्नधर्मविशिष्टविशेष्यकत्वं न विषयीक्रियते इत्यर्थः । इति व्यवसायोल्लिखितधर्मभिन्नधर्मविशिष्टविशेष्यकत्वस्याविषयीकरणात् । नानुव्यवसाये तदभाववद्विशेष्यकत्वघटिताऽप्रामाण्यावगाहितेति । व्यवसायप्रकारीभूतधर्माभाववद्विशेष्यकत्वघटितं यत्तदभाववद्विशेष्यकत्वे सति तत्प्रकारकत्वरूपप्रामाण्यं तद्विषयकत्वं नानुव्यवसाये सम्भवतीत्यर्थः । तथा च पूर्वमप्रामाण्योपस्थितिसत्त्वेऽपि न घटज्ञानानुव्यवसायेऽप्रामाण्यभानमिति नैव संशयरूपानुव्यवसायः, न वा बाधः, प्रामाण्यस्यैव तत्र भानादिति भावः ।

तत्तुच्छमिति । न युक्तिसङ्गतमित्यर्थः । सिद्धान्तमाह—धर्मान्तरविशिष्टविशेष्यकत्वस्येति । व्यवसायप्रकारीभूतधर्मभिन्नधर्मविशिष्टविशेष्यकत्वस्येत्यर्थः । प्रकृते पटत्वाभाववद्विशेष्यकत्वस्य । लौकिकविषयताया एवेति । लौकिकसन्निकर्षजन्यसाक्षात्कारे भानस्यैवेत्यर्थः । अनभ्युपगमेन अस्वीकारेण, एवकारेणाऽलौकिकविषयताया व्यवच्छेदः । तेन व्यवसायप्रकारीभूतधर्मभिन्नधर्मविशिष्टविशेष्यकत्वस्य अलौकिकसन्निकर्षजन्यप्रत्यक्षे भानमभ्युपेयते इति सिद्धम् । तदेवाह—उपनीतभ्रमत्वस्येति । ज्ञानलक्षणासन्निकर्षभासितभ्रमत्वस्येत्यर्थः । तदभाववद्विशेष्यकत्वरूपव्यवसायप्रकारीभूतघटत्वभिन्नघटत्वाभावविशिष्टविशेष्यकत्वघटितस्येति यावत् । प्रमात्वाभावस्य सामान्यतः प्रमात्वाभावस्य । अवगाहनेऽविरोधादिति । तथा चानुव्यवसाये ज्ञानलक्षणया प्राप्तस्य प्रमात्वविरोधिपदार्थस्यापि विषयीकरणे विरोधाभावात् पूर्वोक्तबाधो दुर्वार इति भावः ।

अप्रामाण्यस्यापि भानस्वीकारे बाधमाशङ्कते—पित्तादिदोषादिति । पित्तदूरत्वादिरूपदोषप्रतिबन्धादित्यर्थः । अपीतत्वादेरग्रहे अपीतत्वप्रकारकबुद्धेरभावे सति, पीतिमाद्यारोपः पीतः शङ्ख इति भ्रमः । जायते इति शेषः । दार्ष्टान्तिकमाह—तथेति । दोषवशादिति । अप्रामाण्यमात्रभानम्—मात्रपदेन प्रामाण्यभानस्य व्यावृत्तिः । तत्सामग्रीमादाय तत्स्थलीयानुव्यवसायसामग्रीमादाय, तथा च तादृशसामग्रीजन्यग्रहविषयत्वस्य प्रमात्वेऽसम्भवाद् बाध इति पूर्वः पक्षः । समाधानमाह—अनुभवानुरोधेनेति । प्रामाणिकीं प्रतीतिं व्यवहारं चानुरुध्येत्यर्थः । क्वचित् पीतः शङ्खः शाखायां चन्द्र इत्यादि-

अथ यत्र घटे एव अघटोऽयं घट इत्याहार्यं तत्र तदनुव्यवसायस्य घटत्वाभाववति घटत्वप्रकारकत्वेन तज्ज्ञानविषयकस्य घटत्ववतीत्यादिप्रामाण्याग्राहकत्वाद् भट्टमतसिद्ध-तत्सामग्रीमादाय बाध इति चेन्न । प्रकारविरुद्धधर्मावच्छिन्नविशेष्यत्वाघटितप्रामाण्यस्यैव पक्षतोपगमात् तादृशप्रामाण्याश्रयग्राहकसामग्र्या एव साध्यघटकत्वात् । अयं घट इत्यादिज्ञाननिष्ठमनःसन्निकर्षघटितसामग्र्या ग्राहकत्वेन भट्टमतसिद्धभिन्नत्वोक्त्यापि

स्थलेषु । दोषकल्पनेऽपि पित्तदूरत्वादिदोषाणां स्वीकारेऽपि । प्रकृते अनुव्यवसाये मानसे । तथाविधदोषकल्पकानुभवविरहादिति । प्रामाण्यभानप्रतिबन्धकीभूतदोषस्याभावादित्यर्थः । यावदनुभवस्तावदेव कल्पनमिति न्यायेनानुभवातीतवस्तूनां कल्पने प्रमाणाभावादिति न बाधावसरः ।

अथास्ति तादृशमपि स्थलं यत्रेच्छावलाद् धर्मान्तरविशिष्टविशेष्यकत्वस्य लौकिकसाक्षात्कारीयविषयता स्वीक्रियते, यथाऽऽहार्यव्यवसायानुव्यवसाययोः इति बाधो दुर्वार इत्याशङ्कते—अथेति । घटे एव पुरोवर्तिनि घटे एव, अघटोऽयं घट इत्याहार्यम्—इत्याहार्यभ्रमो जातः, स्वविरोधिधर्मधर्मितावच्छेदककस्वप्रकारकज्ञानमाहार्यम् । अघटोऽयं घट इति ज्ञाने स्वं घटत्वं तद्विरोधी धर्मः अघटत्वं घटत्वाभावः तद्धर्मितावच्छेदककघटत्वप्रकारकत्वादस्याहार्यत्वम् । घटे एवेत्यनेनाऽस्य ज्ञानस्य घटत्ववति घटत्वप्रकारकत्वरूपप्रमात्ववत्तादर्शिता । तदनुव्यवसायस्य आहार्यविषयकानुव्यवसायस्य । घटत्ववतीत्यादि । घटत्ववति घटत्वप्रकारत्वरूपप्रमात्वस्याऽविषयीकरणात् । भट्टमतासिद्धतत्सामग्रीमादायेति । तज्ज्ञानप्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन भट्टमतसिद्धभिन्ना या तादृशाहार्यज्ञानविषयकानुव्यवसायजनिका सामग्री तां साध्यघटकसामग्रीपदेनोपादायेत्यर्थः । समाधत्ते—प्रकारविरुद्धधर्मावच्छिन्नविशेष्यत्वाघटितप्रामाण्यस्यैवेति । व्यवसायोल्लिखितो यः प्रकारः घटत्वादिरूपः तद्विरुद्धो यो घटत्वाभावत्वादिरूपो धर्मस्तद्धर्मावच्छिन्नविशेष्यकत्वेनाघटितं यत्प्रामाण्यं तस्यैवेत्यर्थः । पक्षतोपगमादिति । तथा च प्रकृते घटत्ववति घटत्वाभावावच्छिन्ने घटत्वप्रकारकत्वरूपप्रामाण्यस्य प्रकारीभूतघटत्वविरुद्धघटत्वाभावरूपधर्मावच्छिन्नविशेष्यताघटिततया न पक्षान्तर्गतत्वम् । ननु सामान्यतः प्रमात्वस्य न पक्षता प्रवर्तकज्ञानविषयप्रमात्वमधिकृत्यैव विचारप्रवृत्तेः, तच्च तद्वति तत्प्रकारकज्ञानत्वम्, तस्य च तत्तदर्थभेदेन भिन्नत्वात्कस्यापि प्रामाण्यस्य यावज्ज्ञानग्राहकसामग्रीग्राह्यत्वाभावात् तत्तज्ज्ञानप्रामाण्यं तत्तज्ज्ञानग्राहकयावद्ग्राह्यं न वेति लाभार्थं ज्ञानपदं तत्तज्ज्ञानपरमित्युक्तं दीधितिकृता । यद्धर्मप्रकारकज्ञानत्वरूपप्रमात्वाश्रयग्रहविषयकग्रहजननसामग्री ग्राह्यत्वं साध्यं यदा तदा तद्धर्मप्रकारकप्रामाण्यं पक्षं भट्टाचार्योक्तरीत्या साध्यघटकप्रामाण्यस्यैव पक्षता तस्य च प्रकारविरुद्धधर्मावच्छिन्नविशेष्यत्वाघटिततया दोषतादवस्थ्यमिति शङ्कां समाधत्ते—तादृशप्रामाण्याश्रयग्राहकसामग्र्या एवेति । तथा च साध्येऽपि तादृशस्यैव साध्यस्य प्रविष्टतया नाऽसङ्गतिः, न बाधावसरः । प्रकृतप्रामाण्यस्य साध्यानन्तर्गतत्वादिति भावः । गुरुमतसाधारण्यसम्पादनाय ज्ञानग्राहकेति दीधितौ मिश्रमतानुपन्यासे बीजमाह—अयं घट इत्यादि-

विशिष्टव्यतिरेकस्य तत्रापि सत्त्वाददोषः। ज्ञातताप्रत्यक्षजनकसामग्रीवारणाय ज्ञानग्राहकेति।

---

सङ्ग्रहसम्भवात्, ज्ञानग्राहकत्वपर्यन्तनिवेशनप्रयोजनं गुरुमते व्यवसायसामग्र्युपग्रह एवेत्याशयेन मिश्रमतानुपन्यासः।

विशिष्टव्यतिरेकस्य प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन च यद् भट्टमतसिद्धं तद्भेदस्य। तत्र तादृशसामग्र्याम्। एवं प्रतियोगिकोटौ ज्ञानग्राहकत्वानिवेशे भेदविशेष्यसामग्र्यामपि तद्विशेषणं व्यर्थं स्यात् तन्निवेशस्यावश्यकत्वे विशेष्ये तद्विशेषणस्यापि सार्थक्यमिति सूचयितुं भट्टमते तद्व्यावृत्तिं दर्शयति—ज्ञाततामप्रत्यक्षजनकेति।

घटादिसामग्र्यामपि विशिष्टभेदसत्त्वात्तज्ज्ञानग्राहकत्वस्य सामग्रीविशेषणत्वाभावे तत्सामग्रीपरिग्रहेऽपि केवलग्राहकत्वनिवेशेनापि तद्व्यावृत्तिसम्भवात्सामग्रीजन्यग्रह एव यावत्त्वविशेषणे तज्जन्यग्रहाऽप्रसिद्ध्या च न बाधसम्भव इति सा नोपात्ता।

---

ज्ञाननिष्ठमनःसन्निकर्षघटितसामग्र्या इति। अयं घट इति ज्ञाननिष्ठं यत्प्रामाण्यं तद्ग्राहिकाया मनःसन्निकर्षघटिता सामग्री तस्याः मिश्रमतसिद्धाया इत्यर्थः। ग्राहकत्वेन भट्टमतसिद्धभिन्नत्वोक्त्या—ज्ञानग्राहकत्वं विहाय ग्राहकत्वेन भट्टमतसिद्धभिन्नत्वकथनेन, भट्टमते ज्ञानस्यातीन्द्रियतया तादृशसामग्र्यां ग्राहकत्वाभावादिति भावः। सङ्ग्रहसम्भवादिति। ग्राहकसामग्रीभिन्नत्वादिति भावः। व्यवसायसामग्र्युपग्रह एव। व्यवसायसामग्रीसङ्ग्रह एव ज्ञानग्राहकत्वस्य प्रयोजनमित्यर्थः। व्यवसायसामग्र्या ग्रहजनकत्वेऽपि ज्ञानग्राहकसामग्रीभिन्नत्वादिति भावः। तत्रापि अयं घट इति प्रत्यक्षसामग्र्यामपि। सत्त्वादिति। ज्ञानग्राहकत्वव्यतिरेकप्रयुक्तविशिष्टभेदसत्त्वादिति भावः। प्रतियोगिकोटौ भेदप्रतियोगिकोटौ, ज्ञानग्राहकत्वानिवेशे प्रामाण्याग्राहकत्वमात्रनिवेशे, तद्विशेषणं ज्ञानग्राहकत्वविशेषणम्। व्यर्थं स्यादिति। ज्ञाततामप्रत्यक्षसामग्र्याः प्रामाण्याग्राहकत्वेन भट्टमतसिद्धभिन्नत्वाभावादिति भावः। तन्निवेशस्यावश्यकत्वे—प्रतियोगिकोटौ ज्ञानग्राहकत्वनिवेशस्यावश्यकत्वे। गुरुमतसङ्ग्रहायेत्यादिः। विशेष्ये भेदानुयोगिसामग्र्यां, तद्विशेषणस्य ज्ञानग्राहकत्वविशेषणस्य, तद्व्यावृत्तिं ज्ञानग्राहकत्वप्रयोजनम्। दीधितौ—ज्ञाततामप्रत्यक्षजनकसामग्रीवारणायेति। तथा च प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन च भट्टमतसिद्धसामग्रीभिन्नसामग्रीजन्यग्रहविषयत्वमात्रोक्तौ सामग्र्यां ज्ञानग्राहकत्वानिवेशे प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन भट्टमतसिद्धत्वस्य ज्ञाततामप्रत्यक्षसामग्र्यामसत्त्वेन 'ज्ञाततामप्रत्यक्षसामग्र्यां ज्ञानग्राहकत्वासत्त्वात्' तद्भिन्नत्वस्य तत्र सत्त्वात् तादृशसामग्रीजन्यज्ञाततामप्रत्यक्षात्मकग्रहविषयत्वस्य प्रमात्वेऽसत्त्वाद् बाधवारणाय अनुयोगिभूतसामग्र्यामपि ज्ञानग्राहकत्वमावश्यकमिति भावः। घटादिसामग्र्यामपि अपिना घटादिप्रत्यक्षसामग्रीसमुच्चयः। विशिष्टभेदसत्त्वादिति। ज्ञानग्राहकत्वविरहप्रयुक्तप्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन भट्टमतसिद्धसामग्रीभेदसत्त्वादित्यर्थः। सामग्रीविशेषणत्वाभावे अनुयोगिभूतसामग्रीविशेषणत्वाभावे, तत्सामग्रीपरिग्रहेऽपि घटादिसामग्रीपरिगहेऽपि, तत्सामग्रीमादाय बाधसम्भवेऽपि इति यावद्।

यद्यपि घटादिग्राहकसामग्रीमादाय दर्शितव्यावृत्तिसम्भवात् ज्ञाततात्रत्यक्षपर्यन्त-सामग्रीनिवेशनमफलं तथापि मिश्रादिमतासिद्धत्वं परित्यज्य भट्टमतासिद्धत्वपर्यन्त-निवेशव्यावृत्तिर्ज्ञाततात्रत्यक्षमादायैव सम्भवतीति ज्ञाततात्रत्यक्षपर्यन्तानुधावनम् ।

ज्ञानविशेषितज्ञाततविषयकानुमित्यादेर्मिश्रादिभिरपि ज्ञानविषयतागोचरानुमिति-त्वेन स्वीकारात् तत्सामग्र्या अपि ज्ञानग्राहकसामग्रीत्वेन तन्मतसिद्धता । ज्ञानजन्यज्ञात-तावान् इत्यनुमित्यादिसामग्र्या गुरुणा अनङ्गीकारेऽपि सापि अन्यथाख्यातिवादिना मिश्रेण उपगतैवेति तादृशसामग्रीमादाय भट्टमतसिद्धभिन्नत्वनिवेशव्यावृत्त्यसङ्गतिरिति प्रत्यक्षोपादानम् ।

यद्यपि ज्ञाततात्रत्यक्षमपि ज्ञानविषयत्वोपनीतभानरूपतया मिश्रानुमतम्, तथापि ज्ञाततारूपविषयघटिततत्सामग्री ज्ञानग्राहकत्वेन न तन्मतसिद्धेति तामादाय व्यावृत्ति-सङ्गतिः । ज्ञानग्राहकत्वेनेत्यत्र ज्ञानपदं प्रकृतप्रामाण्याश्रयपरम्, अन्यथा पटादिज्ञान-विषयकघटादिशाब्दबोधसामाग्र्या गुरुमते घटादिज्ञानप्रामाण्यग्राहिकाया असङ्ग्रहात् । तथा च अनुयोगिविशेषणमपि प्रकृतप्रामाण्याश्रयग्राहकत्वं बोध्यम् । अन्यथा पटादि-ज्ञानग्राहकसामग्र्या घटादिज्ञानप्रामाण्याग्रहेण बाधप्रसङ्गात् ।

एतेन ग्राहकसामग्रीमात्रस्यैव गुरुमते ज्ञानग्राहकतया तन्मते ज्ञानपदवैयर्थ्यमिति परास्तम् । प्रकृतप्रामाण्याश्रयपरतया तत्सार्थक्यात् ।

---

तद्व्यावृत्तिसम्भवादिति । घटादिसामग्रीव्यावृत्तिसम्भवादित्यर्थः । घटादिसामग्र्याः घटजनकत्वेन ग्रहजनकत्वाभावादिति भावः । प्रकारान्तरेण व्यावृत्तिमाह—सामग्रीजन्य-ग्रह एवेति । एवकारेण सामग्रीव्यवच्छेदः । ननु घटादिप्रत्यक्षसामग्रीमादायैव बाधः सम्भवति तज्जन्यग्रहस्य प्रसिद्धत्वात् तस्याः ग्राहकत्वाच्चेति शङ्कते—यद्यपीत्यादिना । दर्शितव्यावृत्तिसम्भवादिति । ज्ञानग्राहकत्वव्यावृत्तिसम्भवादित्यर्थः । ज्ञाततात्रत्यक्ष-मादायैवेति । ज्ञानजन्यताज्ञाततावानिति प्रत्यक्षमादायैवेत्यर्थः । तादृशप्रत्यक्षसामग्र्या मिश्रमतसिद्धत्वात्, तन्मते ज्ञाततायाः अलीकत्वादिति भावः ।

अनुमित्यादेरिति । मिश्रेणाऽनुव्यवसायस्य स्वीकृतत्वेऽपि ज्ञाततालिङ्गकानुमिते-रपि ज्ञानविषयतागोचरानुमितित्वेनाऽङ्गीकारात् नात्र कोऽपि दोषः । तन्मतसिद्धता इति । इन्द्रियसन्निकर्ष-परामर्श-आत्ममनःसंयोगादिरूपा, सामग्री मिश्रमतसिद्धा । गुरुणा = प्रभाकरेण । तादृशसामग्रीम् = ज्ञानग्राहकसामग्रीत्वावच्छिन्नामित्यर्थः । अन्यथाख्यातिवादिना = भ्रमवादिना । मिश्रेण = मुरारिमिश्रेण । ज्ञाततात्रत्यक्षमपि = ज्ञातो घट इत्याकारकं प्रत्यक्षमित्यर्थः । न तन्मतसिद्धा = तादृशसामग्र्या ज्ञानग्राहक-सामग्रीत्वेन मिश्रमतसिद्धत्वेऽपि ज्ञानग्राहकत्वेन न तन्मतसिद्धेत्यर्थः । इत्थञ्च ज्ञान-निष्ठाऽप्रामाण्याग्राहिका ज्ञानग्राहिका च या यावती सामग्री इन्द्रियसन्निकर्ष-मनःसंयोग-परामर्शादिस्वरूपा तज्जन्यग्रहविषयत्वमिति त्रितयसाधारणं स्वतस्त्वम् इति तु निष्कर्षः । ज्ञानपदम् = प्रकृतप्रामाण्याश्रयज्ञानपरम् इत्यर्थः ।

ग्राहकसामग्रीमात्रस्य = तादृशसामग्रीत्वावच्छिन्नायाः सामग्र्या इत्यर्थः । ज्ञानग्राहक-

न च विषयबाधभ्रमकालीन अनुव्यवसायेन प्रामाण्याग्रहाद् वाधः;

अथ प्रामाण्यघटकघटत्वादिप्रकारकत्वाश्रयग्राहकसामग्रीनिवेशेनैव उपपत्तौ प्रामाण्याश्रयग्राहकसामग्रीनिवेशनमनर्थकम्। न चैवं ज्ञाततताया अपि घटत्वादिप्रकारकत्वाश्रयत्वात् तद्ग्राहकसामग्रीमादाय बाध इति वाच्यम्? ज्ञानग्राहकत्वेनेत्यत्रापि घटत्वादिप्रकारकत्वाश्रयग्राहकताया एव विवक्षणीयतया घटत्वादिप्रकारकज्ञाततताप्रत्यक्ष-सामग्र्या भेदप्रतियोगिकोटौ निवेशनीयत्वादिति चेन्न? प्रामाण्यपर्यन्तानिवेशे घटत्वादि-प्रकारकभ्रमानुव्यवसायसामग्र्या वास्तवघटत्वाद्याश्रयविशेष्यकत्वघटितस्य प्रामाण्या-श्रयस्याग्रहेण बाधस्य दुर्वारत्वात्।

विषयबाधभ्रमकालीनेति। नायं घट इत्यादिभ्रमाव्यवहितोत्तरोत्पन्नेत्यर्थः। न च तदानीमयं घट इत्यादि व्यवसाय एव न सम्भवति इति कथमनुव्यवसायोदय इति वाच्यम्। भिन्नेन्द्रियादिजन्यबाधभ्रमोत्तरलौकिकसन्निकर्षजन्यव्यवसायसम्भवेन अनु-व्यवसायोपपत्तेः। गुरुमते तादृशव्यवसायात्मकज्ञानग्रहे विशेष्ये घटत्वादिमत्ताया लौकिकसन्निकर्षाद् भाने तादृशबाधभ्रमो न विरोधीति प्रामाण्यभानसम्भव इति मिश्र-मतानुसरणम्। बाधस्य प्रमात्वे व्यवसायस्य प्रामाण्याश्रयत्वासम्भवाद् बाधभ्रमेत्युक्तम्। समाधत्ते—तदापीति। तद्ग्रहोपगमात्=विषयस्य तद्वत्त्वांशे निर्धर्मितावच्छेदकक-प्रामाण्यग्रहोपगमादित्यर्थः। समानविशेष्यकस्यापि ज्ञानस्य विशेष्यांशे समानप्रकारक-स्यैव विरोधिज्ञानस्य प्रतिबन्धकत्वादिति भावः। समानविषयतामात्रेण विरोधित्वे-प्रकारधर्मिकावृत्तित्वज्ञानस्य तत्प्रकारकज्ञानसामान्यं प्रति विरोधित्वे वा पुनराह—बाधग्रहाभावेनेति। धर्मिणि प्रकारवत्त्वग्रहप्रतिबन्धकाभावेनेत्यर्थः।

---

तया=ज्ञानविषयकग्रहजनकतयेत्यर्थः। तन्मते इति। गुरुमते इति यावत्। उपपत्तौ= सामञ्जस्येत्यर्थः। साधकप्रमाणोपन्यासरूपा युक्तिः उपपत्तिः। यथा 'श्रोतव्यः श्रुति-वाक्येभ्यो मन्तव्यश्चोपपत्तिभिः' इत्यादौ विज्ञेया। प्रामाण्यपर्यन्तानिवेशे भ्रमात्मका-ऽनुव्यवसायस्य या दोषादिस्वरूपा सामग्री तादृशसामग्रीजन्यग्रहविषयत्वाऽभावेन बाधो दुर्वार एव। गुरोः श्रीप्रभाकरस्य मते सर्वेषामेव ज्ञानानां यथार्थत्वेन प्रकाशरूपतया तत्र ज्ञानान्तरस्याऽऽवश्यकतैव नास्ति। यतस्तन्मते ज्ञानमात्रस्यैव स्वस्यैव स्वप्रामाण्य-विषयकतया स्वजनकसामग्र्येव स्वनिष्ठप्रामाण्यनिश्चायिका भवतीति भवति ज्ञानं स्वयं प्रकाशरूपम्।

नायं घट इति। एवञ्च नाऽयं घट इत्याकारकस्य बाधभ्रमस्योत्तरकाले इन्द्रिय-सन्निकर्षसंयोग-समवायादिस्वरूपाधीन अयं घटः, अयं पटः, इत्यादि व्यवसायात्मक-ज्ञानानन्तरं जायमानाऽनुव्यवसायविषयताया घटत्ववद् विशेष्यकत्वावच्छिन्नत्वविशिष्ट-घटत्वप्रकारकज्ञानत्वरूपप्रामाण्येऽभावेन भवति मुरारिमतेऽपि बाधः। प्रामाण्यग्रहो-पगमात् इति। एवं स्थिते लौकिकसन्निकर्षजन्ये व्यवसायघटितेऽनुव्यवसाये घटत्व-वत्त्वांशे निर्धर्मितावच्छेदककप्रामाण्यस्य भानसम्भवेन न बाध इति तु फलितोऽर्थः।

तदापि तद्ग्रहोपगमात् बाधग्रहाभावेन विशेषणाद् वा। रीतिरुक्तैव। अथ गुरुनये घटेन जलमाहरेत्यादौ छिद्रेतरत्वादेरिव ओदनकामकर्तव्यताबोध-विषयः पाक इत्यादौ शब्दादनुपस्थितस्यापि अन्वयप्रयोजकस्य ओदनादि-साधनताज्ञानस्यापि शाब्देन ग्रहात् तत्प्रामाण्याग्रहाच्च बाधः।

---

**अथैवमपि विशेष्यत्वाद्यंशे घटत्वादिना घटादेर्बाधग्रहे विशेष्यतात्वावच्छिन्नांशे घटत्वादिविशेषितघटीयत्वादिघटितप्रामाण्यभानासम्भवाद् बाधो दुर्वार एव। बाधग्रह-पदेन प्रामाण्यभानप्रतिबन्धकमात्रविवक्षणे 'तदापि तद्ग्रहोपगमात्' इत्यनेन एतत्समाधा-नस्य वैकल्पिकताविरोध इति चेन्न। विशेष्यतात्वस्य घटादिधर्मितावच्छेदकतया न प्रामाण्यघटकता, अपि तु 'एकत्र द्वयम्' इति रीत्या विशेष्यताविशेषणत्वेन उभयो-स्तथात्वमित्याशयेन विकल्पसङ्गतेः। अत एव ज्ञाने विषयितांशे च विषयबाधग्रहदशा-याम् उत्पन्नव्यवसाये ज्ञानभानासम्भवेन स्वप्रकाशतानुपपत्तिरित्यपि समाहितम्।**

**ननु बाधभ्रमो गुरुमते ज्ञानद्वयरूपः। मिश्रमते विशिष्टविषयकैकज्ञानरूपः। तयोः कथमनुगतरूपेण प्रवेश इत्यत आह—रीतिरुक्तैवेति। तत्तद्धर्मिनिरूपिततत्तद्धर्मनिष्ठ-विशेषणताकत्वेन प्रामाण्यग्रहप्रतिबन्धकत्वेन वा अनुगमसम्भव इति भावः, इति भुजङ्ग-भूषणभट्टाचार्याः। तत्प्रामाण्याग्रहात् = ओदनसाधनताज्ञानप्रामाण्याऽग्रहात्।**

---

दीधितौ—अथेति। वैकल्पिकताविरोध इति। विविधः कल्पो विकल्पः, विभिन्नो वा कल्पो विकल्पः, सत्त्वासत्त्वसाधारणो वा विकल्पः, यथा साध्यदृष्टान्तयोर्धर्मविकल्पात् इत्यत्र विकल्पो विज्ञेयः। आहोस्वित् पक्षान्तरबोधकः शब्दो विकल्पः। तथा व्रीहि-भिर्यजेत, यवैर्वेति। सोऽपि विकल्पो द्विविधः—व्यवस्थितः, ऐच्छिकश्च। सोऽप्याकाङ्क्षा-विरहे चास्ति समुचित इति। तदेवाह—विकल्पसङ्गतेरिति। बाधभ्रमो गुरुमते ज्ञान-द्वयरूप इति। अर्थात् गुरुमते ज्ञानं स्वप्रकाशरूपमतस्तज्ज्ञानप्रामाण्यं तेनैव गृह्यते। एतन्मते सर्वमेव ज्ञानव्यवसायरूपमतो घटत्वेन घटमहं जानामि इति चापि ज्ञानं व्यवसायरूपमेव। इतोऽतिरिक्तमनुव्यवसायादिज्ञानं सर्वथा चास्ति स्वास्तित्वविहीनम्। मितिमातृमेयैतत्त्रयविषयत्वात्त्रिपुटीति संज्ञासंज्ञितं तद् भवति। स्वप्रकाशत्वादेव स्वमिव स्ववृत्तिप्रामाण्यम्, तद्विषयीभूतञ्च प्रमेयमपि इति बोध्यम्। प्रभाकरो भ्रमात्मकज्ञाननिष्ठां ज्ञानद्वयरूपतां स्वीकरोति। तच्च रूपं प्रत्यक्षात्मकमेकम्, स्मृत्या-त्मकमपरम्। द्वयोरेव यथार्थतया तत्र नास्ति भ्रमत्वशङ्काकलङ्कः इति च विज्ञेयम्।

दीधितौ—अथ गुरुनये इति। अयमाशयः—घटेन जलमाहर इत्यादौ योग्यताबलात् तात्पर्यबलाद्वा, आकाङ्क्षाबलात् सन्निधिबलाद्वा घटकरणकजलाहरणविषयकशाब्द-बोधे छिद्रेतरत्वस्य यथा भानं भवति तथा ओदनकामकर्तव्यताबोधविषयकः पाकः इत्याकारके जायमाने शाब्दबोधे पूर्वोक्तबलवशात् ओदनसाधनताज्ञानविषयत्वरूपकार्य-विशेषजनने सामर्थ्यरूपयोग्यताज्ञानवत्त्वात्तादृशयोग्यताया ओदनसाधनताज्ञानविषय-त्वस्य तादृशशाब्दबोधे भानं जायते। तादृशशाब्दबोधसामग्र्या ज्ञानग्राहकत्वेन भट्ट-

भट्टेन शब्दादनुपस्थितार्थस्य शाब्दबोधप्रवेशानभ्युपगमात्। तदग्रहेऽपि कर्तव्यताबोधग्रहात् न ज्ञानग्राहकत्वेन भट्टमतसिद्धभिन्नत्वमिति चेन्न।

---

न चौदनसाधनतात्वेन साधनताभाने साधनेतरावृत्तित्वादिघटितस्य साधनतात्वस्य भानेन साधनत्वेन साधनभानात् तज्ज्ञाने साधनत्ववति साधनत्वप्रकारकत्वरूपं प्रामाण्यमस्तीति तदपि तेन गृह्यत एव। गुरुमते स्ववृत्तिप्रामाण्यमात्रस्यैव ज्ञानेन ग्रहादिति वाच्यम्। साधनतात्वस्याऽखण्डोपाधिरूपतायाः साधनत्वानां कार्यादिभेदेन भिन्नानाम् अनुगमाय अवश्यमुपगन्तव्यतया तद्भाने साधनत्वेन साधनभानानियमात्, साधनमुख्यविशेष्यकज्ञानीयमुख्यविशेष्यताघटितप्रामाण्यस्य तादृशशाब्दबोधावृत्तेस्तादृशबोधविषयवृत्तेस्तेन गृहीतुमशक्यतया उक्तरूपसाधनतात्वभानेऽपि बाधस्य दुर्वारत्वाच्च।

तादृशसामग्र्या ज्ञानग्राहकत्वेन भट्टमतासिद्धत्वं दर्शयति—भट्टेनेति। शाब्दबोधप्रवेशानभ्युपगमादिति। तथा च पटज्ञानविषयो घट इत्यादिशाब्दाद्यात्मकव्यवसायसामग्र्या गुरुमते सङ्ग्रहानुरोधेन ज्ञानग्राहकत्वेनेत्यत्र ज्ञानपदस्य प्रकृतप्रामाण्याश्रयज्ञानपरताया उक्तत्वात् उक्तसामग्र्याः प्रकृतप्रामाण्याश्रयौदनसाधनत्वज्ञानग्राहकत्वेन भट्टमतसिद्धमतभिन्नत्वमव्याहतमेवेति न तादृशसामग्रीव्यावृत्तिरिति भावः। गुरुमतेऽपि घटत्वप्रकारकज्ञानविषयो घट इत्यादिव्यवसायसामग्रीवदुक्तव्यवसायसामग्र्यपरिग्रहेऽपि न क्षतिरिति सामान्यतो ज्ञानग्राहकत्वमेव निवेशनीयमतो नोक्तक्रमेण बाध. इत्याशयेन शङ्कते—तदग्रहेऽपि इति। तदग्रहे = ओदनसाधनताज्ञानाग्रहे।

---

मताऽसिद्धत्वेऽपि तज्जन्यग्रहविषयतायास्तादृशप्रमात्वापरपर्यायभूते प्रामाण्येऽभावेन बाधो दुर्वार एव इत्याशङ्कते दीधितौ—अथेत्यादिना।

न चौदनसाधनतात्वेन इति। ओदनसाधनवृत्तिवृत्तिधर्मेणेत्यर्थः। स च साधनवृत्तिवृत्तिर्धर्मः साधनतात्वरूपो धर्मः। स च साधनतात्वरूपो धर्मो न जातिरूपः= नहि सामान्यरूपः। 'सामान्यञ्च स खण्डाऽखण्डभेदेन द्वेधा' इत्यनेन सखण्डाऽखण्डभेदभिन्नं द्विविधं सामान्यं प्रतिपादितं भवति। साधनतात्वस्योभयरूपावच्छिन्नत्वाभावेन साधनतात्वस्याऽखण्डोपाधिरूपता स्वीक्रियते इति। गुरुमते इति। प्रभाकरमते सर्वमेव ज्ञानं स्वविषयकत्वात् प्रकाशमेव। तथा च यथा अयं घट इति च व्यवसायात्मकं ज्ञानं घटं विषयीकरोति तथैव स्वात्मानम् = स्वस्वरूपम् अपि गृह्णाति। तदेवोक्तवान् गदाधरः प्रभाकरमतं हृदि निधाय 'गुरुमते स्ववृत्तिप्रामाण्यमात्रस्यैव ज्ञानेन ग्रहात्' इति।

दीधितौ—भट्टेनेति। ज्ञाततालिङ्गकानुमितिं मन्यमानेन भट्टेनेति। प्रागुक्तसामग्र्याः प्रामाण्याग्राहकत्वेन ज्ञानग्राहकत्वेन च भट्टमतासिद्धत्वविरहात् साध्याऽघटकतैव नास्तीति भवति बाध इत्याशङ्कायामाह—भट्टेन शब्दादिति। अर्थात् पदजन्यपदार्थोपस्थितेरेव शाब्दबोधे हेतुत्वोपगमेन शब्दाद् अनुपस्थितस्यार्थस्य शाब्दबोधे प्रवेशो नाऽभ्युपगम्यते इति। वर्णात्मकशब्दस्य सार्थक-निरर्थकभेदभिन्नत्वेन द्विविधः। प्रकृते येन वर्णात्मकेन शब्देनाऽर्थोपस्थितिर्नैव जाता तस्य निरर्थकतावच्छेदककुक्षिनि-

शब्दाजन्यकाम्यसाधनताज्ञानघटितायाः शाब्दसामग्र्या भट्टेनाऽनभ्युपगमात् ।

---

यद्यपि सामान्यतो ज्ञानग्राहकतानिवेशेनोक्तबाधवारणेऽपि घटत्वप्रकारकेच्छाविषयोऽयमित्यादौ शब्दानुपस्थितस्य योग्यतात्मकघटत्वादिप्रकारकज्ञानस्य शाब्देन ग्रहात् तत्प्रामाण्याग्रहाद् बाधो दुर्वार एव । ज्ञानग्राहकत्वेनेत्यत्र सविषयकग्राहकत्वविवक्षणे इच्छादिविषयकज्ञानप्रामाण्यपक्षकस्थले सिद्धसाधनम् । तादृशप्रामाण्यग्राहिकाया व्यवसायसामग्र्याः प्रामाण्याग्राहकत्वेन इच्छारूपसविषयग्राहकत्वेन भट्टाभ्युगतत्वात् तद्भिन्नप्रामाण्यानुमित्यादिसामग्रीग्राह्यत्वस्य प्रामाण्ये सत्त्वात् । अस्तु वा ज्ञानमित्यादिशाब्दबोधाद्यात्मकव्यवसायप्रामाण्यवत् तदपि प्रामाण्यं पक्षबहिर्भूतम् । अस्तु च ज्ञानपदं सविषयपरमेव, तथापि कम्बुग्रीवादिमान् इत्यादौ घटत्वादिप्रकारकज्ञानविषयत्वस्यापि पदानुपस्थितस्य अन्वयितावच्छेदकतया भानात् तादृशज्ञानप्रामाण्यस्य च तत्राभानात् बाधस्य दुर्वारतैव; तथापि सामान्यतो ज्ञानग्राहकत्वनिवेशमभ्युपेत्य सम्भवाभिप्रायेण उक्तस्थल एव प्रकारान्तरेण बाधं सङ्क्रमयति दीधितौ—शब्दाजन्येति । शब्दाजन्यकाम्यसाधनताज्ञानोपस्थितिघटितसमुदायपर्याप्तसामग्रीत्वस्य ज्ञानग्रहोपधायकतावच्छेदकतया भट्टमतासिद्धत्वादित्यर्थः ।

न च तत्र शाब्दबोधस्य आनुभविकत्वे तज्जनककाम्यसाधनताज्ञानोपस्थितेः पदजन्यत्वमेव भट्टेन कल्पनीयम्, तथा च तत्साधारणसामग्रीत्वमपि तादृशशाब्दबोधोपधायकसमुदायपर्याप्तत्वादिप्रकारेण प्रामाण्याविषयकज्ञानग्रहोपधायकतावच्छेदकतया

---

क्षिप्तत्वेन शाब्दबोधे प्रवेशो नाभ्युपगम्यते; क, च, ट, त, प, इत्यादिवत् इति ध्येयम् इति भावः ।

बाधस्य दुर्वारतां शङ्कते—'यद्यपि' इत्यादिग्रन्थेन । ज्ञानग्राहकत्वनिवेशं स्वीकृत्य सम्भवाभिप्रायञ्च मनसि निधाय प्रागुक्तस्थले एव साध्याभाववत्त्वप्रमाविषयपक्षकत्वरूपम्, आहोस्वित् प्रमितसाध्याभाववत् पक्षकत्वरूपं बाधं सङ्क्रमयति दीधितिकारो रघुनाथशिरोमणिः शब्दाजन्येत्यादिग्रन्थेन । अर्थात् एतादृशबाधज्ञानस्यैव प्रमात्वविषयकतानियमेन प्रतिबन्धकताध्रौव्यादित्यर्थः । इत्थञ्च साध्याभावविषयिणी प्रमैव उक्तस्थले दोषः । सा च साध्याभावविषयिणी प्रमा प्रमात्वेन ज्ञातैवोपयुज्यते, न स्वरूपसती । बाधज्ञानधर्मिकप्रमात्वनिश्चयमन्तराऽधिकबलत्वाभावेन बाधस्य दोषत्वाभावप्रसङ्गात् इति परमार्थः ।

तथा च तादृशसामग्रीत्वस्य हेत्वहेतुसाधारणतावच्छेदककुक्षिनिक्षिप्तत्वेन भट्टमतेऽतिप्रसक्ततया ज्ञानग्रहोपधायकतानवच्छेदकत्वादिति तु साम्प्रतम् ।

पदजन्यत्वमेव भट्टेन कल्पनीयम् इति । अयमाशयोऽस्य ग्रन्थस्य यत्—'शब्दाजन्यकाम्यसाधनताज्ञानघटितायाः शाब्दसामग्र्या भट्टेनाऽनभ्युपगमात्' इति ग्रन्थेन दीधितिकारः श्रीरघुनाथशिरोमणिः भट्टस्येदं कथनं समर्थितवान् यत् पदानुपस्थितिघटितायास्तादृशशाब्दसामग्र्याः कुमारिलभट्टेनाऽस्वीकृतत्वात् । भट्टस्य इवमेव कथनं गदाधरोऽपि

भट्टाभिमतमिति वाच्यम्। यत्कालीनकाम्यसाधनताज्ञानोपस्थितौ पदजन्यत्वविरहो भट्टेनापि निश्चितः, तत्कालीनशाब्दबोधजनकतज्जन्यज्ञानोपस्थितेः शाब्दबोधानुपधायकत्वेन भट्टाभिमतायाः शाब्दबोधोपधायकत्वेन भट्टेनाऽज्ञानात् तत्साधारणसमुदायत्वस्य उक्तप्रकारेण तदीयाभ्युपगमेऽभानात् तत्कालीनसामग्रीमादाय बाधस्य दुर्वारत्वात्।

यदि चोक्तविशेषदर्शनदशायां तत्कालीनकाम्यसाधनताज्ञानोपस्थितित्वादिरूपविशेषधर्मपुरस्कारेण तादृशोपस्थितेः शाब्दबोधोपधायकतया भट्टज्ञानविषयत्वाऽसम्भवेऽपि तादृशविशेषदर्शनशून्यतादशायामुक्तविशेषधर्मप्रकारेण ज्ञानदशायामपि उपस्थितित्वादिसामान्यधर्मप्रकारेण तदीयज्ञानविषयत्वसम्भवात् उक्तरूपेण तदुपस्थितिसाधारणसामग्रीत्वं भट्टाभ्युपगमविषय एवेत्युच्यते, तदा चक्षुःसंयोगादिघटितव्यवसायसामग्र्या अपि सामान्यतो ज्ञानग्रहोपधायकत्वेन भट्टाभ्युपगमविषयत्वे बाधकाभावात् तन्निष्ठसमुदायत्वमपि दुःसङ्ग्रहमेव स्यात्।

न च प्रामाण्याविषयकज्ञानग्रहोपधायकतावच्छेदकतया भट्टमतसिद्धभिन्नत्वं वक्तव्यम्। व्यवसायसामग्र्यां प्रामाण्याग्राहकत्वसहितज्ञानग्राहकत्वप्रकारकं भट्टज्ञानं गुरुमते न्यायमते च न प्रमा। गुरुमते तस्याः प्रामाण्याग्राहकत्वस्य न्यायमते च ज्ञानग्राहकत्वस्य बाधादिति वाच्यम्। एवं सति अनुव्यवसायसामग्र्याः सामान्यतो ज्ञानग्राहकत्वप्रकारकभट्टज्ञानस्य प्रामाण्यग्राहकत्वविषयकत्वेऽपि नैयायिकमतेऽपि उभयांश एव प्रमात्वात् प्रामाण्यानुमित्यादिसामग्रीणामेव साध्यघटकतया निषेधसाधने बाधात्। तस्माद् येन रूपेण स्वाश्रयग्रहोपधायकतावच्छेदकता सामग्रीपर्याप्तधर्मस्य तादृशरूपे प्रामाण्य-

---

'तज्जनककाम्यसाधनताज्ञानोपस्थितेः पदजन्यत्वमेव भट्टेन कल्पनीयम्' इति ग्रन्थेन सम्पुष्टीकृतवान्।

नैयायिका अपि भट्टस्यैवेदं कथनं सर्वतोभावेन दाढर्यं नयन्ति। तेषामपीदमेवास्ति कथनं यत् पदजन्यपदार्थोपस्थितेरेव शक्तिज्ञानोन्नायकत्वेन शाब्दबोधं प्रति हेतुत्वं बोध्यम् इति।

यदि चोक्तविशेषदर्शनेति। अर्थात् पदानुपस्थापकत्वेन तादृशकाम्यसाधनताज्ञानोपस्थितेर्न ज्ञानग्रहोपधायकत्वम्, पदजन्याया एवोपस्थितेरेव तथात्वात् इति भवति बाध इति।

आशङ्कते—न चेत्यादिना। भट्टमतसिद्धभिन्नत्वम् इति। भट्टमतासिद्धत्वमित्यर्थः। व्यवसायसामग्र्याम् इति। चक्षुःसंयोगादिघटिताम्, भूयोऽवयवेन्द्रियसन्निकर्षघटितायाञ्च सामग्र्यामित्यर्थः। गुरुमते=प्रभाकरमते। न्यायमते=गौतममते, वैशेषिकमते कणादमते चेत्यर्थः। गुरुप्रभाकरस्य सिषाधयिताया एव सामग्र्याः, नैयायिकानामतथात्वे च परतोग्राह्यत्वासिद्धिरविरोधादिति विचार्य न्यायमते चेति कथितमिति। तस्माद् येन रूपेण इति। व्यवसायसामग्र्या सङ्ग्रहस्याऽशक्यत्वात्। अर्थात् यादृशरूपावच्छिन्नास्वाश्रयग्रहोपधायकतावच्छेदकता तस्य तादृशभट्टाभ्युपगमविषयतानवच्छेदकत्वम् इत्यर्थः। योग्यताज्ञानादिरूपेति। शब्दाजन्ययोग्यताज्ञानेत्यर्थः। तथा च योग्यता-

मैवम्, शाब्दबोधे हि योग्यताज्ञानं कारणम् । सा च तेषामन्वयप्रयोजक-

---

ग्राहकतावच्छेदकत्वविशिष्टज्ञानग्राहकतावच्छेदकत्वप्रकारकभट्टाभ्युपगमविषयतानवच्छेदकत्वं विवक्षणीयम् । चक्षुःसंयोगादितत्कारणसमुदायपर्याप्तधर्मत्वेन च व्यवसायादिसामग्रीपर्याप्तधर्मस्य स्वाश्रयग्रहोपधायकतावच्छेदकता, तादृशधर्मत्वस्य न निरुक्तभट्टाभ्युपगमविषयतावच्छेदकत्वमिति गुरुमतादिसङ्ग्रहः ।

उक्तशाब्दबोधसामग्रीपर्याप्तधर्मस्य पदजन्यकाम्यसाधनताज्ञानोपस्थितिमनिवेश्य पाकविशेष्यकतादृशज्ञानविषयत्वरूपयोग्यताज्ञानादिरूपतत्तत्कारणपर्याप्तधर्मत्वेन तादृशज्ञानग्राहकतावच्छेदकता, पदजन्यकाम्यसाधनताज्ञानोपस्थित्यादिपर्याप्तधर्मत्वेन च निरुक्तभट्टाभ्युपगमविषयतेति बाधो दुर्वार एव ।

न च तादृशयोग्यताज्ञानस्य भट्टमतेऽपि शाब्दधीहेतुतया तन्मतेऽपि तस्य सामग्रीशरीरे निवेशनमावश्यकम्, तथा च अधिकपदजन्यतादृशयोग्यताज्ञानोपस्थितिनिवेशेऽपि दर्शितसामग्र्या भट्टमतसिद्धत्वमस्त्येवेति वाच्यम् । एवमपि पदजन्ययोग्यताज्ञानविरहकालीनदर्शितशाब्दसामग्रीमादाय बाधस्य दुर्वारत्वात् । ( येन रूपेण गुरुमते सामग्रीपर्याप्तधर्मस्य ज्ञानग्राहकतावच्छेदकता तद्रूपस्य निरुक्तभट्टाभ्युपगमविषयतावच्छेदककोटिप्रवेशोऽव्याहत एवेति वाच्यम् । अधिकान्तर्भावेन पर्याप्तिघटितधर्मस्य विलक्षणया न्यूनवारकपर्याप्त्याऽघटितत्वात् । पाठान्तरमेतत् । )

---

विषयकज्ञाने अर्थात् शाब्दबोधात्मके ज्ञाने एकपदार्थे अपरपदार्थप्रकृतसंसर्गवत्त्वरूपयोग्यताज्ञानत्वेन आहोस्वित् अबाधितार्थकत्वरूप-अर्थाबाधरूपयोग्यताज्ञानत्वेन तादृशयोग्यताज्ञानकारणत्वस्य भट्टेनोपगमादिति भावः । इयं च योग्यता ज्ञाता सती शाब्दबोधप्रयोजिका शब्दयोग्यता इति व्यवह्रियमाणा भवति इति तु परमार्थः ।

उक्तशाब्दबोधसामग्री इति । इत्यादिग्रन्थेन बाधदोषस्य प्रमितसाध्याभाववत् पक्षकरूपस्य, तादवस्थ्यरूपां दुर्वारतां दर्शयति—'बाधो दुर्वार एवे'त्येवं रूपम् । साध्याभावप्रमात्मकबाधज्ञानस्य प्रमात्वविषयकतानियमेन प्रतिबन्धकतायाः सर्वथा निश्चितत्वात् । एवञ्चैतन्मतं समनुसृत्य प्रमात्वविषयकत्वस्यैव ज्ञाननिष्ठप्रतिबन्धकतायामवच्छेदकत्वात् सर्वं सुसञ्जस् इति विज्ञेयम् । सा च साध्याभावयिषयिणी = साध्याभावप्रकारिका प्रमा ज्ञाता सती उपयुज्यते न तु स्वरूपसती ।

दीधितिकारः श्रीरघुनाथशिरोमणिः प्रागुक्तस्य बाधस्य नव प्रकारान् दर्शितवान् । तांश्च प्रकारान् अधस्ताद् दर्शयामि । यथा—( १ ) साध्याभाववान् पक्षः, ( २ ) साध्यवत्प्रतियोगिकभेदवान् पक्षः, ( ३ ) पक्षनिरूपितवृत्तित्वाभाववत् साध्यम्, ( ४ ) पक्षे साध्याभावो बाधः, ( ५ ) पक्षनिष्ठसाध्याभाववत्त्वरूपो बाधः, ( ६ ) साध्यस्य पक्षावृत्तित्वरूपो बाधः, ( ७ ) साध्यवत् सामान्यादेः पक्षान्यत्वादिकम्, ( ८ ) विशिष्टसाध्ये पक्षादेर्विशेष्याभाववत्त्वादिकम्, ( ९ ) पक्षादेः साध्यासमानाधिकरणधर्मवत्त्वरूपो बाधः । इमे नवविधाः प्रकारा दर्शिताः ।

इदानीं दीधितौ—'मैवम्, शाब्दबोधे हि योग्यताज्ञानं कारणम्' इत्यादिग्रन्थेन

रूपवत्त्वम् । तेन तज्ज्ञानं प्रथमं मृग्यते । न च शाब्दबोधे तदनुप्रवेशोऽपि नियतो मानाभावात् । न हि उपस्थितत्वादेव शाब्दबोधे भानम्, उपस्थिताऽबाधितयावत्पदार्थानामेव तथा भानप्रसङ्गात् । नियोज्यान्वयेऽपि काम्यसाधनताज्ञानस्य प्रथमं ज्ञानम्, न तु शाब्दबोधेऽपि तद्भानम् इत्यपूर्वे वक्ष्यते ।

---

योग्यताज्ञानस्य शाब्दधीहेतुत्वेऽपि पदानुपस्थितयोग्यतायाः शाब्दबोधविषयत्वानभ्युपगमात् नोक्तसामग्री काम्यसाधनताधीग्राहिकेति तया तत्प्रामाण्याग्रहेऽपि न क्षतिरिति समाधत्ते—मैवमित्यादिना । पदजन्योपस्थित्यादिसत्त्वे योग्यतायाः शाब्दबोधप्रवेशे बाधकाभाव इत्यतो—'नियत' इत्युक्तम् ।

नन्वेवं स्वर्गकामो यजेतेत्यादौ कामनाविशिष्टस्य यागे कार्यताबोधोपयोगित्वरूपनियोज्यत्वेनान्वये काम्यसाधनताज्ञानोपयोगित्वरूपयोग्यतायाः पदानुपस्थिताया अपि अन्वयितावच्छेदकतया भानमिति तत् सिद्धान्तो भज्येतेत्यत आह—नियोज्यान्वयेऽपीति । प्रथमं ज्ञानमिति । तैः स्वीक्रियते इति शेषः । तावतैवेष्टसाधनताघटकाऽपूर्वोपस्थित्याद्यार्थम् अपूर्ववाच्यताया आवश्यकत्वादिति भावः । न तु शाब्दबोधेऽपीति ।

न चैवम् 'इष्टसाधनताविधिपक्षे स्फुटैवानुपपत्तिः, कार्यताविधिपक्षेऽपि अन्वयप्रकारतया साधनत्वं शाब्दमिति फलतो न विशेषः' इति मणिकारलेखनविरोध इति

---

योग्यताज्ञानस्य शाब्दबोधे हेतुत्वं दर्शयति । कार्यविशेषजनने सामर्थ्यं योग्यता । तच्चं सामर्थ्यम्—एकपदार्थे अपरपदार्थप्रकृतसंसर्गवत्त्वरूपम् । इयञ्च योग्यता अयोग्यपदार्थेषु पारस्परिक अयोग्यत्वस्य संसर्गप्रतिबन्धिका । यथा—वह्निना सिञ्चतीत्यत्र वह्नौ सेककरणकत्वस्य वह्नौ बाधदर्शनान्न योग्यता । अत एवेत्यादिवाक्यान्न प्रमात्मकः शाब्दबोधो जायते योग्यताविरहादेव । प्रागुक्तयोग्यतायाः, अबाधितार्थकत्वरूपाया योग्यतायाः, अर्थाबाधलक्षणलक्षितायाश्च योग्यतायास्तत्रासत्त्वात् इति तु परमार्थः । तज्ज्ञानम्=योग्यताज्ञानम् । अत एव ओदनकामकार्यताज्ञानविषयः पाक इत्यत्र प्रसक्तो बाधो निरस्तो भवति । दीधितौ—मानाभावात् इति । नियमसिद्धत्वाभावे हेतुमाह—मानाभावादिति । नन्वेवं स्वर्गकामः इति । सुखविशेषः स्वर्गः । यागात् स्वर्गो जायते इत्यादिस्थलेषु सर्वत्र स्वर्गशब्दस्य सुखविशेष एवाऽर्थः । यथोक्तम्—'अभिलाषोपनीतञ्च तत्सुखं स्वःपदास्पदम्' इति । इदञ्च सुखमिच्छामात्रसाधनसाध्यम् । अथवा 'अधर्मानारब्धदेहावच्छेद्यसुखं स्वर्गः' । 'देवानामावासस्थानं लोकविशेषः स्वर्गः' । 'स्वर्गकामो यजेत' इत्यादौ स्वर्गकामो यागे नियोज्यः प्रवर्तनीयः । अतः कामनाविशिष्टस्य यागे नियोज्यत्वेनान्वयः । एवम्=पूर्वग्रन्थकथनानुसारतः । इष्टसाधनताविधिपक्षेऽपि इति । शास्त्रीयविधानानुसारं विधायकत्वपक्ष एव विधिपक्षः, आहोस्वित् शास्त्रीयप्रवृत्त्यनुसारम्, प्रवर्तकत्वपक्ष एव विधिपक्षः, इत्यपि तुल्यवित्तिवेद्यन्यायेन वक्तुं शक्यते ।

इत्थञ्च शास्त्रीयविधिविधानानुसारं विधायकत्वम्, प्रवर्तकत्वञ्चास्ति इष्टसाधनताज्ञानस्य कृतिसाध्यताप्रकारकज्ञानस्य च ।

क्वचिच्छिद्रेतरत्वादेरपि भानम्, एकविशेषबाधे शाब्दबोधसामान्य-सामग्र्या विशेषान्तरप्रकारकबोधजननस्वाभाव्यादिति ।

---

वाच्यम् । तादृशग्रन्थस्य हि फलीभूतशाब्दबोध एवेष्टसाधनताया अन्वयितावच्छेदकतया भाने न तात्पर्यम्, किन्तु स्वर्गसाधनत्वस्य अन्वयप्रकारतया अन्वयप्रयोजकरूपयोग्यतात्मकतया तज्ज्ञानस्य फलीभूतबोधात् पूर्वम् अवश्यमङ्गीकर्तव्यतया तद्बोधकप्रमाणान्तरविरहेण शाब्दमेव ज्ञानं पूर्वमङ्गीकर्तव्यम्, तत्रापि विधेस्तात्पर्योपगमादित्यत्रैव । अधिकं नियोज्यान्वये वक्ष्यामः ।

नन्वेवं 'घटेन जलमाहर' इत्यादौ पदानुपस्थितं छिद्रेतरत्वादिकमन्वयितावच्छेदकतया भासत इति तत् सिद्धान्तभङ्ग इत्यत आह—क्वचिदिति । एकविशेषबाध इति । न चैवं यथा सच्छिद्रे घटे जलाहरणसाधनताबाधाच्छिद्रेतरघटत्वावच्छिन्ने पदानुपस्थितेऽपि जलाहरणसाधनतात्वान्वयधीस्तथा काम्यसाधनताज्ञानाविषयपाके कार्यताधीविषयत्वबाधबलात् पदानुपस्थितेऽपि काम्यसाधनताधीविषयत्वविशिष्टे पाके कार्यतान्वयधीरावश्यकी इति तादृशसामग्रीमादायैव बाध इति वाच्यम् । भट्टैरपीतरबाधबलेन पदानुपस्थितार्थस्य शाब्दबोधे भानोपगमात् ।

---

समूहालम्बनज्ञानीयां कारणतां विचार्य शङ्कते—यत् लाघवेन बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनताविषयककार्यताज्ञानत्वेन हेतुत्वमस्तु । बलवदनिष्टाननुबन्धित्वञ्च इष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखाजनकत्वम्, बलवद्द्वेषविषयदुःखाजनकत्वं वेति चेन्न । उभयोरेककालावच्छेदेन ज्ञातुमशक्यत्वात्, साध्यत्व-साधनत्वयोर्विरोधात् । तस्मात् कालभेदादेवोभयं ज्ञातुं शक्यते । तादृशग्रन्थस्य=पूर्वोक्तग्रन्थस्येत्यर्थः । अन्वयितावच्छेदकतयेति । धर्मितावच्छेदकतयेत्यर्थः । नियोज्यान्वये इति । 'स्वर्गकामो यजेत' इत्यत्र घटकीभूते यागे स्वर्गकामो नियोज्यः इति भावः ।

सच्छिद्रे इति । छिद्रत्वावच्छिन्ने घटे जलाहरणनिरूपितायोग्यता नास्ति । अत्रैव विषये पीलुपाक-पिठरपाक-विमतं समनुभूयते । अत्र प्रसङ्गात् पाकजप्रक्रिया चिन्त्यते । अत्र पीलवः=परमाणवस्तत्रैव सर्वतः प्राक् विजातीयतेजःसंयोगरूपो हि पाको जायते । ततश्च कारणगुणप्रक्रमेण अवयविनि पाको भवति । अर्थात् आमपाके निक्षिप्तस्य घटस्याऽग्निना नोदनाख्यसंयोगात्, अभिघाताख्यसंयोगाद्वा घटारम्भकेषु स्वतन्त्रेषु परमाणुषु पाको भवतीति पीलुपाकवादिनो वैशेषिका वदन्ति ।

पिठरपाकवादिनश्च नैयायिका अवयविनां घटादीनां सच्छिद्रत्वेन छिद्रेषु प्रवेशं लभमानास्तेजःपरमाणवो घटस्याऽऽभ्यन्तरप्रदेशावच्छेदेनापि पाकं प्रकुर्वन्ति, न तु तत्राऽवयविनां विनाशोऽपि जायते । अन्यथा सोऽयं घटः इति प्रत्यभिज्ञाविरोधः स्याद् इति तु निष्कर्षः ।

स च पाकः स्थालीमार्जनाऽधःसन्तापनादि=ओदनादिपरीक्षान्तो व्यापारसमूह इति । तत्र शब्दशास्त्रवेत्तारो वैयाकरणा विक्लित्त्यनुकूलव्यापारः पाक इति वदन्ति । साहित्यशास्त्रविशारदा रसास्वादप्रभेदः पाक इति वदन्ति ।

भट्टैरपीतरबाधबलेनेति । भट्टैरपि यत्धर्मावच्छेदेन ... र्मावच्छिन्नधर्मिकयद-

अथैवमपि अर्थाध्याहारवादिनां गुरूणां मते तात्पर्यसत्त्वे पदानुपस्थितस्यापि काम्यसाधनताज्ञानादेर्भानावश्यकतया बाधवारणमशक्यमेवेति चेन्न।

यद्यद्रूपावच्छिन्नसमुदायपर्याप्तत्वेन प्रामाण्याविषयकज्ञानग्राहकतावच्छेदकता भट्टाभ्युपगता तत्तद्रूपशून्यकारणान्तर्भावेन पर्याप्तत्वस्य स्वाश्रयग्राहकतावच्छेदकत्वविशेषणत्वोपगमेन सामञ्जस्यात्।

गुरुमते व्यवसायसामग्रीघटकचक्षुःसंयोगादेः मिश्रमते चानुव्यवसायसामग्रीघटकव्यवसायादेस्तत्तद्रूपशून्यत्वात् तदन्तर्भावेन पर्याप्तस्य ज्ञानग्राहकतावच्छेदकरूपस्य सङ्ग्रहः। अध्याहृतज्ञानग्राहकसामग्र्यां पदजन्यतदुपस्थितेरधिकाया भट्टमते निवेशेऽपि तन्मतासिद्धकारणस्य गुरुमतेऽनिवेशाद् गुरुमतसिद्धतादृशसामग्रीपर्याप्तज्ञानग्राहकतावच्छेदकं रूपं न

---

यद्धर्मावच्छिन्नाभावग्रहस्य तद्धर्मावच्छिन्नधर्मिकतत्प्रकारकशाब्दधीकारणत्वस्वीकारात्। एवंविधकार्यकारणभावबलेनैव दीधितिकारः 'क्वचिच्छिद्रेतरत्वादेरपि भानम्' इत्युक्तवान्। येन 'घटेन जलमाहर' इत्यत्र सच्छिद्रेतरत्वावच्छिन्नरूपाऽर्थाध्याहारेण तादृशकथनं साधु सङ्गच्छते इति।

अर्थाध्याहारवादिनामिति। अध्याहारश्च अश्रुतपदानामनुसन्धानम्। यथा 'द्वारम्' इत्युक्ते 'पिधेहि' इति पदस्याऽध्याहारः एवं 'पिधेहि' इत्युक्ते द्वितीयान्तद्वारम् इति पदस्याऽध्याहारो विधेयः। स च अध्याहारो द्विविधः—शब्दाध्याहारः अर्थाध्याहारश्च। प्राभाकराः सर्वत्र अर्थाध्याहारमेव स्वीकुर्वन्ति न तु शब्दाध्याहारमपि।

परन्तु न्यायशास्त्रविशारदा एतन्न मन्यन्ते यतः भोजनमानय इति वाक्यादिव भोजनम्, कर्मत्वम्, आनयनम् कृतिः, इत्येतादृशवाक्यादपि भोजनवृत्तिकर्मतानिरूपकाऽऽनयनकृतिमान् इत्याकारकविशिष्टार्थविषयकशाब्दबोधापत्तिवारणाय वृत्त्या पदविशेषजन्याया एवाऽर्थोपस्थितेः कारणत्वं वाच्यम्। इत्यतः शब्दाध्याहार एवाऽऽवश्यकः।

समुदायपर्याप्तत्वेनेति। पर्याप्तिश्च सम्बन्धविशेषः। स च अयमेको घटः, इमौ द्वौ, इमे त्रयः, इत्यादिप्रतीतिसाक्षिकः स्वरूपसम्बन्धविशेषः। सम्बन्धान्तरेण विशिष्टप्रतीतिजननायोग्यत्वम् इति। यथा—भूतले घटो नास्ति इत्यत्र घटाभावस्य भूतलेन सह सम्बन्धः स्वरूपसम्बन्ध एव। स च केवलस्वरूपात्मकः विशेषणतारूपश्चेति द्विविधः। प्रथमो यथा—प्रतियोगित्वाऽनुयोगित्वप्रभृतीनाम्। द्वितीयश्च विशेषणतारूपसम्बन्धस्त्रिविधः—दैशिकविशेषणता, दिक्कृतविशेषणता कालिकविशेषणता च।

प्रकृतमनुसरामः—समुदायपर्याप्तत्वेनेत्यस्य पर्याप्तिसम्बन्धेन समुदाये वर्तमानत्वेनेत्यर्थः। तत्र यथा द्वित्वपर्याप्तिसम्बन्धेन द्वयोस्तिष्ठति, त्रित्वं त्रिषु वर्तते। एवं समुदायत्वं पर्याप्तिसम्बन्धेन समुदाये तिष्ठति इति। तथैव तादृशज्ञानग्राहकतावच्छेदकता पर्याप्तिसम्बन्धेन तादृशसकलग्राहकतावच्छेदकेषु वर्तते न त्वेकत्र कस्मिंश्चिद् ग्राहकतावच्छेदके। प्रत्येकावृत्तिधर्मस्य समुदायावृत्तित्वमिति नियमस्तु समवायस्थलीय एवेति विज्ञेयम्। इयञ्चावच्छेदकता भट्टेनापि स्वीकृता इति।

गुरुमते=प्रभाकरमते। व्यवसाय-अनुव्यवसायसामग्रीघटकीभूतचक्षुःसंयोगादेः भट्टमते ज्ञानग्राहकत्वाभावाज्ज्ञानं गुण इत्यादिशाब्दबोधसामग्र्या अन्तर्गतकारणनिष्ठाना-

निरुक्तरूपशून्यकारणान्तर्भावेन पर्याप्तमिति तद्रूपावच्छिन्नाग्राह्यत्वेऽपि प्रामाण्यस्य न बाधः। न च तादृशपदजन्योपस्थितित्वादिशून्यपदाजन्योपस्थितिमन्तर्भाव्य गुरुमतसिद्धज्ञानग्रहोपधायकतावच्छेदकरूपस्य पर्याप्तत्वात् न तादृशधर्मव्यावृत्तिरिति वाच्यम्। पदजन्योपस्थितेरपि विशेषणतावच्छेदकप्रकारकज्ञानादिविधया भट्टमते तादृशशाब्दबोधहेतुत्वेन तादृशविशेषणतावच्छेदकप्रकारकज्ञानत्वादिधर्मवत्त्वेन निरुक्तरूपशून्यताविरहात्।

वस्तुतो गुरुमतेऽपि पदजन्यार्थोपस्थितेस्तत्तदर्थोपस्थितित्वेन शाब्दसामग्रीघटकत्वं नोपेयते। तात्पर्यादिज्ञानस्य तत्तदर्थविषयतानियमेन तन्निवेशेनैवोपपत्तेः। तथा च गुरुमतसिद्धसामग्रीघटकनिखिलकारणानां भट्टमतेऽपि उक्तसामग्रीघटकत्वं निर्विवादमेवेत्युक्तरीत्या सामञ्जस्यम्। ज्ञाततालिङ्गकानुमितिसामग्रीघटकसिद्धचभावबाधविशेषाभावादीनां प्रामाण्याविषयकज्ञानग्रहोपधायकभट्टमतसिद्धसामग्र्यामनन्तर्भावात् तादृशसामग्र्यास्तन्मते परिग्रहः। अतो ज्ञाततालिङ्गकपरामर्शस्य ज्ञातत्वप्रकारकोपस्थितित्वादिना प्रामाण्याविषयकज्ञानग्रहोपधायकपदाजन्योपस्थितिघटितान्वयबोधसामग्रीघटकत्वेऽपि न क्षतिः। एवञ्च पदानुपस्थितताया अन्वयप्रयोजकरूपात्मकयोग्यताया योग्यताज्ञानबलादेव शाब्दबोधे भानस्वीकारेऽपि तादृशयोग्यताज्ञानस्य भट्टमतेऽपि शाब्दबोधहेतुतया तत्सामग्रीघटकत्वेन तादृशयोग्यताघटकानां पदजन्योपस्थितेर्भट्टमतेऽधिकायास्तादृशयोग्यताविषयकशाब्दबोधेऽपेक्षितत्वेऽपि उक्तरीत्या तादृशसामग्र्या वारणसम्भवात्। शाब्दबोधे तात्पर्यासत्त्वे योग्यताज्ञानबलाद् योग्यताभानं निर्युक्तिकमिति वस्तुगत्यनुरोधेन ग्रन्थकृता तन्निराकृतम्।

---

मेव रूपाणां प्रागुक्तेन यच्छब्देन ग्रहणादिति। गुरुमततादृशसामग्रीपर्याप्तज्ञानग्राहकतावच्छेदकरूपस्य भट्टमते ज्ञानग्राहकतानवच्छेदकत्वात् प्रागुक्तविवक्षायामपि यद्यद्रूपपदेन ज्ञानं गुण इति शाब्दबोधकारणगततत्तच्छून्यकारणान्तर्भावेन पर्याप्तत्वं दुर्वारमित्याशङ्क्य पूर्वोक्तेन 'गुरुमतेऽनिवेशादि'त्यन्तेन ग्रन्थेन वारणीया।

सैद्धान्तिको ब्रूते—'वस्तुतः' इत्यादिग्रन्थेनेति। विशेषणतावच्छेदकप्रकारकज्ञानस्याऽकारणत्वेऽपीत्यर्थः। गुरुमतेऽपि इति। ज्ञानस्य स्वप्रकाशतावादि गुरुनयेऽपीत्यर्थः। तथा च स्वप्रकाशमहिम्ना स्वमिव स्वनिष्ठं प्रामाण्यमपि विषयीकरोति ज्ञानम्। तात्पर्यादिज्ञानस्येति। तदर्थप्रतीतीच्छयोच्चरितत्वरूपस्य, आहोस्वित् इदमेतस्मिन्नर्थेऽस्याऽन्वयं प्रत्याययतु इति प्रयोक्तुरिच्छारूपस्य तात्पर्यस्य ज्ञानं निश्चयात्मकमेव शाब्दबोधे शब्दस्य सहकारिकारणम्। ज्ञाततालिङ्गकपरामर्शस्येति। ज्ञाततालिङ्गकानुमितिस्वीकर्तृ भट्टमते ज्ञानमतीन्द्रियं ज्ञानजन्या ज्ञातता च प्रत्यक्षा। तया च ज्ञाततया ज्ञानमनुमीयते। अनुमानप्रकारश्च—घटो घटत्ववद्विशेष्यकघटत्वप्रकारकज्ञानविषयो ज्ञाततावत्त्वात् यन्नैवं तन्नैवम् इति। एतस्या अनुमितेः कारणीभूतश्चायमस्ति परामर्शः—घटत्ववद्विशेष्यकघटत्वप्रकारकज्ञानव्याप्य ज्ञाततावान् घटः यन्नैवं तन्नैवम्।

ज्ञाततापक्षकानुमानस्थलीयोऽयमस्ति परामर्शः। यथा—घटत्ववद्विशेष्यकघटत्वप्रकारकज्ञानव्याप्य ज्ञाततावती ज्ञातता यन्नैवं तन्नैवम्।

अथैवमपि सामग्र्यघटिते प्रामाण्याविषयकत्वेन, ज्ञानविषयकत्वेन यद् भट्टमतसिद्धं तदन्यथावज्ज्ञानग्राह्यत्वरूपसाध्येऽध्याहृतज्ञानविषयकज्ञानवानात्मेत्याद्याकारकशाब्दबोधाविषयतया प्रामाण्यस्य गुरुमते बाधो निराबाध एवेति चेत् ? तत्कल्पे शाब्दान्यत्वेन तादृशज्ञानस्य विशेषणीयत्वात् ।

यत्तु तादृशशाब्दबोधस्यानुभविकत्वे भट्टेनापि पदाध्याहारकल्पनया तादृशबोध उपपादनीय इति स शाब्दबोध उक्तरूपेण भट्टमतसिद्धोऽपीति समाधानम् । तदसत्, यत्र पदजन्याया ज्ञानोपस्थितेरभाव उभयवादिसिद्धस्तत्रत्यबोधे ज्ञानविषयताया भट्टानभ्युपगतत्वात् तदग्राह्यत्वमादाय बाधस्य दुर्वारत्वात् । ज्ञानभासकसामग्र्यनन्तरोत्पन्नं ज्ञानं ज्ञानविषयकमिति सामान्यतोऽभ्युपगम अयं घट इत्याकारकस्वप्रकाशात्मकव्यवसायमपि विषयीकरोति इति तादृशाऽभ्युपगमावृत्तरूपेणैवाऽभ्युपगमस्य निवेश्यत्वात् ।

वस्तुतस्तु यत्रात्मादेः पदार्थान्तरस्य पदादुपस्थितिः ज्ञानस्य चान्यत उपस्थितिस्तत्रापि उपनीतभानस्थलीयो ज्ञानान्वयबोधो भट्टाभ्युपगतः । परन्त्वसौ गुरुमते तात्पर्यादिज्ञानघटितसामग्रीजन्यः शाब्दयामीत्यनुव्यवसायविषयः । भट्टमते त्वसंसर्गाग्रहपदार्थोपस्थित्यात्मकसामग्रीमात्राधीन उक्तानुव्यवसायविषयः । एतावतैव च शब्दादनुपस्थितस्यार्थस्य शाब्दबोधेऽप्रवेश इति भट्टमतसिद्धान्तस्योपपत्तिरिति कथिताऽध्याहृतार्थविषयकशाब्दबोधः प्रामाण्याविषयकत्वेन ज्ञानविषयकत्वेन च भट्टमतसिद्ध एवेति बोध्यम् ।

---

अथैवम् इति । योग्यताज्ञानस्य निर्युक्तत्वेन ग्रन्थकृता तन्निराकृतत्वेऽपि । सामग्र्यघटिते इति । ज्ञाततालिङ्गकानुमितिसामग्र्यघटिते इत्यर्थः । भट्टमतसिद्धमिति । कुमारिलभट्टमते यत् निश्चितम् इत्यर्थः । ज्ञानोपस्थितेरिति । अत्रापि पूर्ववदेव ज्ञानवान् आत्मा इत्यादौ प्राभाकरनये ( गुरुमते ) साधारणतया कुमारिलतोऽङ्गीकृतविषयत्वाद् बाधवारणमाशङ्क्य निरस्यति—ज्ञानोपस्थितेरित्यादिग्रन्थेनेत्यवधेयम् । तादृशाभ्युपगमव्यावृत्तरूपेणेति । ज्ञानग्राहकसामग्र्यविषयत्वं विशेषणं देयमित्यर्थः । तादृशी च या प्रागुक्ता चास्ति सामग्री तद्भिन्नत्वं वा विशेषणं देयमित्यर्थः ।

'तत्कल्पे शाब्दान्यत्वेन तादृशज्ञानस्य विशेषणीयत्वादि'ति गादाधरी । तत्रैव ज्ञाने शाब्दान्यत्वेन मास्तु निवेशस्तावतापि समाधानान्तरमाह—वस्तुतस्तु इत्यादिग्रन्थेन । अर्थात् तादृशजन्यग्रहस्य साध्यघटकयावद्ग्रहान्तर्गतत्वादिति भावः । पदार्थान्तरस्येति । ज्ञानभिन्नस्येत्यर्थः । तत्रापि = प्रकारान्तरेणोपस्थितिस्थलेऽपि । उपनीतभानस्थलीय इति । ज्ञानलक्षणासन्निकर्षेण भातं ज्ञातं वा, तच्चोपनीतं विशेषणतयैव भासते । यथा 'सोऽयं देवदत्तः' इत्यादौ—उपनीततत्ताविषयकत्वं भासमानं भवति ।

अपि च घटो नास्ति, पटो नास्ति, सुरभिचन्दनम्, इत्यादौ प्रत्यभिज्ञात्मके ज्ञाने प्रत्यक्ष उपनीतभानं भट्टाभिमतम् इति । एतच्चापि उपनीतं प्रत्यक्षे एव स्वस्थानं लभमानं भवति न तु शाब्दबोधादावपीति भावः । शाब्दयामि = तादृशसामग्रीजन्यं शाब्दबोधं सम्पादयामीत्यर्थः ।

न च स्वर्गकामकर्तव्यताबोधविषयो यागविषयकं कार्यमिति वेदजन्यं ज्ञानं गुणो ज्ञानत्वादित्यनुमानादिना ग्राह्यज्ञानप्रामाण्याग्रहाद् बाधः। वेदजन्य-तादृशज्ञानस्य भट्टनये शशविषाणकल्पतया तद्ग्राहकसामग्र्या भट्टेनाऽनभ्युपगमादिति वाच्यम्।

अन्यथाख्यातिवादिनस्तस्य शशविषाणं द्रव्यं विषाणत्वादित्यनुमानादौ विरोधाभावात्। भट्टमतासिद्धज्ञानग्राहताकशाब्दानुमितिस्मृतिसामग्रीभिन्न-त्वेन सामग्रीविशेषणीयेत्यपि कश्चित्।

---

अनुमानादिनेत्यादिना तादृशशाब्दबोधस्मृतिसामग्रीपरिग्रहः। ग्राह्यज्ञानेति। तादृशवेदजन्यज्ञानेत्यर्थः। बाध इति। गुरुमते इत्यादिः। इदमुपलक्षणम्, मनस्संयुक्त-समवायजन्यं घटमहं जानामि इति ज्ञानं गुणो ज्ञानत्वात् इत्यनुमानादिना ग्राह्यज्ञान-प्रामाण्याग्रहात् मिश्रमते बाध इत्यपि द्रष्टव्यम्।

वेदजन्यतादृशज्ञानस्येति। मनःसंयुक्तसमवायजन्यस्योक्तज्ञानस्यापि तथात्वं बोध्यम्। तद्ग्राहकेति। तादृशज्ञानग्राहकेत्यर्थः। भट्टेनाऽनभ्युपगमादिति। तथा च तादृशसामग्र्या निरुक्तरूपेण भट्टमतसिद्धा या सामग्री तद्भिन्नत्वेन तज्जन्यग्रहस्य साध्यघटकयावद्-ग्रहान्तर्गतत्वादिति भावः।

इत्यनुमानादौ विरोधाभावादिति। तथा च यथा प्रसिद्धविषाणे शशीयत्वावगा-हिन्याः शशविषाणं द्रव्यम् इत्याकारकानुमितेर्भट्टमतसिद्धतया तत्सामग्र्यपि तन्मतसिद्धा।

---

इदानीं 'भट्टमतसिद्ध एव' इति ग्रन्थोपरि शङ्कते—न चेति। दीधितौ—'स्वर्ग-कामकर्तव्यताबोधविषय' इति। स्वर्गविषयिणीं कामनां विदधानस्य स्वर्गनिष्ठकर्तव्यता-प्रकारको बोधो जायते। अथवा स्वर्गनिष्ठेष्टसाधनताप्रकारको बोधो जायते, स्वर्गो मदिष्टसाधनमित्याकारक इति। स च स्वर्गः सुखविशेषः, इच्छामात्रसाधनसाध्यं सुखं वेत्यपि विज्ञेयम्। 'अभिलाषोपनीतश्च तत्सुखं स्वः पदास्पदम्'।—अपि च तस्यैव कृपालुताम् औदार्यञ्च प्रशंसितम्—

'न जरा न शोकस्तत्र नायासपरिदेवने।
ईदृशः स मुने! लोकः स्वकर्मफलहेतुकः'॥ इति।

शशविषाणकल्पतयेति। तादृशज्ञानस्य भट्टनये सर्वथाऽत्यन्ताभावकल्पतया इत्यर्थः। मिश्रमते इति। घटज्ञानवानहम् इत्यनुव्यवसायवादिमिश्रमते। भट्टेनाऽनभ्युपगमात् इति। कुमारिलभट्टेन ज्ञाततालिङ्गकानुमितिवादिनाऽस्वीकारादित्यर्थं इति तु परमार्थः। दीधितौ—यागविषयकं कार्यमिति। स्वर्गकामनियोज्यकं यागविषयकं कार्य-मित्यर्थः।

दीधितौ—अन्यथाख्यातिवादिन इति। अन्यथाख्यातिर्भ्रमः, अयथार्थानुभव इत्यर्थः। अत्रेदं विचारणीयमस्ति यद् यत्र रज्जुप्रभृतिविषयाणां रज्जुनिष्ठाऽसाधारण-रज्जुत्वधर्मावच्छिन्नरज्जुनिष्ठविषयतानिरूपितविषयिताशालिज्ञानं सर्वथा समुचितं प्रति-भाति तत्र रज्जुत्वधर्मावच्छिन्नस्य रज्जुभिन्नसर्पत्वधर्मावच्छिन्नत्वेन ज्ञानम् 'अयं सर्पः'

तथा स्वर्गकामनियोज्यकं यागविषयकं कार्यमित्याद्याकारकसामग्र्यन्तरजन्यबोधस्य वेदजन्यत्वाद्यंशे भ्रमरूपतया भट्टाभ्युपगताया उक्तानुमित्यादेः सामग्र्यपि प्रामाण्याविषयकज्ञानग्रहजनकतया भट्टमतसिद्धैवेति तद्ग्राह्यत्वेऽपि तादृशज्ञानप्रामाण्यस्य न बाध इति भावः। उक्तानुमित्यादिसामग्र्या भट्टानभ्युपगतत्वाभिमानिनो विशेषणान्तरप्रवेशेनोक्तबाधसमाधानमुपन्यस्यति—भट्टमतासिद्धेति। उक्तानुमित्यादिसामग्र्या भट्टमतासिद्धज्ञानग्राहकतया व्यावृत्तिः।

ज्ञाततालिङ्गकानुमितिसामग्र्या भट्टमते सङ्ग्रहाय ग्राहकताकान्तं सामग्रीविशेषणम्। तस्याश्च ज्ञानग्राहकता न भट्टमतासिद्धेति तत्सङ्ग्रहः। भट्टमतसिद्धसामग्र्यस्यास्तन्मतेऽप्रसिद्ध्या तन्मतसङ्ग्रहाय भट्टमतासिद्धत्वं सामग्रीविशेषणमुपेक्ष्य भट्टमतासिद्धज्ञानग्राहकताकत्वपर्यन्तं तद्विशेषणमुपात्तम्।

तादृशी च सामग्री तन्मते घटाद्यनुमितिसामग्र्येव प्रसिद्धा। ज्ञानग्राहकतया भट्टमतसिद्धं यत् तदन्यत्वस्य तत्र भट्टमतेऽपि सत्त्वात्। भट्टमतासिद्धज्ञानग्राहकतासामग्रीसामान्यभेदनिवेशे गुरुमिश्रमतासङ्ग्रहः। व्यवसायानुव्यवसायसामग्र्योर्ज्ञानग्राहकतया भट्टमतासिद्धत्वादिति शाब्दानुमितिस्मृतीनामुपादानम्। तासां च प्रत्यक्षान्यत्वेनैव निवेशः, न तु विशिष्य। तेनानुमितौ ग्राहकान्तविशेषणेनैव भट्टमतसङ्ग्रहे शाब्दादिसामग्रीसामान्यभेदनिवेशेऽपि क्षतिविरहात् तत्सामग्र्यां तादृशविशेषणवैयर्थ्यमित्यपि समाहितम्। अतीन्द्रियगुरुत्वादिविषयघटितप्रामाण्यं पक्षाद् बहिर्भावनीयम्। तेन गुरुमते तादृशप्रामाण्याश्रयव्यवसायसामग्र्या भट्टमतासिद्धज्ञानग्राहकताकपरोक्षसामग्रीत्वनियमेऽपि गुरुमते न बाधः।

अथवा ज्ञानांशे परोक्षस्य सामग्री विवक्षणीया। ज्ञानांशे परोक्षत्वञ्च ज्ञानविषयकज्ञानजन्यत्वम्। गुरुत्वादिप्रकारकव्यवसायस्यापि ज्ञानविषयकज्ञानाजन्यतया तत्सामग्र्या अपि गुरुमते सङ्ग्रहः। एवञ्च दर्शिताकारानुव्यवसायविषयकोपनीतभानसामग्र्या

---

इत्याकारकं जायते, तदेव ज्ञानम् अन्यथाख्यातिपदाभिधेयतां गच्छति। स्वर्गकामनियोज्यकम् इति। स्वर्गकामकर्तव्यताबोधविषयो यागविषयकं कार्यमित्यर्थः। भट्टमतासिद्धेति। ज्ञानस्य भट्टमतेऽतीन्द्रियत्वेन अतः प्रत्यक्षाऽसम्भवेन स्वजन्यज्ञाततालिङ्गकानुमितिसामग्री स्वनिष्ठप्रामाण्यनिश्चायिका भवति। एतद्भिन्ना सामग्री भट्टमतासिद्धेति निरुच्यते इति।

तन्मते इति। प्रभाकरमते। सामग्री इति। कारणकूटात्मिका सामग्री। घटाद्यनुमितिसामग्र्येवेति। घटाद्यनुमितिजनकीभूता सामग्र्येव। सामग्री च कार्यायोगव्यवच्छिन्नः कारणसमुदायः। यथा—घटविषयकप्रत्यक्षस्य तादृशकारणसमुदायात्मिका सामग्री इन्द्रियम् इन्द्रियसन्निकर्षादिश्च। एवं घटाद्यनुमितिसामग्री च व्याप्तिज्ञानपरामर्शादिस्वरूपा सामग्री विज्ञेया। इदमत्रावधेयमस्ति—समानविषये प्रत्यक्षानुमितिसामग्र्येव बलवती। विभिन्नविषये तु अनुमितिसामग्र्येव प्रबला इति। एवं प्रत्यक्षशाब्दबोधसामग्र्योर्मध्ये समानविषये प्रत्यक्षसामग्री प्रबला, विभिन्नविषये तु शाब्दसामग्री

ग्राह्यज्ञानप्रामाण्याग्रहेऽपि न मिश्रमते बाधः। तादृशोपनीतभानेऽपि उक्तानुमित्यादिवत् निरुक्तस्य ज्ञानांशे परोक्षत्वस्य सत्त्वात् तत्सामग्र्या उक्तविशेषणेन व्यावृत्तेः। एतन्मते दर्शितपदाजन्यज्ञानोपस्थितिघटितशाब्दसामग्र्या अप्यनेनैव विशेषणेन व्यावृत्तेस्तद्वारणाय दर्शितप्रयासो नास्तीति बोध्यम्।

एवं घटज्ञानकालीनपटज्ञानवानहमित्याद्याकारकघटज्ञानांशोपनीतभानात्मकपटज्ञानानुव्यवसायसामग्र्या घटज्ञानाद्यभावग्राहकसामग्र्या च भट्टमतासिद्ध्या घटज्ञानप्रामाण्याग्रहेण मिश्रमते बाधोऽनेनापि विशेषणेन शक्यवारणः। उक्तानुमित्यादिसामग्र्या दर्शितरीत्यैव वारणसम्भवात्, तद्वारणायाधिकविशेषणप्रवेशो व्यर्थ इत्यस्वरससूचनाय कश्चिदिति। अत्र ज्ञानग्रहत्वेन ज्ञानग्राहकसामग्रीजन्यग्रहनिवेशसम्भवे तादृशसामग्रीजन्यग्रहत्वेन तन्निवेशः शिरोवेष्टनेन नासिकास्पर्शमनुधावतीति ज्ञानग्रहत्वेन ग्रहं निवेश्य तद्विषयत्वकोटिकविप्रतिपत्त्यकथनेन मूलस्य न्यूनता। एवं प्रथमविप्रतिपत्तावपि ज्ञानपदस्य स्वाश्रयार्थकताया उक्तत्वात् तृतीयविप्रतिपत्तौ ग्राहकपदस्य ग्राहकसामग्रीपरत्वे तस्यास्ततो न भेदः।

न चाऽप्रामाण्याग्राहकत्वविशेषणाप्रवेशादेव विशेषः, पक्षसङ्कोचेनैव अप्रामाण्याग्राहकसामग्रीग्राह्याश्रयकप्रामाण्ये बाधवारणसम्भवादिति मिश्रमतं सम्यक्। तथा सति यादृशज्ञाने प्रामाण्यसंशयस्तत्प्रामाण्यस्य पक्षबहिर्भावेन तत्र मीमांसकैः स्वतस्त्वासाधनात्, प्रामाण्यसंशयानुपपत्तिरूपवक्ष्यमाणदूषणासङ्गतेः। एकस्यैव ज्ञानप्रामाण्यमिति पक्षवाचकपदस्य प्रथमविप्रतिपत्त्यनुरोधात् अप्रामाण्यग्राहकसामग्रीग्राह्याश्रयकपरत्वम्।

---

एव बलवती। एवमन्यत्रापि स्वयमेवोह्यम् इति। मिश्रमते इति। घटज्ञानवानहम्, घटमहं जानामीत्यनुव्यवसायाङ्गीकर्तृमुरारिमिश्रमते इत्यर्थः। एवं सामग्र्योर्बलाबलविचारे एवमेव मानस-लौकिकप्रत्यक्षसामग्र्योर्मध्ये लौकिकप्रत्यक्षसामग्री बलवती। मानससामग्री तु सकलसामग्र्यपेक्षया दुर्बला इति तु परमार्थः।

एवम्=एवंस्थिते। भट्टमतासिद्ध्या इति। भट्टमते प्रथमक्षणे व्यवसायानन्तरं ज्ञातो घट इत्याकारकं प्रत्यक्षात्मकं ज्ञानं जायते। तत्पश्चाच्च तदेव ज्ञानं घटे ज्ञाततानामकं फलं जनयति। ततश्च ज्ञाततालिङ्गकपरामर्शः ज्ञानस्याऽतीन्द्रियत्वात् तज्ज्ञानम्, तन्निष्ठं प्रामाण्यञ्चानुमिनोति। परन्तु तादृश अनुव्यवसायसामग्र्याः भट्टेनाऽनङ्गीकृतत्वात्तस्याः स्वमते अप्रसिद्धिर्दत्तेति भावः। कश्चित् इति। कश्चिद् विद्वान् तादृशविशेषणवैयर्थ्यंऽस्वरसं सूचयति। नासिकास्पर्शमिति। ज्ञानग्राहकसामग्रीजन्यग्रहस्य ज्ञानग्रहत्वेन निवेशापेक्षया तादृशसामग्रीजन्यग्रहत्वेन निवेशे गौरवमित्याशयेनाह—शिरोवेष्टनेन नासिकास्पर्शमिति। यथा—साक्षात् नासिकास्पर्शापेक्षया शिरोवेष्टनेन नासिकास्पर्शे गौरवं स्पष्टमेव। प्रथमविप्रतिपत्तावपि इति। ज्ञानप्रामाण्यं तदप्रामाण्याग्राहकयावज्ज्ञानग्राहकसामग्रीग्राह्यं न वेति विप्रतिपत्तौ इत्यर्थः। तथा सति—मिश्रमतस्य सम्यक्त्वे। ज्ञानप्रामाण्यमिति। पक्षीभूतज्ञानप्रामाण्यमित्यर्थः।

तत्प्रामाण्याविषयकत्वेन ज्ञानविषयकत्वेन यो भट्टमतसिद्धस्तदन्यो यावान् विशिष्टोऽविशिष्टो ज्ञानग्रहस्तद्विषयो न वेति निष्कृष्टमर्थं वक्ष्यति—स्वाश्रये-त्यादिना ।

---

तृतीयविप्रतिपत्त्यनुरोधेन च तदितरप्रामाण्यपरत्वमिति विरोधाच्च । एवं ज्ञानं गुण इत्यादिशाब्दबोधसामग्रीनारणाय प्रामाण्याग्राहकत्वेनेत्यादिरूपाप्रामाण्याग्राहकत्वस्य तृतीयविप्रतिपत्तावपि अवश्यं विवक्षणीयतया दुर्वार एवोभयाविशेषः । यश्च स्वाश्रये ज्ञानत्वप्रवेशाभ्यां मिश्राभिहितो विशेषः सोऽप्यसङ्गतः, प्रयोजनसत्त्वे उभयत्रैव तत्प्रवेशावश्यकत्वात्तदसत्त्वे उभयत्रैव तदप्रवेशादित्यालोच्य तृतीयविप्रतिपत्तौ ग्राहक-पदस्य गृह्णाति=विषयीकरोति इति व्युत्पत्त्या ग्रहपरत्वम्, गृह्यत इत्यस्य च विषयी-क्रियत इत्यर्थपरत्वमभिसन्धाय तृतीयविप्रतिपत्तेरेव सामग्र्यघटितसाध्यपरत्वमाह—तत्प्रामाण्येति । विशिष्टोऽविशिष्टो वेत्यस्य विषयबाधग्रहाभावेनेत्यादिः । पूर्ववत् मत-भेदेन विकल्पः ।

ननु तत्र यावत्पदाश्रवणात् कुतो ज्ञानग्रहे यावत्त्वलाभः, न चैवकारादेव तल्लाभः । एवकारस्य यावत्पदसमानार्थकत्वविरहात् । न च विशेषणसङ्गतैवकारस्य अयोगव्यव-च्छेदार्थकतया शङ्खः पाण्डुर एवेत्यादौ यथा यावच्छङ्खे पाण्डुरत्वबोधः तथाऽत्रापि यावद्ग्रहे प्रामाण्यग्राहकत्वबोधनिर्वाह इति वाच्यम् । शङ्खः पाण्डर एवेत्यादौ पाण्डर-त्वस्य शङ्खविशेषणतया पाण्डरत्वे शङ्खनिष्ठाऽभावाप्रतियोगित्ववत् प्रामाण्यविशेषण-ग्राह्यताबोधकपदसमभिव्याहृतैवकारात् ।

---

तृतीयविप्रतिपत्त्यनुरोधेन इति । 'स्वाश्रयग्राहकेण गृह्यते एव न वा' इत्याकारक-विप्रतिपत्त्यनुरोधेनेत्यर्थः । दीधितौ—तत्प्रामाण्याविषयकत्वेनेति । तस्मिन् प्रामाण्यं तदविषयकत्वेनेति यौगिकव्युत्पत्त्या ज्ञाननिष्ठप्रामाण्याविषयकत्वेनेत्यर्थः । विकल्प इति । सत्त्वाऽसत्त्वसाधारणः । अत एव विविधः कल्पः, विभिन्नः कल्पः, पक्षान्तरबोधको वा शब्दो विकल्पः । यथा व्रीहिभिर्यजेत, यवैर्वा यजेत इत्यत्र । तल्लक्षणञ्च—शब्दज्ञानानु-पाती वस्तुशून्यो विकल्पः । तथैव मतभेदेन पूर्वंक्तो विकल्पोऽत्रानुसन्धेयः । एवकार-स्येति । एवकारस्त्रिविधः—( १ ) विशेषणसङ्गत एवकारः, ( २ ) विशेष्यसङ्गतः, ( ३ ) क्रियासङ्गतश्च । ( १ ) प्रथमो यथा—अयोगव्यवच्छेदलक्षणलक्षित एवकारः 'शङ्खः पाण्डुर एव' इत्यत्र पाण्डुररूपविशेषणसङ्गत एवकारः शङ्खत्वावच्छेदेन पाण्डुर-त्वायोगव्यवच्छेदो ज्ञायते । ( २ ) द्वितीयश्च अन्ययोगव्यवच्छेद एवकारो यथा—पार्थ एव धनुर्धरः इत्यनेन पार्थान्यस्मिन् धनुर्धरत्वव्यवच्छेदो बुध्यते । ( ३ ) तृतीये च अत्यन्तायोगव्यवच्छेदो ज्ञायते । यथा—नीलं सरोजं भवत्येव । अत्र तृतीय अत्यन्ता-योगव्यवच्छेदश्च अन्वयितावच्छेदकसरोजत्वसामानाधिकरण्येन सरोजनीलभवनकर्तृत्व-रूपः विदाङ्क्रियते ।

अथवा नीलं सरोजं भवत्येव इत्यत्र अन्वयितावच्छेदकसरोजत्वसामानाधिकरण्येन

यथा च तस्मादयमर्थो लभ्यते तत्रैवकारार्थविवेचने प्रपञ्चितमस्माभिः। केचित्तु तत्र ग्राहकं यावत्त्वेन विशेषणीयम्। एवकारश्च प्रामाण्यमात्रस्य तथात्वलाभायेत्याहुः।

---

प्रकृते स्वाश्रयग्रहविषयतायामेव प्रामाण्यत्वव्यापकतालाभसम्भवेन विवक्षितस्य प्रामाण्यग्राहकत्वे स्वाश्रयग्रहत्वव्यापकत्वस्यालाभात्। सरोजेन नीलेन भूयत एवेत्यादौ क्रियासङ्गतैवकारेण अत्यन्तायोगव्यवच्छेदस्यैव प्रत्यायनात् प्रकृतेऽपि एवकारस्य क्रियासङ्गततया अयोगव्यवच्छेदबोधकत्वासम्भवाच्च इत्याशङ्कां परिहरति—यथा चेति। एवकारार्थविवेचन इति। ज्ञानमर्थं गृह्णात्येवेतिवत् ज्ञानं रजतं गृह्णात्येवेति अप्रयोगात् ग्रहणादिरूपार्थवाचकधातुसमभिव्याहृतेनापि एवकारेण अयोगव्यवच्छेद एव प्रत्याय्यते।

ज्ञानमर्थं गृह्णात्येवेत्यादौ कर्तृप्रत्ययस्थले कर्त्तरि ज्ञाने यथा क्रियाकर्तृत्वायोगव्यवच्छेदः प्रतीयते, तथा ज्ञानेनार्थो गृह्यत एवेत्यादौ कर्मप्रत्ययस्थले विशेषणविशेष्यभाववैपरीत्येऽपि विशेषणीभूते कर्तरि अविशेषणस्यापि क्रियाकर्तृत्वस्याऽयोगव्यवच्छेदः प्रतीयते, न तु विशेष्यकर्मणि विशेषणीभूततत्तत्कर्तृकक्रियाकर्मत्वायोगव्यवच्छेदः, ज्ञानग्राह्यत्वायोगस्याऽप्रसिद्धेः।

विशेषणे विशेष्यनिष्ठाभावप्रतियोगित्वव्यवच्छेदस्य अयोगव्यवच्छेदरूपत्वेऽप्रसिद्धिविरहेऽपि उक्तस्थले तद्बोधस्वीकारे ज्ञानग्राह्यत्वे रजतत्वव्यापकताया अबाधेन ज्ञानेन

---

सरोजे नीलभवनकर्तृत्वाऽत्यन्तायोगव्यवच्छेदो बुध्यते इति। इदञ्च सम्भवाभिप्रायेणोक्तम्।

प्रकृते इति। प्रकृतत्वम्=प्रकरणप्राप्तत्वम्, आहोस्वित् उद्देश्यत्वमेव प्रकृतत्वम्। अथवा प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितप्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकारताघटिते हेत्वाभासलक्षणे ह्रदो वह्निमान् धूमादित्यत्र पक्षतावच्छेदकीभूतह्रदत्वस्य साध्यतावच्छेदकीभूतवह्नित्वस्य च प्रकृतत्वं विज्ञेयम्।

एवकारार्थविवेचने इति। ज्ञानमर्थं गृह्णात्येव, अत्र च एवकारः क्रियासङ्गतत्वेन अत्यन्तायोगव्यवच्छेदरूप एव विज्ञेयः। एवम्—नीलं सरोजं भवत्येव इत्यत्रापि क्रियासङ्गतः—अत्यन्तायोगव्यवच्छेदात्मक एवकारः।

स च अन्वयितावच्छेदकसरोजत्वसामानाधिकरण्येन सरोजनीलभवनकर्तृत्वाऽत्यन्तायोगव्यवच्छेदरूपेणाऽनुभूयते। अथवा सरोजनीलत्वात्यन्तायोगो व्यवच्छिद्यते।

रघुनाथशिरोमणिस्तु सर्वत्र अन्ययोगव्यवच्छेदेनैवोपपत्तौ अयोगव्यवच्छेद-अत्यन्तायोगव्यवच्छेदौ नाङ्गीकार्यौ इति ब्रूते।

गादाधर्याम्—अयोगव्यवच्छेद इति। स च द्विविधः—केवलायोगव्यवच्छेदः, अत्यन्तायोगव्यवच्छेदश्च। यत्राऽन्वयितावच्छेदकसामानाधिकरण्यमात्रेणाऽयोगव्यवच्छेदो ज्ञायते तत्रात्यन्तायोगव्यवच्छेदो बोध्यते, यथा—नीलं सरोजं भवत्येव, इत्यादिस्थलेषु इति।

ज्ञानग्राह्यत्वे रजतत्वव्यापकताया इति। रजतत्वसमानाधिकरणात्यन्ताभावप्रति-

रजतं गृह्यत एवेत्यादिप्रयोगापत्तेर्दुर्वारत्वात् । एतज्ज्ञानग्राह्यत्वेऽर्थत्वव्यापकताविरहेण एतज्ज्ञानेनार्थो गृह्यत एवेत्यादिप्रयोगानुपपत्तेश्च । एवं च प्रकृतेऽपि प्रामाण्यग्राहकत्वे स्वाश्रयग्रहत्वव्यापकत्वं प्रत्येतव्यम् इति विवक्षितार्थलाभः । तद्बोधो यथाकथञ्चिदुपपादनीय इति भावः ।

अत्रापि विशेष्यतावच्छेदकावच्छेदेन विशेषणायोगव्यवच्छेद एवकारेण प्रत्याय्यत इत्यभिमानिनां यावत्पदपूरणेन सिद्धसाधनं वारयतां मिश्राणां मतमुपन्यस्यति—केचित्तु इति । यावत्त्वेन विशेषणीयम् इति ।

नन्वेवमेवकारवैयर्थ्यमत आह—एवकारश्चेति । प्रामाण्यमात्रस्य तथात्वलाभाय= पक्षतावच्छेदकप्रमापदप्रवृत्तिनिमित्तत्वावच्छेदेन साध्यवत्त्वलाभाय । तत्सामानाधिकरण्यमात्रेण साध्यसाधने योगिज्ञानादिमात्रवृत्तिप्रामाण्यविशेषे अंशतः सिद्धसाधनापत्तिरिति भावः । अत्र च प्रमापदप्रवृत्तिनिमित्तत्वेन पक्षत्वे साध्यस्य स्वत्वघटितत्वेन अननुगमेनांशतो बाधः । उपदर्शितैवकारव्युत्पत्त्यैव ग्राहकस्य यावत्त्वलाभे यावत्पदपूरणं चानुचितमित्यस्वरसः ।

ज्ञानं गुण इति शाब्दबोधादिना प्रामाण्याऽग्रहाद् बाधस्य वारणाय ओदनकामकर्तव्यताबोधविषयः पाक इत्यादिशाब्दबोधे पदानुपस्थितस्य ओदनसाधनत्वाविज्ञानस्य योग्यताबलादन्वयितावच्छेदकतया भाने तादृशशाब्दबोधे तज्ज्ञानप्रामाण्याग्रहाद् बाधस्य

---

योगितानवच्छेदकधर्मवत्त्वरूपव्यापकत्वस्य ज्ञानग्राह्यत्वे सत्त्वान्न दोषः । अत्र व्यापकत्वस्येयं व्युत्पत्तिरस्ति—विशेषेणाऽऽप्नोति=प्राप्नोतीति व्यापकः, तस्य भावस्तत्ता इति व्यापकता । अत्र ( वि, आप, ण्वुल् ) इत्येवंरूपेण रजतत्वनिष्ठव्याप्यतानिरूपितव्यापकताया भानं भवति रजतग्राह्यत्वे । व्यापकत्वञ्च व्याप्तिकर्तृत्वम्, व्याप्तिनिरूपकत्वम् ।

उदाहरणार्थं यथा—पर्वतो वह्निमान् धूमात् इत्यत्र धूमेन वह्निसाधने वह्नौ धूमनिष्ठव्याप्यतानिरूपितव्यापकता निश्चीयते । सा च धूमसमानाधिकरणाऽत्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वरूपा बोध्या । तादृशानवच्छेदकीभूतं प्रमेयत्वम् आदाय तेन रूपेण व्याप्यीभूतस्य धूमादेर्व्यापकत्वापत्तिः स्यादतो भेदघटितं व्यापकत्वं निवेशनीयम् । अर्थात् स्वसमानाधिकरणाऽन्योन्याभावप्रतियोगितानवच्छेदकत्वमेव व्यापकत्वं वक्तव्यम् । स्वपदं व्याप्यपरम्, यथा धूमादिः । तथा च धूमसमानाधिकरणो योऽन्योन्याभावः—घटवान्न इत्याकारकोऽन्योन्याभावस्तत्प्रतियोगितानवच्छेदकत्वस्य वह्नौ सत्त्वेन व्यापकत्वं सूपपन्नं भवति । तथैव प्रकृतेऽपि विज्ञेयम् ।

बाधस्य—ज्ञानं गुण इति वाक्यजन्यशाब्दबोधस्यापि तादृशयावद्ग्रहान्तर्गततया तद्विषयत्वस्य प्रमात्वेऽसत्त्वादिति भावः । तादृशशाब्दबोधे ओदनसाधनताज्ञानविषयः पाक इति शाब्दबोधे । तज्ज्ञानप्रामाण्याग्रहादिति । ओदनसाधनताज्ञाननिष्ठौदनसाधनत्ववति ओदनसाधनत्वप्रकारकज्ञानत्वरूपप्रामाण्याग्रहादित्यर्थः । बाधस्य च पदानुपस्थितस्य भट्टमते शाब्देऽभानेन तादृशशाब्दसामग्र्या ज्ञानग्राहकत्वेन भट्टमता-

अन्ये तु तत्प्रामाण्याग्राहकत्वेन यदुभयवादिसिद्धं तद्भिन्नत्वमग्राहकान्तार्थः।

---

च वारणाय अवलम्बितं मतमन्येषामुपन्यस्यति—अन्ये तु इति। तत्प्रामाण्याग्राहकत्वेन तत्प्रामाण्यग्रहाजनकत्वेन, उभयवादिसिद्धं नैयायिकमीमांसकोभयवादिसिद्धम्, अग्राहकान्तार्थः—सामग्र्यां विशेषणमिति शेषः। व्यवसायानुव्यवसायसामग्र्योः प्रामाण्याग्राहकत्वेन नैयायिकसिद्धतया तत्सङ्ग्रहायोभयसिद्धत्वनिवेशः। गुरुमतसिद्धाया दर्शितकाम्यसाधनताज्ञानादिविषयकसामग्र्याः प्रामाण्याग्राहकतया गुरुनैयायिकोभयसिद्धतया न तत्सङ्ग्रहः।

न च शब्दाजन्यतादृशोपस्थितेः नैयायिकमते शाब्दसामग्र्यामप्रविष्टतया तद्घटित-

---

सिद्धतया तादृशसामग्रीजन्यग्रहविषयत्वस्य तादृशप्रमात्वे विरहादिति भावः। दीधितौ—तत्प्रामाण्याग्राहकत्वेनेति। तथा च तत्प्रामाण्याग्राहकत्वेन नैयायिकमीमांसकोभयसिद्धा या सामग्री तद्भिन्नत्व अनुयोगिभूतसामग्र्यां विशेषणमिति भावः। तादृशोभयसिद्धसामग्रीभिन्नज्ञानग्राहकसामग्रीजन्यग्रहविषयत्वं फलितम्। अनुव्यवसायसामग्र्याः प्रामाण्याग्राहकत्वेन नैयायिकमतसिद्धत्वेऽपि मिश्रमतासिद्धत्वात् मिश्रमते तस्याः प्रामाण्यग्राहकत्वात् नैयायिकमीमांसकोभयसिद्धभिन्नत्वात्तत्सङ्ग्रहः। एवं गुरुमतसिद्धव्यवसायसामग्र्याः भट्टमतसिद्धज्ञाततालिङ्गकानुमितिसामग्र्याश्च प्रामाण्याग्राहकत्वेन नैयायिकमतसिद्धत्वेऽपि नैयायिकमीमांसकोभयसिद्धभिन्नतया तयोः सङ्ग्रहः। घटज्ञानशाब्दसामग्र्याश्च तत्प्रामाण्याग्राहकत्वेन नैयायिकमीमांसकोभयसिद्धतया न तत्सङ्ग्रहः। ओदनकामकार्यताज्ञानविषयः पाक इत्याकारकौदनसाधनताज्ञानविषयकशाब्दसामग्र्या योग्यताज्ञानघटितायाः गुरुमतसिद्धाया अपि ओदनसाधनताप्रामाण्याग्राहकत्वेन नैयायिक'भट्ट'-मीमांसकोभयसिद्धतया न तादृशसामग्रीमादाय बाधः। प्रामाण्याग्राहकत्वेन नैयायिकसिद्धभिन्नत्वनिवेशे त्वाह—व्यवसायानुव्यवसायसामग्र्योरिति। तत्सङ्ग्रहाय व्यवसायानुव्यवसायसामग्रीसङ्ग्रहाय। उभयसिद्धत्वनिवेश इति। तथा चोभयसिद्धभिन्नत्वात्तत्सङ्ग्रहः। न च तत्प्रामाण्याग्राहकत्वेन मीमांसकसिद्धभिन्नत्वमेव निवेश्यतामिति वाच्यम्। एकैकमीमांसकग्रहणे अनुव्यवसायादिसामग्रीणां गुरुमते प्रामाण्याग्राहकत्वेन गुरुमतसिद्धभिन्नत्वाभावादसङ्ग्रहापत्तेः। प्रामाण्याग्राहकत्वेन सकलमीमांसकसिद्धभिन्नत्वनिवेशेऽनुव्यवसायादिसामग्रीणां सङ्ग्रहसम्भवेऽपि यथासन्निवेशे न वैयर्थ्यमिति ध्येयम्। ज्ञानादौ द्रव्यत्वभ्रमजनकसामग्र्याः अन्यथाख्यातिसामग्र्याः गुरुमतासिद्धतया तदुभयभिन्नत्वात्, तादृशसामग्रीजन्यग्रहविषयत्वस्य प्रमात्वे बाधवारणाय तदभाववति तत्प्रकारको यस्तद्ग्राहकत्वं सामग्र्यां विशेषणीयम्। अत्र प्रमात्वानुमितिसामग्र्याः प्रामाण्याग्राहकत्वेन तदुभयसिद्धभिन्नत्वान्मीमांसकमते अर्थान्तरं, नैयायिकमते सिद्धसाधनमिति विभावनीयम्।

तादृशज्ञानोपस्थितेः ओदनसाधनताज्ञानोपस्थितेः तद्घटितशाब्दसामग्री तादृशोप-

यदा ययोर्विवादस्तदा तात्पर्यवशात्तदुभयपरमुभयपदम्। अतो नाननुगमो दोषाय। नैयायिकासिद्धया ज्ञातताघटिततत्प्रत्यक्षजनकसामग्र्या प्रामाण्याग्रहात् ज्ञानग्राहकेति।

शाब्दसामग्री न नैयायिकमतसिद्धेति कथं तद्वारणमिति वाच्यम्। तादृशोपस्थितिघटितकारणस्तोमस्य शाब्दसामग्रीत्वेन नैयायिकासिद्धत्वेऽपि प्रामाण्याग्राहकत्वेन तत्सिद्धत्वात्।

नन्वत्र मीमांसकसामान्यं यः कश्चन वा निवेश्यते ? आद्ये व्यवसायानुव्यवसायसामग्र्योर्गुरुमिश्रमते सङ्ग्रहानुपपत्तिः। प्रथमायाः प्रामाण्याग्राहकतया मिश्रभट्टानुमततया द्वितीयायाश्च तथात्वेन गुरुमतसम्मतत्वेन मीमांसकसिद्धत्वावच्छिन्नभेदाभावात्।

द्वितीये च सप्तमपदार्थरूपबाधाद्यभावघटितज्ञानानुमित्यादिविशेषसामग्र्याः प्रामाण्याग्राहकत्वेन गुरुमतसिद्धभिन्नतया प्रामाण्यस्य तया अग्रहेण भट्टमते बाध इत्यत आह—यदा ययोरिति। अतः तात्पर्यभेदात्, अननुगमः अनुगतरूपेण मीमांसकानुपादानम्। न दोषायेत्यन्वयः। विवादभेदेन साध्यभेदस्वीकारे क्षतिविरहात् शब्दैक्यमात्रस्यानपेक्षितत्वात् सामग्रीपदार्थाननुगमेनार्थभेदस्य दुष्परिहरत्वादिति भावः।

स्थितिघटितशाब्दसामग्री, इति तदुभयभिन्नत्वात्, तद्वारणं तादृशोपस्थितिघटितशाब्दसामग्रीवारणं, तत्सिद्धत्वात् नैयायिकमतसिद्धत्वात्।

अत्र तदुभयवादिसिद्धमित्यत्र, मीमांसकसामान्यं वा—अस्य निवेश्यते इत्यनेनान्वयः। आद्ये मीमांसकसामान्यसिद्धभिन्नत्वे, व्यवसायसामग्र्याः गुरुमते सङ्ग्रहानुपपत्तिः, एवमनुव्यवसायसामग्र्याः मिश्रमते सङ्ग्रहानुपपत्तिः। प्रथमायाः व्यवसायसामग्र्याः। मिश्रभट्टानुमततयेति। अस्य मीमांसकसिद्धत्वावच्छिन्नभेदाभावादित्यनेनान्वयः। मीमांसकसिद्धत्वस्यैव सत्त्वादिति भावः। द्वितीयायाः अनुव्यवसायसामग्र्याः, तथात्वेन प्रामाण्याग्राहकत्वेन।

ननु ज्ञातताលिङ्गकानुमितिसामग्र्याः भट्टमते सङ्ग्रहानुपपत्तिः, तस्याप्रामाण्याग्राहकत्वेन गुरुमिश्रानुमततया मीमांसकसिद्धत्वावच्छिन्नाभेदाभावादित्यपि कथं नोक्तमिति चेत्। गुरुमिश्रमते ज्ञाततालिङ्गकानुमितिसामग्र्यां प्रामाण्याग्राहकत्वस्य सत्त्वेऽपि तयोर्मते ज्ञातताथाः शशविषाणायमानतया ज्ञाततालिङ्गकानुमितेरपि शशविषाणायमानतया ज्ञाततालिङ्गकानुमितिसामग्र्याः गुरुमिश्रमतासिद्धत्वं विशेष्याभावप्रयुक्तां ज्ञाततालिङ्गकानुमितिसामग्र्याः प्रामाण्याग्राहकत्वेन भट्टमतसिद्धत्वं नास्ति इति तत्र प्रामाण्याग्राहकत्वेन मीमांसकमतसिद्धत्वसामान्याभावः सुलभः। विशेषणाभावप्रयुक्तः। व्यवसायानुव्यवसायसामग्र्योस्तु प्रामाण्याग्राहकत्वे भट्टमतसिद्धत्वमेवेति।

द्वितीये च यः कश्चननिवेशे, च ज्ञानानुमित्यादिविशेषसामग्र्याः ज्ञानवान् इच्छावत्त्वादित्याद्यनुमितिसामग्र्या। गुरुमतसिद्धभिन्नतयेति। यत्किञ्चिन्मीमांकसिद्धभिन्नतयेति भावः। अनुमितौ बाधनिश्चयाभावः कारणम्। अभावश्च गुरुमते नातिरिक्तः किन्तु अधिकरणरूपः। एवं च सर्वासामनुमितीनां सामग्र्यां बाधाद्यभावप्रवेशादनुमिति-

न च ज्ञानं द्रव्यमित्यन्यथाख्यातिसामग्र्या प्रामाण्याग्रहादुक्तयावत्सामग्रीग्राह्यत्वाभावरूपपरतस्त्वसाधने सिद्धसाधनमिति वाच्यम् ।

---

ज्ञानग्राहकत्वरूपविशेष्यांशसार्थक्योपपत्तये नैयायिकोपादानमिति दर्शयति—नैयायिकेति । ज्ञाततया भट्टमतसिद्धत्वेऽपि नैयायिकासिद्धतया उभयासिद्धत्वमाविष्कर्तुं नैयायिकासिद्धत्वाभिधानम् । तादृशज्ञाततताघटितत्वेन तत्प्रत्यक्षसामग्र्या उभयाद्यसिद्धत्वलाभः । प्रामाण्याग्रहादिति । बाधवारणायेति शेषः । भट्टेन समं विवादे प्रामाण्याग्राहकत्वेन तन्मतमात्रासिद्धत्वनिवेशे बाधाप्रसक्त्या ज्ञानग्राहकत्वोपादानमनर्थकमापद्येतेति भावः ।

अन्यथाख्यातिसामग्र्येति । गुरुमतासिद्धत्वेन उभयमतसिद्धभिन्नतयेति शेषः । सिद्धसाधनम् = अर्थान्तरम् । नैयायिकसिद्धतादृशान्यथाख्यातिसामग्र्याः प्रामाण्याग्राहकतयैव तन्मते उक्तपरतस्त्वसत्त्वेन चरितार्थतया गुरुणा समं विवादे तस्याः प्रामाण्याग्राहकत्वासिद्धिरिति यावत् । न तु सिद्धसाधनं यथाश्रुतमेव । गुरुणा प्रामाण्याविषयकग्रहत्वेन तादृशपरतस्त्वाभ्युपगमाऽसम्भवात् ।

अथैवमपि अनुव्यवसायसामग्र्या गुरुमतासिद्धतया प्रामाण्याग्रहात् अर्थान्तरस्य वक्ष्यमाणविशेषणेनापि वारणासम्भवादसङ्गतिः । यदि चाऽनुव्यवसायस्य ज्ञानप्रत्यक्षत्वेन तत्सामग्र्यास्तत्प्रत्यक्षसामग्रीत्वेन गुरुमतसिद्धत्वमस्त्येवेति मन्यते, तदा तादृशसामग्रीत्वेन तस्याः प्रामाण्यग्राहकत्वमपि गुरोरनुमतमिति प्रामाण्याग्राहकत्वेन तन्मतासिद्धत्वं दुरपह्नवमेव ।

---

सिद्धभिन्ना इति ज्ञानानुमितिसामग्री अपि गुरुमतसिद्धभिन्नैवेति । अभावस्याधिकरणतावादिगुरुमते बाधाभावघटितज्ञानानुमितिसामग्र्या अप्रामाण्याग्राहकत्वेन गुरुमतासिद्धत्वात् । तया ज्ञानानुमितिसामग्र्या, ज्ञानग्राहकत्वरूपविशेष्यांशसार्थक्योपपत्तये, ज्ञानग्राहकत्वरूपस्य तादृशसामग्रीभेदविशेष्यतावच्छेदकस्य सार्थक्याय । नैयायिकोपादानमिति । नैयायिकसिद्धभिन्नत्वोपादानमित्यर्थः । भट्टमतसिद्धत्वेऽपीति । मीमांसकमतसिद्धभिन्नत्वाभावेऽपीत्यर्थः । नैयायिकासिद्धतया नैयायिकमतसिद्धभिन्नतया, उभयासिद्धत्वमाविष्कर्तुं नैयायिकभट्टमतसिद्धोभयभिन्नत्वप्रदर्शनाय, तत्प्रत्यक्षसामग्र्या ज्ञातताप्रत्यक्षसामग्र्या, उभयाद्यसिद्धत्वलाभः नैयायिकभट्टमतोभयसिद्धभिन्नत्वलाभः, तन्मतमात्रासिद्धत्वनिवेशे भट्टमतमात्रासिद्धत्वनिवेशे, मात्रपदेन नैयायिकमतव्यावृत्तिः ।

अन्यथाख्यातीति । अन्याख्यातिर्भ्रमः, स च यस्य यद्धर्मवत्त्वेन ज्ञानमुचितं तस्य तद्भिन्नधर्मेण ज्ञानम् । तच्च विशिष्टमेकं ज्ञानप्रवर्तकत्वात् इति नैयायिका न वदन्ति । मीमांसकादयस्तु तत्र नैकं विशिष्टज्ञानमपि तु ज्ञानद्वयमेवास्ति 'ह्रदं ज्ञानम् एकम्, वह्निज्ञानञ्चापरम्' । असंसर्गाग्रहरूपबाधनिश्चयाभावरूपकारणवशाच्च तयोर्विशिष्टज्ञानकार्यकारिता । ह्रदरूपे पक्षे पक्षातिरिक्ते वा वह्नेर्बाधनिश्चये जाते न तत्र वह्निं साधयितुं कश्चित् प्रवर्तते अतोऽसंसर्गाग्रह एव तत्प्रवर्तक इति ध्येयम् । तदभावे तदभावज्ञाने अप्रवृत्तिस्तु सुतरामेवेति भावः । तन्मते नैयायिकमते, गुरुणा प्रभाकरेण, तस्याः

यदि च मनःसंयुक्तसमवायादिसमुदायत्वेन प्रामाण्याग्राहकत्वं तस्यां गुरुणा स्वीक्रियत इति न तादृशानुव्यवसायसामग्र्याः प्रामाण्याग्राहकत्वेन गुरुमतासिद्धत्वमित्युच्यते तदा उक्तान्यथाख्यातिसामग्र्या दोषादिरूपाया ज्ञानसामग्रीत्वादिना गुरुमतासिद्धत्वेऽपि दोषादिघटितसमुदायत्वादिना प्रामाण्याग्राहकत्वं तस्या गुरुमतासिद्धमेवेति कथमियमाशङ्का ?

यदि च व्यवसायसामग्र्या अपि प्रामाण्याविषयकज्ञानजनकसामग्रीत्वादिना प्रामाण्याग्राहकत्वस्य गुर्वादिमतसिद्धतया तज्ज्ञानव्यक्त्युत्पादकसामग्रीत्वेन प्रामाण्याग्राहकत्वाभ्युपगमविषयभिन्नत्वमवश्यं विवक्षणीयमिति शङ्कासङ्गतिः, अन्यथाख्यातिजनकसामग्र्या दोषादिघटितायास्तेन रूपेण गुरुणानभ्युपगमेन तद्वारणासम्भवात् । नैयायिकसिद्धधर्मिज्ञानतदनन्तरजातबोध्यस्मरणरूपज्ञानद्वयोत्तरान्यथाख्यातिस्थले तादृशज्ञानद्वयस्यैव गुरुणा भ्रमत्वस्वीकारात् । एकतरव्यक्तिसामग्रीत्वस्य न्यायमतसिद्धान्यथाख्यातिकारणकलापे असत्त्वात् तादृशकारणकलापस्य न्यायमते गुरोस्तादृशाभ्युपगमविषयत्वाभावादित्युच्यते । तदा अनुव्यवसायसामग्र्या अपि व्यवसायरूपतया स्वीकृतज्ञानग्रहव्यक्तिसामग्रीत्वेन प्रामाण्याग्राहकरूपाया एव गुरुणाङ्गीकारात् तदग्राह्यतयाऽर्थान्तरेण व्यवसायसामग्र्याः प्रामाण्याग्राहकत्वासिद्धिर्दुर्वारैवेति ।

---

सामग्र्याः, अनुव्यवसायस्य घटमहं जानामीत्याकारकस्येत्यर्थः । तत्सामग्र्याः अनुव्यवसायसामग्र्याः, तन्मतासिद्धत्वं गुरुमतासिद्धत्वम् ।

इत्थञ्चाभ्युपगमे धर्मितावच्छेदकनिवेशानन्तरमेव शङ्कां सङ्गमयति—यदि चेति । मनःसंयुक्तसमवायादिसमुदायत्वेनेति । तादृशसमुदायात्मकसामग्रीत्वेनेत्यर्थः । प्रामाण्याग्राहकत्वं प्रामाण्यविषयकग्रहाजनकत्वम्, तस्यां सामग्र्याम्, गुरुणा प्रभाकरेण, शङ्कायाः प्रागुक्तायाः सर्वथा तुच्छत्ववारणाय—ज्ञानसामग्रीत्वादिनेति । आदिना ज्ञानग्राहकसामग्रीत्वपरिग्रहो बोध्यः । इदमत्रावधेयम्—ज्ञानस्यातीन्द्रियतया प्रत्यक्षानर्हत्वेन ज्ञानजन्यज्ञाततालिङ्गकानुमितिकारणीभूता सामग्र्येव ज्ञाननिष्ठप्रामाण्यनिश्चयजनिका भवतीत्यत्रैव भट्टानां तात्पर्यं विज्ञेयम् । नैयायिकानां नये ज्ञाननिष्ठप्रामाण्यम् इदं ज्ञानं प्रमा समर्थप्रवृत्तिजनकत्वात् इत्यनुमानेन गृह्यते । अत्रायं सङ्ग्रहः—

'प्रमाणत्वाप्रमाणत्वे स्वतः सांख्याः समाश्रिताः ।
नैयायिकास्ते परतः सौगताश्चरमं स्वतः ॥
प्रथमं परतः प्राहुः प्रामाण्यं वेदवादिनः ।
प्रामाण्यं तु स्वतः प्राहुः परतश्चाप्रमाणताम्' ॥

एवं नैयायिकनये अप्रमात्वमपि परत एव अनुमानादिना गृह्यते उत्पद्यते च ।

इदानीं पूर्वोक्ताभ्युपगमे धर्मितावच्छेदकं निवेश्य शङ्कां सङ्गमयति—यदि चेति । व्यवसायसामग्र्या इति । अयं घट इत्याकारकव्यवसायात्मकप्रत्यक्षज्ञानीयमनःसंयोगादिरूपायाः सामग्र्या इत्यर्थः । प्रामाण्याविषयकज्ञानजनकसामग्रीत्वेनेति । प्रामाण्याविषयकं यज्ज्ञानम् अयं घट इत्याकारकं तादृशज्ञानजनकसामग्रीत्वेनेत्यर्थः । अन्यथा-

व्यधिकरणप्रकारकाजनकत्वेन सामग्रीविशेषणात्। पूर्वोक्तदिशाऽत्रापि निष्कर्षो बोध्य इत्याहुः।

इति प्रथमा विप्रतिपत्तिः।

---

मैवम्—अनुव्यवसायसामग्र्याः प्रामाण्याग्राहकत्वसिद्धावपि ज्ञानस्य स्वप्रकाशतानिराकर्त्तृणां नैयायिकानां प्राथमिकज्ञानग्राह्यत्वरूपस्वतस्त्वस्य प्रामाण्ये निराकरणेन उद्देश्यसिद्धेः। अन्यथा व्यवसायसामग्र्या न्यायमते ज्ञानग्राहकत्वरूपविशेषणानाक्रान्ततया तस्याः साध्याघटकत्वेन तदग्राह्यतायाः कथञ्चिदपि निराकरणायोगेन समीहितासिद्धेर्वज्रलेपायितत्वात्।

व्यधिकरणप्रकारकाजनकत्वेनेति। व्यधिकरणप्रकारकमिच्छादिकं प्रसिद्धमेव तन्मते। न चैवं ज्ञानमिच्छामीति विशिष्टज्ञानसामग्र्या गुरुमतासिद्धतया तदग्राह्यता-

---

ख्यातिजनकसामग्र्या इति। भ्रमकारणीभूतसामग्र्या इत्यर्थः। तेन रूपेणेति। तादृशसामग्रीत्वेन रूपेण। एकतरेति। धर्मिज्ञानोत्पत्तिजनकीभूतसामग्रीत्वस्य धर्मिज्ञानघटिततया ज्ञानं गुण इत्यादिशाब्दबोधव्यक्तिमेव तज्ज्ञानपदेनोपादाय तादृशज्ञानोत्पादकसामग्रीत्वेनोभयमतसिद्धान्यत्वादित्यर्थः। गुरुमते अन्यथाख्यातिः=भ्रमः, समुत्पत्तिजनकीभूतसामग्रीसत्त्वमेव गुरुमतेऽसिद्धम् इति भावः।

व्यवसायसामग्र्या या प्रामाण्याग्राहकत्वासिद्धिरुक्ता तन्न समीचीनम् इत्याशयेनाह—मैवमिति। अनुव्यवसायसामग्र्या इति। अनुव्यवसायो नाम व्यवसायगोचरं प्रत्यक्षम्। यथा घटज्ञानानन्तरं घटमहं जानामि इति मानसं ज्ञानम्। ज्ञाततावभासकं ब्रह्मचैतन्यमिति मायावादिनो वदन्ति। एतादृशानुव्यवसायसामग्र्या इत्यर्थः। एतेन सर्वथोद्देश्यासिद्धिर्नास्तीति सूचितम्। यावदनुव्यवसायसामग्र्याः प्रामाण्याग्राहकत्वे साधनीये यत्किञ्चित्तत्सामग्र्यास्तदग्राहकत्वस्य विरोधित्वादित्यर्थः। एवं स्थिते गुरुप्रभाकरेण सह विवादे समुपस्थिते नैयायिकानामुद्देश्यं नहि सर्वथा सेत्स्यतीत्यत आह—ज्ञानस्येति। इत्थञ्च न्यायनये व्यवसाययोर्भेदव्यवस्थाप्य ज्ञानस्य स्वविषयकत्वनिराकरणेन व्यवसायसामग्र्याः साध्यकुक्षिनिक्षिप्तज्ञानग्राहकत्वनिराकरणादेव प्रामाण्यग्रहजनकत्वरूपोद्देश्यसिद्धिरिति तु परमार्थः। तथैव भट्टेन सह विवादे जाते ज्ञानस्यातीन्द्रियत्वं निरस्य प्राथमिकज्ञानग्राहकग्राह्यतानिरासादुद्देश्यसिद्धेर्निर्वाहान्न दोषः, तथा चोद्देश्यसिद्धिरप्रत्यूहैवेति भावः। वज्रलेपायितत्वादिति। भट्टमतसिद्धभिन्नत्वनिवेशेऽपीयमेव गतिरिति भावः।

व्यधिकरणप्रकारकाजनकत्वेनेति। तत्र व्यधिकरणत्वम्=तदनधिकरणत्वम्, तत्प्रकारकाजनकत्वेनेत्यर्थः। यथा—कपिसंयोगाभावस्य कपिसंयोगाभावप्रतियोगी यः कपिसंयोगस्तद्व्यधिकरणत्वमिति। अथवा तदधिकरणावृत्तित्वमेव व्यधिकरणपदार्थः, तत्प्रकारकाजनकत्वेनेत्यर्थः। यथा पटत्वाभावस्य पटत्वाभावप्रतियोगिभूतपटत्वव्यधिकरणत्वम्। एवं मठत्वाभावस्य मठत्वाभावप्रतियोगिभूतमठत्वव्यधिकरणत्वम्। अन्यत्र

मादाय परतस्त्वसाधने सिद्धसाधनं दुर्वारमिति वाच्यम् । तस्यापि दोषस्य एतन्मतेऽस्वरसबीजत्वात् । अत्रापि निष्कर्ष इति ।

सामग्रीनिवेशस्यानतिप्रयोजनत्वात् प्रामाण्याविषयत्वेन मतद्वयसिद्धभिन्नव्यधिकरणधर्मप्रकारकान्यसकलज्ञानग्रहविषयत्वरूपनिष्कृष्टसाध्योपादानमित्यर्थः । अत्र कल्पे ज्ञानजन्या ज्ञाततेति प्रत्यक्षसामग्र्यग्राह्यतया भट्टमते बाधः । मतत्रये एकरूपेण साध्यत्वानिर्वाहः । न च मतान्तरसामग्र्यननुगमानुप्रयोगस्तुल्यः, फलोत्पत्तिप्रयोजकतावच्छेदकावच्छिन्नत्वेन तदनुगमात् ।

न च प्रत्येकं मीमांसकेन विवादेऽन्यमतासङ्ग्रहो न दोषाय, त्रिभिरेकदा विवादे मीमांसकत्रयस्यैवोपादाने साधारण्यसम्भव इति वाच्यम् । त्रिभिरेकदा विवादे मीमांसकत्वेन त्रयोपादाने गुर्वादिमते प्रामाण्याग्राहकतया मिश्रादिमतसिद्धव्यवसायादिसामग्र्यसङ्ग्रहस्योक्तस्य दुर्वारत्वात् । मीमांसकत्रयत्वेन निवेशे सप्तमपदार्थरूपाभावघटितज्ञानग्राहकसामग्रीविशेषाणां तत्तद्ग्रहजनकत्वेन गुरुमतसिद्धप्रामाण्यग्राहकताकत्वेन पूर्वोक्तदोषवारणेऽपि ज्ञानमतीन्द्रियमित्याद्यनुमितेरन्यथाख्यातिमनङ्गीकुर्वाणेन गुरुणानङ्गीकारात् तत्सामग्र्या मतत्रयसिद्धभिन्नतया भट्टमते व्यधिकरणप्रकाराजनिकया प्रामाण्याग्रहात् तन्मते बाध इत्यादिकमस्वरसबीजं बोध्यम् ।

इति गदाधरभट्टाचार्यविरचिते प्रामाण्यवादे प्रथमा विप्रतिपत्तिः ।

---

दीधितिप्रभृतिग्रन्थेषु साध्यतावच्छेदकसम्बन्धसामान्ये स्वप्रतियोगिप्रतियोगिकत्व-हेत्वधिकरणीभूत-यत्किञ्चिद्व्यक्त्यनुयोगिकत्वोभयाभावस्तत्कत्वमेव व्यधिकरणत्वम्, तत्प्रकारकाजनकत्वेनेत्यर्थः । विशिष्टज्ञानसामग्र्या इति । प्रभाकरः विशेषणज्ञानस्याऽकारणत्वेनोपनीतभानं सर्वथाऽनङ्गीकृतवान् । एतन्मते इति । भट्टमते इत्यर्थः ।

भट्टमते बाध इति । भट्टमते ज्ञानस्यातीन्द्रियत्वेन प्रत्यक्षासम्भवेन ज्ञानजन्यज्ञातताहेतुकानुमितिसामग्री ज्ञाननिष्ठप्रामाण्यनिश्चायिका भवतीति भट्टानां तात्पर्यमित्यर्थः । भट्टमते अयं घट इति ज्ञानेन घटे ज्ञाततानामको धर्मो जन्यते । तदनन्तरमेव पुनः ज्ञातो घट इति प्रत्यक्षं जायते । पुनश्च तया ज्ञाततया ज्ञानं ज्ञाननिष्ठप्रामाण्यश्चानुमीयते । मतत्रये इति । गुरुमते व्यवसायः, भट्टमते ज्ञाततालिङ्गकानुमितिः, मुरारिमिश्रमते चानुव्यवसायः । इत्थञ्च तत्तद्धर्मप्रकारकज्ञानग्राहकसामग्रीजन्यग्रहत्वव्यापकविषयिताप्रतियोगित्वम् इति तु परमार्थः, इदमेव च ज्ञप्तौ स्वतस्त्वमस्ति । यया कारणसामग्र्या ज्ञानं गृह्यते तयैव सामग्र्याऽयं घट इति ज्ञानगतमपि प्रामाण्यं गृह्यते । साध्यत्वानिर्वाह इति । साध्यत्वं नैव निर्वहतीत्यर्थः ।

विवादे इति । विवादे समुपस्थिते सतीत्यर्थः । अन्यमतासङ्ग्रह इति । अन्यमतस्याऽग्रहणम् । त्रिभिः=मीमांसकत्रयेण । एकदा=एककालावच्छेदेन । मीमांसकत्वेन त्रयोपादाने इति । सर्वमते घटमहं जानामि इत्याकारकमेव ज्ञानं ज्ञानग्राहकं वर्तते । ज्ञानस्य स्वस्यैव ज्ञाननिष्ठप्रामाण्यविषयकतया ज्ञानजनकीभूता सामग्र्येव ज्ञाननिष्ठ-

प्रामाण्यनिश्चायिका भवतीति प्राभाकरा वदन्ति । ज्ञानस्यातीन्द्रियतया प्रत्यक्षं न सम्भवतीति ज्ञानजन्यज्ञातताऽलिङ्गकानुमितिसामग्री एव ज्ञाननिष्ठप्रामाण्यग्राहिका भवतीति भट्टाः कथयन्ति । मुरारिमिश्रास्तु स्वोत्तरवर्तिस्वविषयकलौकिकप्रत्यक्षस्य ज्ञाननिष्ठं यत् प्रामाण्यं तादृशप्रामाण्यविषयकत्वेन ज्ञानजन्यस्वविषयकानुव्यवसायात्मकप्रत्यक्षसामग्री स्वनिष्ठप्रामाण्यनिश्चायिका भवतीति भावः । तत्तद्ग्रहजनकत्वेनेति । तज्ज्ञानोत्पादकसामग्रीत्वेनाधिकरणाद्यात्मकाभावगर्भकारणानां प्रामाण्याग्राहकत्वादित्यर्थः । ज्ञानमतीन्द्रियमिति । अन्यथाख्यातिमादाय तज्ज्ञानग्राहकसामग्रीत्वमप्रसिद्धमिति भावः ।

इति श्रीज्वालाप्रसादकृतकृष्णाटीकायां प्रथमा विप्रतिपत्तिः ।

---